श्रीगुरुः शरणम् ॥

सन्याख्यखण्डनखण्डखाद्यस्य

---

# भूमिका

---

अथैष खण्डनखण्डखाद्यनामा ग्रन्थो विद्यासागर्यपरपर्याय-खण्डनफक्किक-त्रिभजन्याख्यया व्याख्यया समलङ्कृतो मुद्रयित्वा प्रकाश्यते ।

अस्य किल प्रणेता सारस्वतसाम्राज्यदीक्षणधुरन्धरः कवितार्किकचूडामणिः श्रीमान् श्रीहर्षोनाम ।

अथाऽस्य विषये किञ्चिद्विचारयामः कोऽयं कस्य पुत्रः कुत्रत्यः कस्मिन् काले कस्य वा महाराजस्य सभामलञ्चकार केवा ग्रन्था अनेन प्रणायिषत, इत्यादि इतिहासरसिकानां प्रमोदमाधातुम् ।

अयं किल श्रीहीरपण्डिततनूजन्मा श्रीमामल्लदेव्यामजनिष्ट, इति नैषधचरिते प्रतिसर्गं समाप्ति श्लोकादवसीयते—

तथाहि—एषश्लोकस्तत्रत्यः—

"श्रीहर्षं कविराजराजिमुकुटालङ्कारहीरः सुतं
श्रीहीरः सुषुवे जितेन्द्रियचयं मामल्लदेवी च यम् ॥
तच्चिन्तामणिमन्त्रचिन्तनफले शृङ्गारभङ्ग्या महा—
काव्ये चारुणि नैषधीयचरिते सर्गोऽयमादिर्गतः ॥"

---

१ अनेन विशेषणेन पितुरप्यसाधारणकवित्वशक्तिसम्पन्नत्व सूच्यते, परमेतत्प्रणीता ग्रन्था· केऽपि नोपलभ्यन्ते नवा श्रूयन्ते तेन नैव केऽपि निर्मिता इति ज्ञायते ।

अयं च कान्यकुब्जेश्वरजयन्तचन्द्राश्रित आसीत्, इति ख-
ण्डनखाद्यस्यसमाप्तिश्लोकेन गम्यते—

"ताम्बूलद्वयमासनं च लभते यः कान्यकुब्जेश्वराद्
यः साक्षात्कुरुते समाधिषु परब्रह्मप्रमोदार्णवम् ॥
यत्काव्यं मधुवर्षि घर्षितपरास्तर्केषु यस्योक्तयः
श्रीश्रीहर्षकवेः कृतिः कृतिमुदे तस्याऽभ्युदीयादियम् ॥"

कान्यकुब्जेश्वरश्च जयन्तचन्द्रोऽनितरसाधारणस्तदानीन्तनो-
महाराजो वाराणस्याधिपतिर्बभूव। यस्य चाऽयमाश्रित आसीत्,
कथमन्यथा तस्मात् ताम्बूलद्वयस्याऽऽसनस्य च लाभो विद्वत्कुलकू-
टामणेरस्य ग्रन्थकर्तुः परमतपत्नैदुष्यमख्यापनसम्मानादिहेतुतया
निबन्धनमर्हेत्।

कान्यकुब्जेश्वरो जयन्तचन्द्रश्च (१२४३) त्रिचत्वारिंशद-
धिकद्वादशशतमितवर्षेऽभूदिति तत्प्रदत्तग्रामस्य दानपत्राऽनुसारेण
निश्चीयते।

तत्रत्यलेखस्य कियानंशोऽत्र समुद्ध्रियते—

"सोऽयं श्रीमज्जयन्तचन्द्रो विजयी अधिकारिपुरुषा-
नाज्ञापयति बोधयत्यादिशति च "विदितमस्तु भवतां यथो-
परि लिखितग्रामः, सजलस्थलः सलोहलवणाकरः सम-
त्स्याकरः सगर्तोषरः सगिरिगहननिधानः समधुकाम्रव-
नवाटिकाविटपतृणयूतिगोचरपर्यन्तः सोर्ध्वाधश्चतुराघाटविशुद्धः
स्वसीमापर्यन्तस्त्रिचत्वारिंशदधिकद्वादशशतवत्सर आषाढे मा-
सि शुक्लपक्षे सप्तम्यां तिथौ रविदिने ( अङ्कतोऽपि
१२४३ आषाढ सुदि रवौ ७ ) अद्येह श्रीमद्वाराणस्यां गङ्गायां
स्नात्वा विधिवन्मन्त्रदेव मुनिमनुजभूतपितृगणाँस्तर्पयित्वा
तिमिरपटलपाटनपटुमहसमुष्णरोचिषमुपस्थायौषधिपतिशकलशेखरं
समभ्यर्च्य त्रिभुवनत्रातुर्भगवतो वासुदेवस्य पूजां विधाय प्रचुर-

पायसेन हविषा हविर्भुजं हुत्वा मातापित्रोरात्मनश्च पुण्ययशोऽभिवृद्धयेऽस्माभिर्गोकर्णकुशलतापूतकरतलोदकपूर्वकभारद्वाजगोत्राय भारद्वाजाङ्गिरसबार्हस्पत्येति त्रिप्रवराय राउत श्रीआदले पौत्राय राउत श्रीढुंढापुत्राय ठोहराउत श्रीअणंगाय चन्द्रार्क यावच्छासनीकृत्य प्रदत्तो मत्वा यथादीयमानभोगभोगकरप्रवणिकरप्रभृतिनियतानियतसमस्तदायादाऽऽज्ञाविधेयीभूय दास्यथ" इत्यादि।"

एतल्लेखदर्शनेन जयन्तचन्द्रस्य समयस्तु निर्णीत एव भवति। जयन्तचन्द्रस्यैव जयचन्द्र इत्यपि नामान्तरम्। अयमेव राठोरवंशीयानां कान्यकुब्जाधिपानामन्तिमो राजा बभूव, यं यवना ईशवीय पञ्चनवत्युत्तरैकादशशताब्द्यां राज्यात्प्रसह्य भ्रंशयाञ्चक्रुः।

खण्डनकृता च विजयप्रशस्तिनामकं गौडोर्वीशकुलप्रशस्तिनामकं च काव्यद्वयं रचितम्। एतद्द्वयमपि कस्यचिद्राज्ञो वर्णनपरमेवेति नाम्ना सम्भाव्यते, तदानीन्तनश्च जयन्तचन्द्रं मुक्त्वा कोऽन्यो गौडोर्वीशकुलप्रदीपो भवेदिति फलतो जयन्तचन्द्रपितृवर्णनात्मकमेव तत्काव्यमिति नास्त्यत्र सन्देहः। तेन च सिद्धमेतस्य संख्यावत्सार्वभौमस्य तदानीन्तनत्वम्।

राजशेखरेण च स्वग्रन्थे श्रीहर्षो जयन्तचन्द्रसभायाः सभास्तार आसीदिति लिखितं तेनापि पूर्वोक्त एवार्थो दृढीक्रियते। किञ्च नैषधचरितस्य व्याख्या अहमदाबादसमीपे ढोलकाग्रामवास्तव्येन चाण्डुपण्डितनाम्ना केन चित्पण्डितेन (१३५३) संवत्सरे निर्मितोपलभ्यते, तत्र च नैषधकाव्यं नव्यत्वेनोपवर्णितमतः

---

१ अयं च लेखो यथाऽवस्थित एवास्माभिरुद्धृतः।

२ "गौडोर्वीशकृतप्रशस्तिभणितिभ्रातर्ययं तन्महा" "तस्य श्रीविजयप्रशस्तिरचनातातस्य नव्ये महा" इत्यादि नैषधचरितस्थं पद्यमत्र प्रमाणम्। एतद्ग्रन्थद्वयमद्यावध्यनुपलब्धमेव।

सिद्ध्यति द्वादशशतीनैकटिकत्वं खण्डनकर्तुः । षड्दर्शनटीकाकृद्वाचस्पतिमिश्राः स्वकृतन्यायसूचीनिबन्धनाम्नि ग्रन्थे स्वस्थितिकालं निरदिक्षन् । तत्रत्यमन्तिमपद्यमदः—

"न्यायसूचीनिबन्धोऽसावकारि सुधियां मुदे ।
श्रीवाचस्पतिमिश्रेण वस्वङ्कवसुवत्सरे" इति ॥

अनेन च पद्येनाऽङ्कानां वामतो गतिरिति न्यायेन (८९८) अष्टनवत्युत्तराष्टशततमवर्षे स ग्रन्थो व्यरचीति तेषामपि तत्काले स्थितिः सिद्धा । न्यायाचार्यपदाङ्कितोदयनाचार्यैश्च 'वाचस्पतिमिश्रविरचिततात्पर्यटीकायास्तात्पर्यपरिशुद्धिनामकव्याख्यानं रचितमिति वाचस्पतिमिश्रपरकालवर्तिन एव इति स्पष्टं सिध्यति ।

"तर्काम्बराङ्क ९०६ प्रमितेष्वतीतेषु शकान्ततः ।
वर्षेषूदयनश्चक्रे सुबोधां लक्षणावलीम्" ।

इति श्लोकोऽपि लक्षणावल्या अन्ते दृश्यते । तेनोदयनाचार्यस्थितिकालः ९०६ इति लभ्यते । खण्डनकृता चोदयनाचार्यकृतलक्षणावलीस्थानि लक्षणान्युदाहृत्य खण्डनग्रन्थे बहुधा खण्डितं प्राधान्येन तन्मतम् ।

पूर्वोल्लिखितेन चाण्डुपण्डितेन च स्वग्रन्थे "प्रथमं तावत्कविर्विजिगीषुकथायां स्वपितृपरिभावुकमुदयनमत्यमर्षणतया कटाक्षयँस्तद्ग्रन्थीन्तुद्ग्रन्थयितुं खण्डनं प्रारिप्सुश्चतुर्विधपुरुषार्थैरभिमानमनवधीयमानमवधीर्य मानसमेकतानतां निनायेति" लिखितमतउदयनाचार्यात्परभावी ग्रन्थकार इति सुस्पष्टमवगन्तुं शक्यम्, तत्र चिन्तामणिकारस्तावद्गङ्गेशोपाध्यायः खण्डनकृतः कारिकामुद्धृत्य "एतेनखण्डनकारमतमप्यपास्त"मित्यादिना तन्मतं दूषित-

१ अयं ग्रन्थो न्यायवार्तिकेन सह एशियाटिक्सोसाइट्याऽस्वया समित्या सम्मुद्रितः ।

वान् ? तस्य च स्थितिरितः सप्तशरयाः पूर्वमष्टशत्यां अभ्यन्तर आसीदिति तत्पूर्वत्वं खण्डनकर्तुरवश्यमेवाङ्गीकर्तव्यम्।

एतावता पौर्वापर्यमेवं सिद्ध्यति।

अष्टनवत्युत्तराष्टशततमे वत्सरे श्रीवाचस्पतिमिश्राणां स्थितिः, ततः९०६वत्सरे उदयनाचार्यस्य स्थितिः ततः, परं ग्रन्थकर्तुः स्थितिः

अन्येतु खण्डनकृत उदयनाचार्यसमानकालिकत्वं वर्णयन्तो-ऽन्योन्यमनयोः समागमं वर्णयन्ति, उदाहरन्ति च पद्यमेकम्—

"किं गवि गोत्वमुताऽगवि गोत्वं यदि गवि गोत्वं नहि मयि तत्त्वम्।
अगवि च गोत्वं तत्र यदि साध्यं भवतु भवत्सपि सम्मति गोत्वम्" ॥

परमत्र प्रमाणविशेषादर्शनाचाण्डुपण्डितलेखवैपरीत्याच्च न मामकं चेतोऽत्र विश्राम्यति।

यच्च केचित् श्रीहर्षस्तावदादिशूरेण समानीतानां चतुर्णां ब्राह्मणानामन्यतम इति तस्य वङ्गदेशवास्तव्यतां साधयितुं समुत्सहन्ते। तदपि न चित्तसन्तोषकरम्। यतो वङ्गदेशे आदिशूरेणाऽनीतो यदि भवेच्छ्रीहर्षस्तर्हि किमिति तेन स्वग्रन्थे कुत्राऽपि तस्यादिशूरस्य वर्णनं न कृतम्। यथा कान्यकुब्जाधीश्वरस्य वर्णनं तस्माच्च स्वस्य बहुमानलाभ इत्यादिकं खण्डनखण्डखाद्यादिग्रन्थेषु दृश्यते न तथा पूर्वोक्तस्य राज्ञो वर्णनं दृश्यते। किञ्च भवदभ्युपगतरीत्याऽपि कथञ्चित् गौडदेशाभ्यस्त्येवाऽऽनीतः श्रीहर्षस्तथाऽस्तु नाम? परं गौडदेशत्वेन वङ्गदेशस्य प्रामाणिकैः कुत्रापि परिगणनं न कृतमिति नैतद्विश्वासयोग्यं प्रेक्षावताम्।

केचन काव्यप्रकाशकारेण मम्मटभट्टेनाऽपि समं खण्डनकर्तुः समागमं वर्णयन्ति, उदाहरन्ति च कथाम्। कदाचित् मम्मटभट्टसविधे श्रीहर्षेण नैषधचरितं स्वनिर्मितं प्रादर्शि। तत आद्यन्त-

मवलोक्य तेनोक्तमहो पूर्वमेव यदि काव्यमेतत्मदर्शितमभविष्यत्, नूनं काव्यप्रकाशे दोषपरिच्छेदे दोषोदाहरणान्वेषणप्रयासो मे नाभविष्यत् । समस्तकाव्यदोषाकरमेतत् भावत्कं काव्यमिति वक्तुरभिप्रेतमिति ॥

एभिः पूर्वोक्तैः प्रमाणैः सिद्धमेतत् यद् द्वादशशताब्द्याः पूर्वमेव एतस्य ग्रन्थकर्तुः स्थितिः जयन्तचन्द्रस्य चेति ।

एवं यथाकथञ्चित्समयस्तु निर्णीतः, सूक्ष्मेक्षिकया निर्णयस्तु मादृशैर्दुःशक इति पाश्चात्यविद्यापटूनां विपश्चितां शैलीमवलम्ब्य न तद्विषयेऽस्माभिरात्माऽऽयास्यते। यत्किञ्चिदन्यैः पण्डितैरस्मिन्विषये यत्र कुत्राऽपि लिखितमास्ते तदेवाऽत्र सङ्गृह्येदं लिखितं यदत्र रोचेत तद्बुद्धिमद्भिर्ग्राह्यम् ।

आसीच्चायं खण्डनकारोऽतिमेधावी स्वबुद्धिवैभवेन क्षणेनैव सर्वशास्त्रार्थानामाकलयिता, एवं किल वृद्धपरम्परया गाथा गीयते, एकदा किल कश्चित्पण्डितः श्रीहर्षपितरं श्रीहीरपण्डितं राजसभायां विजिगीषुकथायां व्यजेष्ट । ततः प्रभृति पराजयजनितमानससन्तापेन दूयमानमानसः श्रीहीरपण्डितो भगवतीं सकललोकजननीं दुर्गामाराधयितुं प्रवृत्तः ।

एवं क्रमेण भगवतीमाराधयन्नेव "तव पुत्रो भविता सकलदुर्वादिमतखण्डनपटुरिति" भगवत्याः सकाशाल्लब्धवरः किञ्चित्कालानन्तरं मामल्लदेव्यां सकलगुणरत्नाकरं पुत्रं लब्ध्वाऽपि तावत्

१ केचित्तुदयनाचार्य एव श्रीहीरपण्डितं व्यजेष्टेति तदीयवैरनिर्यातनार्थमेव तत्प्रणीतलक्षणानि विशिष्योदाहृत्य खण्डनेऽखण्डयत् खण्डनकार इति वर्णयन्ति । चाण्डुपण्डितोऽपि स्वपितृपरिभावुकमुदयनमसमर्षणतया कटाक्षयैस्तद्ग्रन्थानुद्ग्रन्थयितुं खण्डनमारिप्सुरित्यादिलिखन् पूर्वोक्तमेवानुमेने ।

नैव सन्तोषमवाप, किन्तु तेनैव पराभवजनितमानससन्तापाग्निना-ऽहर्निशं दह्यमानः कालेन रोगाक्रान्ते शरीरे मुमूर्षुस्तस्मिन्समये पुत्रमाहूय प्राह—"वत्स मम जेतारं विजित्य स्वीयां कीर्तिपताकां चेद्विस्तारयिष्यसि तर्ह्येव मेऽन्तरात्मा परलोकगतस्याऽपि प्रशान्तो भविष्यति" इति । तदुपाकर्ण्य तातस्यैव पुरतः प्रतिजज्ञे यद् "तातावमन्तारमविजित्य नाऽस्मिन् लोके जनानां दर्शनगोचरो भविष्यामि" इति ।

अनन्तरं चोपरते तातशरीरे तदीयं पारलौकिकं पुत्रकार्यं यथा कथञ्चिन्निर्वर्त्य तपस्तप्तुमना आपतितव्यसनात्कथञ्चिदुत्तीर्य स्वकुटुम्बभारमाप्तेषु विन्यस्य पितुर्वचनमूरीकर्तुं देशान्तरं परिभ्रम्याऽनेकेषां विद्वद्वरिष्ठानामाचार्याणां सविधे विविधानि शास्त्राण्यधीत्य कस्माच्चिद्गुरोः सकाशाच्चिन्तामणिमन्त्रं समासाद्य कस्याश्चित्सरितस्तीरे एकं जीर्णं भगवत्यास्त्रिभुवनजनन्याः श्रीगौर्या मन्दिरमुपलभ्य तस्मिन् स्थल उषित्वा तस्यामेव मूर्तौ बद्धादरस्तपोऽनुष्ठानाय प्रायतिष्ट ।

एवं क्रमेणानवरतं तपोऽनुतिष्ठतस्तस्य पञ्चषेषु हायनेषु व्यतीतेषु करुणावरुणालया श्रीगौरीदेवी तदीयां भक्तिं दृढतरमध्यवसायं च दृष्ट्वा नितरां प्रसन्नाऽविर्भूय तमुवाच "पुत्र ? तुष्टाऽस्मि वरं वृणीष्वेति"। असौ तु तदैव ययाचे–"मातः? यदि प्रसन्नाऽसि तर्हि विद्याप्रदानेनाऽनुगृहाण"। भगवती च तुष्टा सती प्रार्थितं यथाकामं वरं प्रदायाऽन्तर्हिता बभूव, तत एतादृशं दुष्प्रापं वरं लब्ध्वाऽचिरात्तर्काऽलङ्कारवेदवेदाङ्गादिनिखिलविद्यास्वनितरसाधारणं वैदुष्यमवाप । यस्य प्रभावेण जल्पकथायामस्य सर्वोत्तरा वाणी प्रस्फुरति स्म । यां बोद्धुमपि समर्था नाभवन् पण्डिताः । तावताऽपि लोकोत्तरविद्याविभूषितः स्वभारतीं लोकैरनव-

बुद्ध्यमानामुपलभ्योद्देश्याऽसिद्धिं परिवयन् पुनर्भारतीमुपासितुमारेभे। ततः प्रसन्ना वाग्देवी कथयति स्म "वत्स! अतिप्रज्ञाऽपि ते दोषायैवाभवदिति निशीथे शिरसि अरभः परिषिच्य क्लिन्ने सति दधि भक्षयित्वा प्रस्वपिहि तेन कफाधिक्येन जडत्वं प्राप्स्यसि पश्चात्तव वाणीं जना वेत्स्यन्तीति"। असावपि तथैवानुष्ठाय पूर्णमनोरथोऽभवद्। एवं क्रमेण दिव्यज्ञानं सम्पाद्य कान्यकुब्जेश्वरसभायां स्वपितुर्जेतारं शास्त्रार्थे पराजित्य तस्माद्राज्ञः बहुसम्मानमवापेति।

एवमप्रतिमपाण्डित्यभाजोऽस्य ग्रन्थकर्तुः पूर्वोल्लिखिताख्यायिकाविषये नैवास्ति कश्चन सन्देहलेशः, यतोऽनेनैव ग्रन्थकर्त्रा स्वकृते नैषधीयचरिते प्रथमसर्गान्तिमश्लोके "श्रीहर्षमित्यादिश्च चतुर्दशे च सर्गे "अवामावामेत्यादिः" सन्दर्भश्च "तवच तव वृत्ते कवयितुः" "भवदत्तस्तोतुर्मदुपहितकण्ठस्य कवितु" रित्येवमादिना स्पष्टं देवताप्रसादलब्धादिव्यविज्ञानवत्त्वं स्वस्याऽऽवेदितम्। वृद्धपरम्परया प्रचलितैवाऽऽख्यायिका, साऽपि नैकान्ततो निर्मूलेति कश्चन वक्तुं शक्नोतीति भवेदेव याथार्थ्यम्।

सोऽयमनितरसाधारणपाण्डित्यभाक् श्रीहर्षोऽनेकान् ग्रन्थान् जग्रन्थ। नैषधचरितम् १ अर्णववर्णनम् २ शिवशक्तिसिद्धिः ३ साहसाङ्कचम्पूः ४ छन्दः प्रशस्तिः ५ विजयप्रशस्तिः ६ गौडोर्वीशकुलप्रशस्तिः ७ ईश्वराभिसन्धिः ८ स्थैर्यविचारणप्रकरणम् ९ खण्डनखण्डखाद्यम् १० ईश्वराभिसन्धि ११ रित्यादयः।

एतेषु नैषधचरितं नाम काव्य के नाम पण्डिताः काव्यसुधास्वादनसमुपजाततृप्तिविशेषाननुभवन्तो न जानते। प्रत्युत सर्वेऽप्येनमेव ग्रन्थमधीत्य पुनः पुनर्विचार्यैव च जगति ख्यातिं पाण्डित्यं च लभन्त इति न परोक्षं मेसावताम्। एवं सति तद्विषये

ऽस्माभिः प्रशंसनं तेजोराशेः सूर्यस्य दीपेन तमस्तिरस्करणमिव-मिति न तद्विषये लेखनी व्यापार्यते । अन्येच ग्रन्थास्तदीयाः प्रायशो नास्माभिर्दृष्टा इति कं विषयं प्रतिपादयितुं साधयितुं वा ते प्रणीता इति नविशेषतो निर्देष्टुं शक्यन्ते ।

केचित्तु–तत्तद्ग्रन्थानां नामान्येव सन्ति साक्षिणो वर्ण्येषु–यथा–अर्णववर्णनं नाम समुद्रवर्णनं स्यात् । शिवशक्तिसिद्धिरिति शिवनाम्नो नृपस्य शक्तिचरितवर्णनमयं स्यात् । गौरीगिरीश-माहात्म्यवर्णनस्वरूपन्तु न स्यादित्यपि कथं वक्तुं शक्यम् । साहसाङ्कनाम्नो महाराजस्य चरितमयी खलु चम्पूनाम । साहसाङ्को नाम विक्रमादित्यः साहसप्रधान-कार्यकरणात्तदीयं नाम साहसाङ्क इति लोके प्रथितं इति वदन्ति । परन्तु नैषधे नवसाहसाङ्कचरिते चम्पूकृते इति ग्रन्थकृल्लेखात् नवो यः साहसाङ्कोपनाम राजेत्यादिनारायण-विवरणाच्च नवत्वविशेषणस्वारस्यान्यथाऽनुपपत्त्या कान्यकुब्जे-श्वरसाहसाङ्कस्य वर्णयित्रीयं चम्पूर्नतु श्रीमद्विक्रमार्कपरमे-श्वरस्येतियुक्तम् ।

छन्दःप्रशस्तिरितिच्छन्दनाम्नो राज्ञः सङ्कीर्तनम् । विजय-प्रशस्तिः कस्य चन महाराजस्य शत्रुसङ्ग्रामाङ्गणे विजयप्राप्तिव-र्णनम् । गौडोर्वीशकुलप्रशस्तिश्च गौडदेशाधीश्वरराजवंशवर्णनं रघुवंशादितुल्यम् । ईश्वराभिसन्धिः ईश्वरसाधनपरः फलतोऽनी-श्वरत्वादिबौद्धमतनिराकरणार्थं प्रणीत इति सम्भाव्यते । अभि-सन्ध्यन्तरमपि यत्कुत्रचिच्छ्रूयते तदस्यैव ग्रन्थस्य प्रकरणमिति न ग्रन्थान्तरम् । स्थैर्यविचारणप्रकरणं नाम बौद्धाभिमतक्ष-णिकत्वनिरासपरं स्यात् इति मन्ये इति वर्णयन्ति ।

एतेषु खण्डनखण्डखाद्यं कदा प्रणीतमिति विचारयामः । त-

प्र केचिदित्थमाचक्षते ईश्वराभिसन्धेः पुरस्तात्पुस्तकान्तराणां च परस्तात् प्रणीतमिति ।

समसमय एवैनयोः पुनर्निर्माणमिति युक्तम्—तथाहि नैषधचरिते "खण्डन खण्डतोऽपि सहजे" इति लेखनात् खण्डने च "यथा च परिहृतचापलमात्ममतत्वामृतसरसि निमज्ज्य रज्यति निराममेव मानसं तथाऽहमकथयं नैषधचरितस्य परमपुरुषस्तुतौ सर्गे" इति लेखनाच्च कतरद् पूर्वभावि कतरच्चोत्तरकालभावि इति कथयितुमशक्यमतः समसमयत्वमेव ॥

अस्य च ग्रन्थस्य खण्डनखण्डखाद्यं, खण्डनखण्डं, खण्डनखाद्यं खाद्यखण्डनं खण्डनमित्यादि बहूनिनामानि लोके प्रथितानि ।-तेषु कानिचित् लाघवमूलकानि कानि चिद्विपर्यासमूलकानि इति न मुख्यानि नामानि भवितुमर्हन्ति । खण्डनखण्डखाद्यमित्येव सम्पूर्णं तस्य नाम । ( १ )

( १ ) खण्डनस्य-पदार्थादिखण्डनरूपस्य खण्डस्य खण्डशर्करायाः खाद्यं भक्ष्यं स्वाद्यमित्येकोऽर्थः । खण्डनेनोक्तलक्षणेन खण्डाः खण्डिताः खमाद्यं येषां ते खाद्या गगनादयः पदार्था येन यस्मिन्वा तत्खण्डनखण्डखाद्यमिति द्वितीयोऽर्थः । वस्तुतः खण्डनखण्डखाद्यं नाम खण्डनरूपं यत्खण्डखाद्यं नाम पाकविशेषः वैद्यकग्रन्थोक्तः खण्डखाद्याख्यः पाकविशेषोयथा रोगनिरसनपूर्वकबलपुष्ट्याद्याधानहेतु स्तथाऽयमपि ग्रन्थः खण्डनरूपो वादिमतानि तिलशः खण्डयित्वा ब्रह्माद्वैतप्रतिपतिश्रद्धाद्याधानहेतुर्भवन् परमानन्दास्वादक्षमयोग्यतासम्पादकोभवति । खण्डखाद्यं चोक्तं हारीते—

"शतावरी च्छिन्नरुहा वृषा मुण्डितिका चला ।
तालमूली च गायत्री त्रिफलायास्त्वचस्तथा ॥
भार्ङ्गी पुष्करमूलं च पृथक् पञ्चपलानि च ।
जलद्रोणे विपक्तव्य मष्टभागावशेषितम् ॥
विश्वौषधिहतस्याऽपि माक्षिकेण हतस्य वा ।

अथाऽस्य खण्डनखण्डखाद्यस्य प्रतिपाद्यविषये किञ्चिदालोचयामः किमर्थोऽयं ग्रन्थः प्रणीत इति ।

अस्मिंश्च ग्रन्थे न्यायशास्त्रस्याऽऽदिसूत्रोक्तानां प्रमाणादिपदार्थानामेव खण्डनं समुपलभ्यते इति न्यायशास्त्रस्यैव तात्पर्यं कुत्रेति प्रथमं निर्णीयते । सर्वेषां प्राणिनां स्वभावत एव दुःखं जिहासितं सुखं च प्रेप्सितं भवति । तत्र संसारे सुखं स्वल्पं तदपि सातिशयमागमापायीति दुःखबाहुल्येन विपक्षवर्गाक्रान्तत्वेन दुःखपक्ष एव निक्षिप्तमिति प्रेक्षावद्भिस्तज्जिहासितं भवति । तस्यां च जिहासायां प्रथमतस्तत्कारणोच्छेद एव यत्नः कर्तव्यो भवति तथासति दुःखस्य विनाशाय न यत्नान्तरमपेक्षितव्यं स्यात् का-

---

पलद्वादशकं देयं रुक्मलोहस्य चूर्णितम् ॥
खण्डतुल्यं घृतं देयं पलषोडशकं बुधैः ।
पचेत्ताम्रमये पात्रे खण्डपाकं मतो यथा ।
प्रस्थार्द्धं मधुनो देयं शुभाश्म जतुकत्वचम् ॥
शृङ्गी विडङ्गं कृष्णा च शुण्ठी जाती पलं पलम् ।
त्रिफला धान्यकं पत्रं त्र्यक्षं मरिचकेसरम् ॥
चूर्णं दत्त्वा सुमथितं स्निग्धभाण्डे निधापयेत् ।
यथाकालं प्रयुञ्जीत विडालपदमात्रकम् ॥
गव्यक्षीरानुपानं च सेव्यं मांसरसः पयः ॥
गुरुवृष्यान्नपानानि स्निग्धमांसादिबृंहणम् ॥
रक्तपित्तं क्षयं कासं पक्तिशूलं विशेषतः ।
वातरक्तं प्रमेहं च शीतपित्तं वमिं छमिम् ।
श्वयथुं पाण्डुरोगं च कुष्ठं प्लीहोदरं तथा ॥
अनाहं मूत्रसंस्रावमम्लपित्तं निहन्ति च ।
चक्षुष्यं बृंहणं वृष्यं माङ्गल्यं प्रीतिवर्द्धनम् ॥
श्रीकरं लाघवकरं खण्डखाद्यं प्रकीर्तितम्"
इत्यादि वर्णयन्ति स्म महामहोपाध्यायपण्डितवरभागवताचार्याः

रणाभावे कार्याभावस्य सर्वसाम्प्रदायिकानुमतत्वात्। तच्च कारणं किमिति जिज्ञासायामात्मतत्त्वाज्ञानमेवेति सर्वशास्त्रसिद्धान्तः तथाहि—आत्मनि अज्ञानेनावृते तत्र देहेन्द्रियाद्यध्यासरूपं मिथ्याज्ञानं प्रवर्तते। ततश्च दोषाणां रागद्वेषादीनां प्रादुर्भावः, तस्माच्च वाङ्मनःकायचेष्टालक्षणायाः प्रवृत्तेरुदयः, प्रवृत्तेश्च पुण्यपापाविर्भावः, पुण्यपापाभ्यां शुभाशुभजन्मग्रहणं, ततो दुःखानुभव, इत्येवमनिशं प्रवर्तमानं चक्रं संसार इति परिभाष्यते। तस्य च निवृत्तिरात्मतत्वज्ञानाद्भवति। यथाऽऽह भगवानक्षपादः—दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तरापायादपवर्ग इति।

तच्च तत्त्वज्ञानं न परोक्षमेव मिथ्याज्ञाननिवर्तकमपरोक्षस्य मिथ्याज्ञानस्यापरोक्षेण ज्ञानेन विना बाधादर्शनात्। नो खल्वाप्तवचनलिङ्गादिभिर्निश्चितदिगादितत्त्वानामपि पुंसां न पुनर्दिगादिविभ्रमा जायन्ते। अतश्च तत्वसाक्षात्कार एवैपितव्यः। साक्षात्कारेच प्रकृष्टं निदिध्यासनमेव साधनं, नहि अनादिकालप्रचितमिथ्याज्ञानतत्संस्कारप्रवाहजनितं विपरीतज्ञानं सहसा झगित्येव सकृदुत्पन्नेन तत्त्वनिश्चयेनोच्छेत्तुं शक्यते ऽपि त्वभ्यासेनैव। अभ्यासापरपर्यायं निदिध्यासनं च तर्कसहकृतवैदिकज्ञानसाध्यं श्रुतिजनितज्ञाने युक्तायुक्तत्वविवेकं विनान जायते, यतो निर्दोषश्रुतिसमन्वयात्प्रतीयमानोऽप्यर्थः सहसा न बुद्धिमारोहति न यावत्पूर्वपक्षसिद्धान्ताभ्यां विचार्यते। अन्यथा उत्पन्नमपि श्रौतज्ञानं वादिविप्रतिपत्त्यादिप्रयुक्ताऽसम्भावनाविपरीतभावनादिदोषेण प्रतिहतं सत् न साक्षात्काराय कल्पत इत्यतो बुद्धिदोषाऽपाकरणाय दर्शनकारैः करुणया दर्शनानि प्रणीतानि।

तत्राक्षपादीयदर्शनं प्राधान्येनैतदेव निरूपयितुं प्रवृत्तं यत् कस्य

चिदप्यभिलषितस्य वस्तुनः साधनं केन प्रकारेण कर्तुं शक्यं, कानि तत्र साधनानि, के वा साधनाभासाः, कथं वा वादिनोऽसद्वर्त्मना गच्छन्तो वस्तुतत्त्वमपलपन्ति चक्षुषि धूलिप्रक्षेपसदृशानि वचनान्यारचय्य श्रद्धालोः श्रद्धामपाकुर्वन्ति किंवा सदुत्तरं किंवाऽसदुत्तरं के वा कथादोषा इत्यादिपरिज्ञानाय। न तु प्राधान्येन मोक्षसाधनतत्त्वज्ञानाय, तत्र छलादीनामनुपयोगात्। परम्परयाऽपि मोक्षसाधनतत्त्वज्ञानप्रतिपादनपरत्वाभावे मुमुक्षूणां प्रवृत्तिर्न भवेदिति तदपि निरूपितवान्मुनिर्द्वितीयसूत्रेण पारिभाषिकद्वादशविधप्रमेयप्रतिपादकसूत्रेण च(१) नतु प्रधानतस्तदुद्देश्यम्। अत एव तदनुरूपमादिमं सूत्रं तत्रोपलभ्यते—

"प्रमाणप्रमेयसंशयप्रयोजनदृष्टान्तसिद्धान्तावयवतर्कनिर्णयवादजल्पवितण्डाहेत्वाभासच्छलजातिनिग्रहस्थानानां तत्त्वज्ञानान्निःश्रेयसाधिगम" इति। यस्य कस्य चिदपि वस्तुनः सिद्धौ चिकीर्षितायामेते षोडशपदार्था अपेक्ष्यन्ते ऽत एषां तत्त्वज्ञानात् भवति निःश्रेयससिद्धिः— अभिमतसिद्धिरित्यर्थः। एतच्च निःश्रेयसपदं न केवलं मोक्षाभिप्रायेण प्रयुक्तं, मपि तु सर्वविधनिःश्रेयसाभिप्रायेण, तथाहि न्यायवार्तिकं—

"तत्त्वज्ञानान्निःश्रेयसाधिगम इति तत्त्वं ज्ञायमानं कर्म सम्पद्यते निःश्रेयसमधिगम्यमानं कर्म भवतीति। किं पुनस्तत्त्वं किं वा निःश्रेयसमिति? तत्त्वं पदार्थानां यथावस्थिततात्मप्रसयो-

(१) यस्य कस्यापि ग्रन्थस्य निर्माणं साक्षात्परम्परया वा मोक्षफलं न भवति चेत् तत् सफलमिति आस्तिकैर्न परिगण्यते ऽतस्तादृपि निरूप्यते यथा काव्यप्रकाशसाहित्यदर्पणादिषु चतुर्वर्गफलप्राप्तिसिद्ध्यर्थं काव्यप्रणयनमित्युक्तम्। परन्तु काव्यस्वरूपनिरूपणस्य साक्षात् मुख्य फलं तत् न भवतीति किन्तु चमत्कारविशेषानुभव एव, तद्वत्।

रणाभावे कार्याभावस्य सर्वसाम्प्रदायिकानुमतत्वात् । तच्च कारणं किमिति जिज्ञासायामात्मतत्त्वाज्ञानमेवेति सर्वशास्त्रसिद्धान्तः त-थाहि—आत्मनि अज्ञानेनावृते तत्र देहेन्द्रियाद्यध्यासरूपं मिथ्या-ज्ञानं प्रवर्तते । ततश्च दोषाणां रागद्वेषादीनां प्रादुर्भावः, तस्मा-च्च वाङ्मनःकायचेष्टालक्षणायाः प्रवृत्तेरुदयः, प्रवृत्तेश्च पुण्यपापा-विर्भावः, पुण्यपापाभ्यां शुभाशुभजन्मग्रहणं, ततो दुःखानुभव, इ-त्येवमनिशं प्रवर्तमानं चक्रं संसार इति परिभाष्यते । तस्य च निवृत्तिरात्मतत्त्वज्ञानाद्भवति । यथाऽऽह भगवानक्षपादः—दुःख-जन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तरापायाद-पवर्ग इति ।

तच्च तत्त्वज्ञानं न परोक्षमेव मिथ्याज्ञाननिवर्तकमपरोक्षस्य मिथ्याज्ञानस्यापरोक्षेण ज्ञानेन विना बाधादर्शनात् । नो ख-ल्वाप्तवचनलिङ्गादिभिर्निश्चितदिगादितत्त्वानामपि पुंसां न पुन-र्दिगादिविभ्रमा जायन्ते । अतश्च तत्त्वसाक्षात्कार एवैपितव्यः । साक्षात्कारे च प्रकृष्टं निदिध्यासनमेव साधनं, नाहि अनादिकाल-प्रचितमिथ्याज्ञानतत्संस्कारप्रवाहजनितं विपरीतज्ञानं सहसा-द्रागित्येव सकृदुत्पन्नेन तत्त्वनिश्चयेनोच्छेत्तुं शक्यते ऽपि त्वभ्यासे-नैव । अभ्यासापरपर्यायं निदिध्यासनं च तर्कसहकृतवैदिकज्ञान-साध्यं श्रुतिजनितज्ञाने युक्तायुक्तत्वविवेकं विनान जायते, यतो निर्दोषश्रुतिसमन्वयात्प्रतीयमानोऽप्यर्थः सहसा न बुद्धिमारोहति न यावत्पूर्वपक्षसिद्धान्ताभ्यां विचार्यते । अन्यथा उत्पन्नमपि श्रौत-ज्ञानं वादिविप्रतिपत्त्यादिप्रयुक्ताऽसम्भावनाविपरीतभावनादिदो-षेण प्रतिहतं सत् न साक्षात्काराय कल्पत इत्यतो बुद्धिदोषाऽपा-करणाय दर्शनकारैः करुणया दर्शनानि प्रणीतानि ।

तत्राक्षपादीयदर्शनं प्राधान्येनैतदेव निरूपयितुं प्रवृत्तं यत् कस्य

चिदप्यभिलषितस्य वस्तुनः साधनं केन प्रकारेण कर्तुं शक्यं, कानि तत्र साधनानि, के वा साधनाभासाः, कथं वा वादिनोऽसद्वर्त्मना गच्छन्तो वस्तुतत्त्वमपलपन्ति चक्षुषि धूलिप्रक्षेपसदृशानि वचनान्यारचय्य श्रद्धालोः श्रद्धामपाकुर्वन्ति किंवा सदुत्तरं किंवाऽसदुत्तरं के वा कथादोषा इत्यादिपरिज्ञानाय । न तु प्राधान्येन मोक्षसाधनतत्त्वज्ञानाय, तत्र छलादीनामनुपयोगात् । परम्परयाऽपि मोक्षसाधनतत्त्वज्ञानप्रतिपादनपरत्वाभावे मुमुक्षूणां प्रवृत्तिर्न भवेदिति तदपि निरूपितवान्मुनिर्द्वितीयसूत्रेण पारिभाषिकद्वादशविधप्रमेयप्रतिपादकसूत्रेण च(१) नतु प्रधानतस्तदुद्देश्यम् । अत एव तदनुरूपमादिमं सूत्रं तत्रोपलभ्यते—

"प्रमाणप्रमेयसंशयप्रयोजनदृष्टान्तसिद्धान्तावयवतर्कनिर्णयवादजल्पवितण्डाहेत्वाभासच्छलजातिनिग्रहस्थानानां तत्त्वज्ञानान्निःश्रेयसाधिगमः" इति । यस्य कस्य चिदपि वस्तुनः सिद्धौ चिकीर्षितायामेते षोडशपदार्था अपेक्ष्यन्तेऽत एषां तत्त्वज्ञानात् भवति निःश्रेयससिद्धिः— अभिमतसिद्धिरित्यर्थः । एतच्च निःश्रेयसपदं न केवलं मोक्षाभिप्रायेण प्रयुक्तं, अपि तु सर्वविधनिःश्रेयसाभिप्रायेण, तथाहि न्यायवार्तिकं—

"तत्त्वज्ञानान्निःश्रेयसाधिगम इति तत्त्वं ज्ञायमानं कर्म सम्पद्यते निःश्रेयसमधिगम्यमानं कर्म भवतीति । किं पुनस्तत्त्वं किं वा निःश्रेयसमिति ? तत्त्वं पदार्थानां यथावस्थिततात्मप्रसंयो-

(१) यस्य कस्यापि ग्रन्थस्य निर्माणं साक्षात्परम्परया वा मोक्षफलं न भवति चेत् तत् सफलमिति आस्तिकैर्न परिगण्यते ऽतस्तादपि निरूप्यते यथा काव्यप्रकाशसाहित्यदर्पणादिषु चतुर्वर्गफलप्राप्तिसिद्ध्यर्थं काव्यप्रणयनमित्युक्तम् । परन्तु काव्यस्वरूपनिरूपणस्य साक्षात् मुख्यं फलं तत् न भवतीति किन्तु चमत्कारविशेषानुभव एव, तद्वत् ।

त्पत्तिनिमित्तत्वं--यो यथावस्थितः पदार्थः स तथाभूतप्रत्ययोत्पत्तिनिमित्तं भवति यत् तत् तत्त्वम् । निःश्रेयसं पुनर्दृष्टादृष्टभेदाद् द्विविधं भवति । तत्र प्रमाणादिपदार्थतत्त्वज्ञानान्निःश्रेयसं दृष्ट, नहि कश्चित्पदार्थो ज्ञायमानो हानोपादानोपेक्षाबुद्धिनिमित्तं न भवतीति। एवं च कृत्वा सर्वे पदार्था ज्ञेयतयोपक्षिप्यन्ते इति । परन्तु निःश्रेयसमात्मादेस्तत्त्वज्ञानाद्भवति । (१)दृष्टं प्रमाणादिपरिज्ञानाददृष्टं पुनरात्मादेः प्रमेयस्य परिज्ञानादिति न प्रमाणमस्ति? । (२)न नास्त्यर्थस्य तथाभावात्–अयं एवायं तथाभूतो यदात्मादेः प्रमेयस्य तत्त्वज्ञानान्निःश्रेयसमधिगम्यते । यदा ह्ययमात्मादि प्रमेयं विपर्ययेणाध्यवसितो भवति अथ संसारं नातिवर्तते इति । एवं चार्थं द्वितीयसूत्रे प्रतिपादयिष्यामः । (३)यदि पुनः प्रमाणादिपदार्थतत्त्वज्ञानान्निः श्रेयसं स्यान्न मोक्षप्रमाणा मोक्षाय घटेरन् नहि कस्यचित्कचिच्च तत्त्वज्ञानं नास्तीति । तस्मादात्माद्येव प्रमेयं मुमुक्षुणा ज्ञेयमिति । (४)पृथगुपदेशाच्च । यदि प्रमाणाद्येव प्रमेयं स्यात्

---

(१) दृष्टे दर्शनमेव प्रमाणमदृष्टन्तु निःश्रेयसमप्रामाणिकं दर्शनाभावादित्यर्थः ।

(२) परिहरति । ननास्ति ।

(३) ये तु वैयात्यान्मन्येरन् पदार्थतत्त्वज्ञानमात्रमेव परनिःश्रेयसहेतुरिति तान्प्रत्याह । यदि पुनरिति ।

(४) न केवलं वस्तुवृत्तिः सूत्रकारस्यापि सम्मतमेतदित्याह । पृथगुपदेशाच्च प्रमेयस्य— प्रमाणादिभ्यः । यदि च यत्किञ्चित्प्रमेयतत्त्वपरिज्ञानान्निःश्रेयसस्य परस्य प्राप्तिः किमर्थमात्मादिसूत्रेण द्वादशैव प्रमेयाणि नाधिकानि न न्यूनानि चेत्यवधार्यते सूत्रकारेण । तस्मात्तदेतत्साक्षादुपयोगिनिःश्रेयसे न पदार्थमात्रमित्याह । प्रमेयेति । इति तात्पर्यटीका । स्पष्टमिदमेतेन यत् न्यायदर्शनं न मोक्षसाधनीभूततत्त्वज्ञानप्रतिपादनायैव प्रवृत्तमपि तु तत्साधनपरिकरतत्त्वज्ञानप्रतिपादनायैव । तदर्थन्तु वेदान्ता एव शरणीकरणीयाः ।

तस्य च परिज्ञानान्निःश्रेयसम्भवेत् नात्मादि प्रमेयं पृथगुपदिष्टं स्यात्। प्रमेयार्थावधारणार्थायां चोत्तरसूत्रप्रक्रियायां प्रमेयस्य विहितत्वादाद्येन सूत्रेणाकुशलः सूत्रकारः स्यात्" इति।

अयमभिप्रायः—सर्वास्वपि विद्यासु तत्त्वज्ञानं निःश्रेयसं च वर्तते एव, परं तत् न आत्मज्ञानं मोक्षरूपं वाऽपि तु तत्तत्प्रतिपाद्यविषयज्ञानरूपं, फलमपि भिन्नरूपम्। यथा त्रय्यामग्निहोत्रादिसाधनज्ञानं, वार्तायां भूम्यादिपरिज्ञानं, फलमपि स्वर्गप्राप्तिकृष्याद्यधिगमरूपमनेकविधम्। एवमनेकप्रभेदतत्त्वज्ञानसाध्यनिःश्रेयससमुदायस्य सङ्ग्रहः सूत्र कृतोऽभिप्रेतः, नहि एतद्दर्शनव्युत्पाद्यतर्कादिपरिज्ञानमन्तरा विद्यापदेभ्यो यावन्मात्रावगतिः तावता प्रेक्षावतां परितोषः माभूदादित्यो वै यूप इत्यादिभ्य आदित्यादीनां यूपादिता। एवमेव वार्तादिषु "माघे कर्षिताभूमिः स्वर्णमयं फलमावहत्"इत्यादि तर्कानपेक्षायां विफलमेव स्यात्। तस्मात् संशयपरीक्षाप्रमाणविनिवेशद्वारेण तदर्थतत्त्वमवधारणीयमिति सर्वस्यापि मूलं भवति आन्वीक्षिकीपरिज्ञानमिति तदेवाऽत्र प्राधान्येन निरूप्यम्। यद्यपि मोक्षप्रयोजनकत्वमपि प्रदर्शितं वार्तिकादौ तथाऽपि परम्परयैव तत् ज्ञातव्यं त्रय्यादिवत्, इतरथा प्रमाणादि कथनवैयर्थ्यापत्तेः।

किञ्च यदि एतस्य मुमुक्षुभिलषितज्ञानमात्रप्रतिपादनपरत्वं भवेत्तर्हि।

"संशयादीनां पृथग्वचनमनर्थकं संशयादयः प्रमाणेषु प्रमेयेषु चान्तर्भवन्तो न व्यतिरिच्यन्त इति। सत्यमेतत्। इमास्तु चतस्रो विद्याः पृथक्प्रस्थानाः प्राणभृतामनुग्रहायोपदिश्यन्ते यासां चतुर्थीयमान्वीक्षिकी न्यायविद्या। तस्याः पृथक्प्रस्थानाः संशयादयः पदार्थाः तेषां पृथग्वचनमन्तरेणाध्या-

त्मविद्यामात्रमियं स्यात् यथोपनिषदः । तस्मात्संशया-दिभिः पदार्थैः पृथक्प्रस्थाप्यते ”।

इत्यादिभाष्यं न सङ्गच्छेत । अत्र हि संशयादीनां पृथग्वचनमन्तरेणाध्यात्मविद्यामात्रमियमिति मात्रशब्दं प्रयुञ्जानेन उपनिषदश्च दृष्टान्ततया भाष्यकारेण एतद्दर्शनं पदार्थव्यवस्थापकयुक्तिजातनिरूपणाय प्रवृत्तं नतु प्रमेयप्रतिपादनाय, किन्तु तदंश उदासीनमेव । तदर्थन्तु वेदान्ता एव प्रवृत्ताः इत्येतदभिप्रेयते ।

“ चतस्र इमा विद्या भवन्ति ताश्च पृथक्प्रस्थानाः । अग्निहोत्रहवनादिप्रस्थाना त्रयीहलशकटादिप्रस्थाना वार्ता । स्वाम्यमात्यभेदानुविधायिनी दण्डनीतिः । संशयादिभेदानुविधायिनी आन्वीक्षिकी । तस्याः संशयादिप्रस्थानमन्तरेणाध्यात्मविद्यामात्रमियं स्यात् । ततः किं स्यात् ? अध्यात्मविद्यामात्रत्वात् उपनिषद्विद्यावत् त्रय्यामेवान्तर्भाव इति चतुष्ट्वं निवर्तते तस्मात् पृथग्गृह्यन्त इति ” वार्तिकम् । “ यद्यपीतरा विद्याः प्रामाणिकमेवार्थमभिनिविशन्ते तथाऽप्येतद्विद्याप्रतिपाद्यमेव प्रमाणाद्युपजीव्य स्वे स्वे व्युत्पाद्येऽर्थतत्त्वे प्रवर्तन्ते न तु प्रमाणाद्यपि व्युत्पादयन्ति। तदनेन विद्योपकरणग्रहणेन व्यापार आन्वीक्षिक्या दर्शितः ” ।

इति तात्पर्यटीका चैनमेवार्थं प्रदर्शयतः ।

“तदेतदुक्तं भवति न्यायव्युत्पादने व्यापारवत्तया हि इयमान्वीक्षिकी विद्यान्तराद्भिद्यते । सच संशयाद्यङ्गोपाङ्गैनैव व्युत्पादितो भवति ततोऽस्याः संशयादयो विषयभूताः ताननन्तरेण निर्विषयतया विद्यैव न स्यात् विषयान्तरवत्तया विद्यान्तरमेव वा स्यादिति ” ।

अभिदधानः तात्पर्यपरिशुद्धिकार उदयनाचार्योऽपि पूर्वो-

क्तमेवानुमेने । अत एवा ऽग्रेऽपि—

" न च वाच्यमस्तु विद्यात्रयमेव कृतमान्वीक्षिक्या विद्ययेति ? एतस्या एव समस्तविद्यावदातीकरणहेतुत्वात् । यथा वक्ष्यति—प्रदीपः सर्वविद्याना"

मिति पङ्क्तिव्याख्यानावसरे

" न ह्यन्या विद्याः स्वं स्वमर्थं व्युत्पादयन्त्योऽपि कथमेतदित्यश्रद्धामलमपनेतुमीशते विनैवमान्वीक्षिकीमित्याशयवान् परिहरति । एतस्या एवेति " इत्यभिहितवान् ॥

तथा—

"नमामि धर्मविज्ञानवैराग्यैश्वर्यशालिने ।

निधये वाग्विशुद्धीनामक्षपादाय तायिने"

इति श्लोकव्याख्यानावसरे तायी—तत्त्वाध्यवसायसंरक्षणक्षमकथासम्प्रदायप्रवर्तक इति व्याचख्यौ । न्यायदर्शनस्य मोक्षसाधनप्रतिपादनार्थत्त्वे संरक्षणपदस्य वैयर्थ्यापत्तेः अतो ऽवगम्यते यदत्र न प्रमेयपरत्वं, किन्तु येन श्रौतज्ञानं समुत्पन्नं वादिविप्रतिपत्त्यादिभिः कलुषितं न भवेत् तादृशयुक्तिजालोद्भावनपरमिति

"सेयमान्वीक्षिकी प्रमाणादिभिः पदार्थैर्विभज्यमाना—

प्रदीपः सर्वविद्यानामुपायः सर्वकर्मणाम् ।

आश्रयः सर्वधर्माणां विद्योद्देशे प्रकीर्तिता "

इति ब्रुवाणो भाष्यकारः स्पष्टमेव न्यायदर्शनस्य सर्वविद्याङ्गत्वमाचख्यौ । तेन चोपायभूतत्वमेवाऽस्या लभ्यते न तु प्राधान्यं, तथा सति सारभूता सर्वविद्यानामित्यावश्यकं, यथाहि—प्रदीपस्य सन्तमसापनयनद्वारेणाऽवस्थितघटाद्यर्थाभिव्यञ्जकत्वमात्रेण फलत्वञ्च न भवति, अपितु घटाद्यभिव्यक्त्या हानोपादानादिभिः

फलं लभ्यते इति तस्य साधनत्वमेव, तथा मोक्षसाधनीभूततत्त्वज्ञानं वेदान्तैः साधयितुं न शक्यते यावत् पूर्वपक्षोत्प्रेक्षितन्यायाभासनिवर्तनक्षमाऽऽन्वीक्षिकी नाधिगता स्यात् इति परम्परया तस्याउपयोगः न तु साक्षात् । अतएव वार्तिककारोऽप्येतद्भाष्यं व्याचक्षाणः ।

"प्रदीपवत् प्रमाणादिप्रतिपादितमर्थमितरा विद्याः प्रतिपादयन्ति । किमितरासु विद्यासु प्रमाणादीनि न सन्ति ? नसन्तीत्याह । कथं न सन्ति । अनधिकारात्—न ता विद्याः प्रमाणादिपरिज्ञानेनाधिक्रियन्ते प्रमाणादिप्रकाशिते त्वर्थे ताः प्रवर्तन्ते" इत्यादिना इतरासां विद्यानामुपपत्त्येन प्राधान्यं सूचयाम्बभूव, तथाऽस्याः प्रमाणादिपरिकरप्रतिपादनार्थत्वं चाऽनुमेने ।

यथाहि व्याकरणं सर्वविद्याङ्गमिति न तद् स्वातन्त्र्येण कस्य चिन्मतस्य प्रतिष्ठापकं किन्तु व्युत्पत्त्याधानद्वाराऽध्येष्यमाणसर्वविद्यासु योग्यतातिशयमापादयति, अतो न तदध्ययनमात्रेण कृतकृत्यता सम्पाद्यते, किन्तु अन्यानि दर्शनान्यधीत्यैव, तथैव न्यायदर्शनेनापि।तथा व्याकरणेष्वेव प्रसङ्गात्सत्कार्यवादादिकं दर्शनप्रतिपाद्यं किञ्चित्तत्त्वमुद्भाव्य विचारितमपि न तत्तद्दर्शनप्रतिपाद्यं, शब्दसाधुत्वज्ञानौपायिकतयैव तस्योपक्षीणत्वात्, तथाऽस्यापि दर्शनस्य प्राधान्यात् प्रमाणादिकं निरूपयितुं प्रवृत्तस्य प्रसङ्गात् यत् कुत्रचित् स्वमतपरिग्रहइ। दृश्यते न तत्र तात्पर्यम् । यथा लक्षणसूत्रमेकं निर्माय तस्य लक्ष्येषु प्रवृत्तिं दर्शयितुं बहुभिर्वैयाकरणैः स्वबुद्धिभेदेन विविधान्युदाहरणानि प्रदर्श्यन्ते, परं नैकत्राऽपि निर्भरः, तथा तत्र न कोऽप्याशङ्कामुद्भावयितुमर्हति 'किमिति इदमेवोदाहरणं प्रदर्श्यते न तूदाहरणान्तरमिति, यतस्तत्र तात्पर्याभावात्, तद्वत् वस्तुसिद्धौ चिकीर्षिता-

यामपेक्षितानां युक्त्यादीनां शिष्यबुद्धिवैशद्याय प्रवृत्तिं बोधयितुं लक्ष्यस्थलमिव निरूपितमास्ते ऽद्वैतदर्शनविरुद्धं परमाणुनित्यत्वादिकं, नतु तत्र तात्पर्यं, यथाऽत्रैव पञ्चमाध्याये जातिनिग्रहस्थाननिरूपणप्रसङ्गे बहुविधोदाहरणप्रदर्शने ।

यदि चाऽसत्कार्यवादादिकं न्यायदर्शनप्रतिपाद्यमेव स्यात् तर्हि किमिति प्रतितन्त्रसिद्धान्तनिरूपणावसरे उदाहरणं प्रदर्शयता भाष्यकारेण—

"नासत आत्मलाभः न सत आत्महानं निरतिशयाश्चेतना देहेन्द्रियमनःसु विषयेषु तत्तत्कारणे च विशेष इति साङ्ख्यानां, पुरुषकर्मादिनिमित्तो भूतसर्गः कर्महेतवोदोषाः प्रवृत्तिश्च, स्वगुणविशिष्टाश्चेतनाः असदुत्पद्यते उत्पन्नं निरुध्यत इति योगाना'मित्यत्र योगपदग्रहणं कृतं, नैयायिकानामित्येव वक्तव्यमासीत्, अत्रत्ययोगशब्देन वैशेषिका एवाभिप्रेयन्ते इति वक्तव्यं,(१) नहि पातञ्जलैः पुरुषस्य सगुणत्वं तददृष्टनिमित्तोभूतसर्गो ऽसत्कार्यवादादिकमभ्युगम्यते इति प्राज्ञेन वक्तुमपि शक्यं, तथा सति तदीयग्रन्थविरोधस्यापरिहरणीयत्वप्रसङ्गात् । तथा च नैयायिकानामपि अत्रैव तात्पर्यं चेत् योगपदं व्यर्थमित्यापद्येत । तेन ज्ञायते भाष्यकारस्य नेदं स्वकीयं मतं परमतमेवोदाहरणप्रदर्शनायोपन्यस्तमिति न तत्र तात्पर्यम् ।

इदमपरमत्रावधेयं प्रेक्षावद्भिः— कस्यचिदपि ग्रन्थस्य यस्मिन्कस्मिन्नप्यर्थे तात्पर्यं निर्णेतव्यं चेत्

" उपक्रमोपसंहारावभ्यासो ऽपूर्वता फलम् ।
अर्थवादोपपत्तीच लिङ्गं तात्पर्यनिर्णये "

---

(१) योगाचारविभूत्या यस्तोषयित्वा महेश्वरमिति अन्ते प्रशस्तपादभाष्ये लेखनात् ।

इति वृद्धोक्तप्रकारेण षड्विधलिङ्गैरेव तन्निर्णयः । तत्र प्राथमिकं लिङ्ग उपक्रमोपसंहारैकरूप्यं शब्दनिष्ठं सर्वतोऽभ्यर्हितं, एकरूपताया अभावे एकवाक्यताज्ञानाभावेन विशिष्टैकार्थप्रतिपादकत्वमेव दुर्घटं स्यात् तथाच यथा—वेदान्तसूत्रेषु "अथातो ब्रह्मजिज्ञासे"ति मोक्षसाधनीभूतब्रह्मज्ञानाय वेदान्तविचारकर्तव्यतामुपक्रम्य तन्निर्वृत्तमोक्षरूपं फल " अनावृत्तिः शब्दादनावृत्तिः शब्दा"दित्यन्ते उपसंह्रियमाणं दृश्यते तावता चेदं शास्त्रं ब्रह्मज्ञानसाधनकमोक्षतात्पर्यकमिति अनुमातुं शक्यते । येन चोपक्रम्यते येन चोपसंह्रियते तदेव वाक्यार्थ इति हि शब्दविदः यथो पांशुयाजवाक्येऽग्नयोः पुरोडाशयोर्जामितादोषसङ्कीर्तनपूर्वकोपांशुयाजविधाने तत्प्रतिसमाधानोपसंहारे चापूर्वोपांशुयाजकर्मविधिपरतैकवाक्यता बलादाश्रिता, एवमत्रापि गौतमप्रणीतन्यायशास्त्रस्य मोक्षप्रतिपादनपरत्वसाधनायोपक्रमोपसंहारयोरेकरूपत्वमयुक्तैकवाक्यत्व हेतूकर्तव्यम् । परन्तु तदेवासिद्धं, "हेत्वाभासाश्च यथोक्ता" इत्यन्तिमसूत्रेण तु उपक्रमानुगुणपदार्थनिरूपणमेवोपसंह्रियते, न तु अपवर्गकथा लेशतोऽपि सूच्यते तत्कथ मेक्षावद्भिरिदं शास्त्रं मोक्षनिरूपणपरमित्यधिगन्तव्यमिति सुधिय एव निरूपयन्तु । एवञ्च न्यायोऽत्तरमीमांसाशास्त्रेऽपि योजनीयः यतस्तत्रापि " अथातोधर्मजिज्ञासे"त्युपक्रम्य "अन्वाहार्येच दर्शनात्" इत्यन्तस्य धर्मविषयकत्वेनैकरूपार्थविषयकतया धर्मपरत्वमेवानुमास्यत न तु स्वातन्त्र्येण मोक्षसाधनप्रतिपादनपरत्वम् । अत एव भगवद्रामानुजाचार्याः स्पष्टमेवोत्तरमीमांसाशेषत्वं पूर्वमीमांसायाः प्रतिपादयन्तिस्म । शेषत्वे विप्रतिपन्ना अपि ब्रह्मविदो मीमांसायाः स्वातन्त्र्येण मोक्षसाधनप्रतिपादकत्वं नास्तीत्यत्र कृतसम्मतिका एव ।

यच्च द्वितीय लिङ्गमभ्यासरूपं तदप्यत्र न समुपलभामहे ।

अभ्यासोनाम पौनःपुन्येन तत्कथनं, तेन हि प्रेक्षावतामेतादृशी बु-द्धिरुदेति यदत्र प्रतिपादयितुरादरातिशयो वर्तते इति, तेन चात्रैव तात्पर्यं वक्तुरित्युन्नेतव्यम् । प्रकृते च सकलमेव न्यायदर्शनं तद्वि-परीतमनुभूयते, यत्र हि यस्य प्राधान्येन निरूपणं तदेव विस्तरेण निरूपणीयमितरत् सङ्क्षेपेण निरूपणीयमित्यस्ति लौकिकानां तीर्थकराणां च मर्यादा । एवञ्चेव अत्राऽपि यस्य तत्त्वज्ञानेन साक्षान्मोक्षः फलं तदेव प्राधान्येन विहायेतरनिरूपणं विस्तरेणा-ऽसकृद्वर्णनीयं, ननु तथोपलभामहे । तथाहि पञ्चाध्याय्यां हि आदितोऽध्यायद्वयेनोद्देशोलक्षणं लक्षितेषु च प्रमाणानां परीक्षेति द्वयं वृत्तं, पञ्चमाध्याये तु जातिनिग्रहस्थानयोरेव निरूपणं कृतमिति तृतीयचतुर्थाध्याययोरेव प्रमेयपरीक्षाया अवसर इति वक्तव्यम्, त-त्रापि तृतीयस्य प्रथमाह्निके नव प्रकरणानि, तेषु चत्वारि प्रकरणानि देहेन्द्रियमनोव्यतिरेकेणात्मनित्यत्वप्रतिपादकानि सन्ति, अन्यानि पञ्च प्रासङ्गिकानि नात्मतत्त्वज्ञानस्य साक्षादुपकारकाणि।द्वितीया-ह्निके च सप्त प्रकरणानि,तेषु बुद्ध्यनित्यत्वात्मगुणत्वक्षणिकत्वशरी-राश्रितत्वप्रतिषेधप्रतिपादकानि चत्वारि प्रकरणानि प्रकृतोपयुक्ता-नि;अन्यानि त्रीणि न प्रकृतोपयुक्तानि। चतुर्थाध्यायेऽपि द्वित्राण्ये-व प्रकरणानि विद्यन्ते आत्मतत्त्वज्ञानोपयोगीनि। एवं सम्भूय ८४ चतुरशीतिप्रकरणात्मके न्यायशास्त्रे अष्टौ नव वा प्रकरणानि आत्मतत्त्वमात्रनिरूपणाय प्रवृत्तानि सन्ति । एवं स्थिते एतद्दर्शनं आत्मतत्त्वकथां सङ्क्षेपेण समाप्येतरद्बाहुल्येन विचारयति, अत इदं मोक्षसाधनार्थमेव शास्त्रं प्रणीतमिति कथं प्रामाणिकैर्विश्वसनी-यमिति प्रेक्षावन्त एव विदाङ्कुर्वन्तु।

इदानीं तृतीयं लिङ्गं अपूर्वत्वं विचारयामः- भवत्वान्वीक्षि-क्या अध्यात्मविचारत्वं, तथापि अप्राप्ते शास्त्रमर्थवदिति न्यायात्

यत्प्रमाणान्तरेण यथाकथञ्चिदपि न प्राप्तं तदेव शास्त्रेणोपदेष्टव्यं, न तु यद्बालिकोपि ज्ञातुं शक्नोति तस्यापि प्रतिपादनं, ज्ञातत्वेन प्रेक्षावद्भिरजिज्ञासितत्वेन तदर्थे तात्पर्यनिर्णायकस्यापूर्वत्वस्याभावेन प्रामाण्यस्योच्छेदापत्तेः, अज्ञातज्ञापकं हि प्रमाणं, इतरथा स्मृतीनामपि प्रामाण्यस्य दुर्निवारत्वापत्तेः । एवं सति यादृशमात्मतत्त्वं सुखदुःखादिगुणविशिष्टं ज्ञेयत्वेनोपक्षिप्यते गौतमीयैस्तादृशं सर्वैरनायासेनानुभूयमेवेति तन्निरूपणं पिष्टपेषणायितमेव स्यात् । कोनामात्मानं विविधसांसारिकदुःखदावानलज्वालापरीतं तत्परीहारोपायमन्वेषमाणं न वेदेति व्यर्थमेवेदं शास्त्रं स्यात् तथाचापूर्वत्वस्य तात्पर्यनिर्णायकमूर्धाभिषिक्तस्य प्रामाण्यशरीरनिर्वाहकस्याभावादपि मोक्षसाधनप्रतिपादनपरत्वं निरस्तं वेदितव्यम् ।

किञ्च—

" यो यथाऽवस्थितः पदार्थस्तस्य तथाभाव एव तत्त्वं तस्य ज्ञानं तत्त्वज्ञान"

मितिहि न्यायभाष्यकृद्वाक्यं, एवञ्चेत् शास्त्रमधीत्य मत्वा ध्यात्वा यः सम्पादनीयः साक्षात्कारः स इदानीमप्ययनायासेनैव सर्वैर्लब्ध इति श्रवणमननादिसाधनानां वैयर्थ्यम् । नहीदानीन्तनस्य विशिष्टसाधनाधीनजन्मनोमोक्षावस्थापूर्वभाविनश्च तत्त्वज्ञानस्य लेशतोऽपि विषयकृतं वैलक्षण्यमभ्युपगम्यते नैयायिकैः, येन सार्वलौकिकस्याऽऽत्मसाक्षात्कारस्यायथार्थत्वान्निर्विचिकित्सापरोक्षज्ञानसम्पादनायास्माभिश्चेष्टितव्यमिति शास्त्रस्य साफल्यं सम्भाव्येत । आत्मनि कर्तृत्वभोक्तृत्वादिधर्माणां तैर्वास्तवत्वाङ्गीकारात् । नचाहंसुखीदुःखीत्यादिप्रत्ययादन्यदस्यात्मयाथात्म्यज्ञानमेतच्चैतत्सर्वदाऽनुवर्तते किमर्थं तर्हि श्रमाङ्गीकरणम्

" अर्के चेन्मधु विन्देत किमर्थं पर्वतं व्रजेत् ।
इष्टस्यार्थस्य संसिद्धौ को विद्वान् यत्नमाचरेत्"

इतिन्यायात् । यद्युच्येत सिद्धे किलात्मसाक्षात्कारे सर्वमेतदेवं स्यात् नत्वेतदस्ति, तथासति संसारोच्छेदप्रसङ्गः निवर्तकस्य ज्ञानस्य सर्वदा सत्वात् तस्मात्साधनपरम्परासमुपजातः साक्षात्कार एवैषितव्य इति । तन्न तथासति आत्मनि सुखित्वदुःखित्वादिकं मृषेत्यद्वैतसिद्धान्तापातात् । तस्मात्सर्वजनानुभवसिद्धव्यावहारिकसुखित्वदुःखित्वादिविशिष्टमात्मानमनूद्य प्रमाणादिपदार्थतत्त्वपरिज्ञानार्थमेवेदं शास्त्रमिति बलादभ्युपगन्तव्यम् । येन सर्वेषां सूत्राणां सार्थक्यं स्यात् ।

किञ्च यद्यात्मनः भवदभिमतं सुखदुःखादिमत्त्वं वास्तवं कथङ्कारं ज्ञानेन निवृत्तिः स्यात्, नहि सत्यं वस्तु ज्ञानाद्विनश्यदनुभूयते सत्यस्यात्मवदनिवृत्तेः, कर्मानुष्ठानेन सत्यमपि वस्तु नाशयितुं शक्यं, परं तत्साचिव्यं तु ज्ञानस्य न श्रीमद्भिरङ्गीक्रियते समुच्चयवादिवत् । अत एव चतुर्थाध्यायस्याद्याह्निक समाप्तौ "ऋणक्लेशप्रवृत्त्यनुबन्धादपवर्गाभाव" इत्यादिना महत्पाऽऽरम्भट्टया कर्मणामात्मज्ञाने सहकारित्वं निराकृतं भाष्यकृता । सूत्रकृता च तत्त्वज्ञानमात्रान्मिथ्याज्ञानादिविनाशक्रमेणापवर्गं ब्रुवता कर्मणामत्यन्तमनुपयोगो मोक्षे ऽभिधीयते, तथाच न कर्मसाध्यत्वं, न च ज्ञानमात्रविनाश्यत्वं सत्यस्य सम्भवतीति " दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तरापायादपवर्ग" इति सूत्रासाङ्गत्यापत्तिः । इत्थं यदि ज्ञानमात्रसाध्यताऽभ्युपगन्तुमिष्यते मोक्षस्य तर्हि त्यज्यतां सत्यत्वाभिनिवेशः स्वीक्रियतां चाद्वैतवादः तथासति मुमुक्षूणां संसारपरित्यागेन ज्ञानार्थितया श्रवणादिसाधने प्रवृत्तिः सफला स्यात्, एतावता चैतत्सिद्धं यादृशमात्मतत्त्वं नैयायिकैः प्रतिपा-

द्यते न तादृशमभिमतं गौतमस्य महर्षेः अपितु वैशेषिकादीनामेव, अत एव श्रीशङ्कराचार्याः स्वग्रन्थेषु वैशेषिकं प्रतिपक्षत्वेनाभिमुखीकृत्य खण्डयन्तिस्म पूजयन्तिस्मच महर्षिं गौतमम् । तस्मान्न्यायशास्त्रस्यैतदंश औदासीन्यमिति सिद्धम् ॥ एतेन चतुर्थमपि लिङ्गं फलवत्त्वं तात्पर्यनिर्णायकं पराकृतमिति वेदितव्यम् ॥

अस्मिन् दर्शने भाष्यकारैः आन्वीक्षिकी यथा स्तूयते न तथा आत्मज्ञानमिति पञ्चममर्थवादरूपं लिङ्गमपि पदार्थप्रतिपादनपरत्वसाधनेनैवान्यथासिद्धं नात्मप्रतिपादनपरत्वसाधनायालम् । षष्ठमुपपत्तिशब्दवाच्यमबाधितत्त्वं यथा द्वैतस्य न सम्भवति तथा सुस्पष्टमेव त्रय्यन्तोऽविवाति न तद्विषये प्रयत्यते। पराक्रान्तं चात्र सूरिभिस्तदास्तां तावत् ।

एवं षड्विधतात्पर्यनिर्णायकानां लिङ्गानामभावे एतच्छास्त्रं मोक्षतात्पर्यकमिति कथं प्रामाणिका अभ्युपगच्छन्तु इति सुधियोऽत्र निष्पक्षपातं विचारयन्तु ।

तदेवं प्रामाणिकमूर्द्धन्यैर्वात्स्यायनोद्योतकरवाचस्पतिमिश्रप्रभृतिभिः सर्वथाऽभ्युपगतेऽप्यमुष्मिन्नर्थे आग्रहैकपक्षपातिनो ये वस्तुभूतमप्यर्थमतथाभूतमेव गृह्णन्ति, प्रतिपादयन्ति च एतदेव शास्त्रं सर्वैर्मुमुक्षुभिरादरणीयं, न तु वेदान्ताः, तत्प्रतिपादितमद्वैततत्त्वं चेति, तन्मतनिराचिकीर्षया खण्डनखण्डखाद्यं प्रणिनाय श्रीमान् श्रीहर्षः। अस्य च ग्रन्थकर्तुरयमभिप्रायः आन्वीक्षिकीशब्दादेवैषोऽर्थः प्रस्फुरति यत् श्रवणस्य अनु पश्चात् ईक्षणं तद्युक्तायुक्तत्वनिर्णयार्थमूहात्मकोव्यापारः युक्तिसहितः तेनार्थनिर्णयः कर्तव्यः, श्रवणं नाम श्रुतिवाक्यानां कुत्र तात्पर्यं इति जिज्ञासायां तन्निर्णयानुकूलो व्यापारः सच वेदान्तवाक्यैरेव कर्तव्यः तत्र चेद्वादिविप्रतिपत्ति-

मेवेव तर्हि तन्निवृत्तये आन्वीक्षिकीशब्दोदितं युक्तिजालं तत्रो-पसंहर्तव्यं, परन्तु नहि "वरविघाताय वधूद्राह" इति न्यायेन वेदान्तवाक्यानि तिरस्कृत्य यथेच्छं श्रुतिवाक्यविरोधि च मतमुद्भावनीयं, किन्तु तदविरोधितर्कोपन्यासपुरस्सरं श्रुत्यर्थः सम्भावनीयः अतएव न्यायभाष्यकारः प्रतिपादयतिस्म—

" यत्पुनरनुमानं प्रत्यक्षागमादिविरुद्धं न्यायाभासः स " इति । एवमेव वार्तिकटीकयोरपि समुपलभ्यते । तथा च यत्कल्पनीयं तत् श्रुत्यविरोधि कल्प्यतां न तु श्रुतिं भङ्क्त्वा । तथा सत्येवान्वीक्षिकीशब्दस्वारस्यं सिद्धं भवति । तद्विरुद्धार्थकल्पने त्ववैदिकत्वमेवैतस्य दर्शनस्य स्यात् । न च पूर्वोत्तरमीमांसयोरिवाऽत्र श्रुत्यर्थविचार उपलभ्यते येनैतद्वैदिकमित्यवगन्तुं शक्येतातोऽस्य दर्शनस्य न क्वापि मते पक्षपातः । केवलं यत् सर्वतीर्थकराणामपेक्षितं युक्तिजालं तदेव निरूप्यते । एतच्च वस्तुतत्त्वमनादृत्य मासाङ्किकमन्यतात्पर्येण चोपन्यस्तमात्मभेदादिकं वस्तुसदिसभ्युपगम्य श्रुतिशतसमधिगम्यमद्वैतं परिभावयितुं ये प्रवर्तन्ते तान्प्रतीदमुच्यते आगम्यतां क्रियतां च शास्त्रार्थविचारः अद्वैतमेव तत्त्वमुत द्वैतमिति, याभिरुपपत्तिभिर्भवता वस्तुसिद्धिरभिलष्यते ताभिरेव ता एव युक्तयो भवदीया बाधिता भवन्ति, नास्माभिः किञ्चिदभिनवमुद्भाव्य युक्तिजालं किञ्चित्स्थाप्यते दूष्यते वा । तथाहि—

घटपटादीनां सत्यत्वं केन प्रमाणेनाऽवगतं? प्रत्यक्षेणेति चेत् ? तर्हि स्वाप्नपदार्थस्य शुक्तिरजतादेश्च सत्त्वापत्तिः प्रत्यक्षेण प्रतीयमानत्वाऽविशेषात् । अबाधितप्रत्यक्षेणेति चेत् ? घटादिप्रत्यक्षस्य बाधोनास्तीति कथं त्वया ज्ञातं, अनुपलब्ध्या तत्सिद्धिरिति कथनं तु अप्रयोजकं, यतः स्वाप्नपदार्थानां जाग्रति बाधवत्

जाग्रत्कालिकानामपि स्वप्ने बाधस्य उपलब्धेः एवं स्थिते परस्परस्य परस्परावस्थायां बाधितत्वात् कतरत्सत्यं कतरद्वाधितमिति नैव व्यवस्थापयितुं शक्यं, यादृशोहि इन्द्रियान्वयव्यतिरेको व्यावहारिकघटादिप्रत्यक्षे समुपलभ्यते तादृश एव स्वाप्नप्रत्यक्षेपि। तत्रेन्द्रियाद्यभावात् इन्द्रियान्वयव्यतिरेकज्ञानस्य चक्षुषा गज इत्यादिज्ञानस्य च भ्रान्तत्वमिति चेत् ? जाग्रद्दशायामपि तादृशप्रसङ्गस्य भ्रान्तत्वं नास्तीत्यत्राप्यसिद्धेः। यथाहि स्वप्ने सर्वमेव तदानीं कल्प्यते नतु पूर्वसिद्धं किञ्चिदस्ति, परंतु किञ्चित्पूर्वसिद्धत्वेन दृश्यते किञ्चित्तु तदानीमेवोत्पद्यमानत्वेन, तथा स्वप्नमात्रत्वेपि युगाद्यात्मकः कालोऽप्यतिवाहित इति भवति बुद्धिर्नतु युगाद्यात्मककालस्य वस्तुत्वं तद्वदेव जाग्रत्यपि। प्रत्यभिज्ञानुभवादिकं स्वप्नेऽपि समानं, दिनान्तरीयस्वप्नानुभूतस्य दिनान्तरीयस्वप्नेऽप्यवभासदर्शनात्। जाग्रत्कालीनानुभवजन्यसंस्कारसहकृतमनोजन्यत्वात्स्वप्नदर्शनस्य भ्रान्तत्वमिति चेत् ? स्वाप्नानुभवजन्यसंस्कारसहकृतमनोजन्यानुभवविषयत्वं जाग्रत्पदार्थस्येति वैपरीत्यमेव किं न स्यात्। तस्मात्प्रतीत्यविशेषात् स्वाप्नपदार्थेभ्यो न जाग्रत्पदार्थस्य कश्चिद्विशेष इति सिद्धं सकलस्यानिर्वाच्यत्वम्।

नचैवंरीत्या शून्यवाद एव प्रसज्येतेति वाच्यम्। अनृतस्यापि सत्याधिष्ठानकतया सत्याभावेऽनृतस्याप्यनुपपत्त्या तदङ्गीकारात्। तच्चाधिष्ठानं स्वयम्प्रकाशज्ञानमेव निरपेक्षसिद्धिकं, तस्मिन्नेव सर्वे पदार्थाः कल्पिता एकस्मिँश्चन्द्रेऽनुभूयमाने तस्मिन् कल्पितोऽपरश्चन्द्रमा इव प्रतिभासन्ते। नहि केनाऽपि वादिना ज्ञानाद्भिन्नं विषयं तात्त्विकं स्वीकृत्य तस्य प्रकाश उपपादयितुं शक्यते तथासति अन्यत्वाविशेषात् घटज्ञाने पटस्य प्रकाशप्रसङ्गः। तदभावात् प्रकाशमानताभ्युपगमेपि तुल्योदोषः।

नच सहभावोऽपि ज्ञानार्थयोः सर्वत्र सम्भवति अतीतानागतविषयकज्ञानेषु सहभावासम्भवात् । न च ज्ञानार्थयोर्वास्तवं तादात्म्यं अर्थाना विच्छिन्नस्थूलदीर्घत्वेनानुभूयमानत्वात् प्रकाशस्य चाऽऽन्तरत्वास्थूलत्वादूरूपेण प्रकाशनात् । तत्पारिशेष्यात् ज्ञाने विषयाणां कल्पितत्वात् कल्पितस्य चाधिष्ठानात्पृथक्सत्त्वाभावेन कल्पिततादात्म्यवत्त्वात् प्रतीतिरित्येव स्वीकर्तव्यम् ।

एतेन यदि सर्वमेवाऽसत्यं तथा सति—

" आशामोदकतृप्ता ये ये चोपार्जितमोदकाः ।

रसवीर्यविपाकादि तुल्यं तेषां प्रसज्यते "

इत्येदतपि बाधकं निरस्तम् । उभयत्रापि ज्ञानवैलक्षण्यात् यत्र हि मोदकलाभज्ञानमनाहार्यं भवति तत्र रसवीर्यविपाकादिकं फलं, यत्र त्वाहार्यं तज्ज्ञानं तत्र न तादृशं फलम् । किञ्च फलमपि न वास्तवं किन्तु ज्ञानरूपमेवेति कुत्रचित्तदानीन्तनबाधविषयज्ञानरूपं फलं कुत्रचित् व्यावहारिकबाधविषयज्ञानरूपं फलमिति नाव्यवस्था, वर्णेषु ह्रस्वत्वदीर्घत्वादीनां समारोपितत्वाऽविशेषेपि नग इत्युच्चरितात् नाग इति गृहीतात् पदात् गजज्ञानं जायमानं भ्रान्तिरूपं भवति, नतु नाग इत्युच्चरितात् तथैव श्रोत्रेण गृहीतात् पदात् जायमानं भ्रमात्मकं भवति, तत्कस्य हेतोः ? नायं नियमः यत्सर्वस्मादसत्यात्सर्वस्य सत्यस्यासत्यस्य वा जन्मेति । किन्तु यतः कुतश्चिदसत्यात् यस्य कस्यचिदसत्यस्य सत्यस्य वा जन्मेति । वस्तुतो न चकिञ्चित् कुतश्चिदुत्पद्यते निरुद्ध्यते वा, केवल ज्ञानमात्रमेव तथा भवति व्यवहारश्च, तथा च श्रुतिः—

"न निरोधो न चोत्पत्तिर्न बद्धो न च साधकः ।

न मुमुक्षुर्न वै मुक्त इत्येषा परमार्थता"-इति ।

युक्तं चैतत्— सर्वस्यापि वस्तुनः साध्यसाधर्नात्मकत्वेन प्रतीयमानतया तत्सिद्धौ मूलं कार्यकारणभाव एव, तस्मिन् सिद्धे

कार्यविशेषेण कारणविशेषोऽनुमातव्यः यथा घटादिकार्यं दण्डादिजन्यं तथैव प्रपञ्चोऽपि कार्यत्वात् केन चित्कारणेन जनित इति, किं तत्कारणमिति जिज्ञासायां परमाणवो वा प्रधानं वा स्वस्वमतानुसारेण कारणं किमपि व्यवस्थापयन्ति वादिनस्तद्बलेन च सर्वस्य जगतः सत्त्वमपि साधयितुं समीहन्ते—यद्यसदेतत् स्यान्न कारणान्वयव्यतिरेकावुपपद्येयाताम् । तथा सत्याशामोदकतृप्तानामुपार्जितमोदकानां च रसवीर्यविपाकादिसाम्यप्रसङ्गात् असत्यत्वाविशेषादतो यदभावादाशामोदकस्यार्थक्रियाकारित्वं नोपलभ्यते उपलभ्यते चोपार्जितमोदकस्य, तत्किञ्चिदेष्टव्यं, तत्किमिति चेत्सत्त्वमेवेत्यभिमानोवादिनाम् । परमसौ विचारं न सहते—

प्रथमतो दृष्टान्तमेवालोचयन्तु भवन्तः दण्डघटयोरेव कार्यकारणभावः तात्त्विक उत व्यावहारिक इति, न तावत्प्रथमः कल्पो युज्यते कारणत्वस्य निर्वक्तुमशक्यत्वात् । तथाहि–किं तत्कारणत्वं ? यदि पूर्ववृत्तित्वं तदा चिरध्वस्तस्यापि कारणत्वापत्तिः । अव्यवहितपूर्वभावित्वं चेत् दण्डत्वस्यापि स्वाश्रयाश्रयत्वसम्बन्धेन नियताव्यवहितपूर्ववृत्तित्वसत्त्वात्कारणत्वप्रसङ्गः । यद्यनन्यथासिद्धत्वविशेषणान्नैष दोष इत्युच्यते तदपि न युक्तम् । यतः किं तदन्यथासिद्धत्वं ? येन दण्डत्वादीनां कारणत्वं निवार्येत । अवश्यक्लृप्तनियतपूर्ववर्तिभिन्नत्वमिति चेत् ? तर्हि दण्डवत् दण्डत्वस्यापि सम्बन्धविशेषेणावश्यक्लृप्तत्वस्य सत्त्वात् अनन्यथासिद्धत्वापत्तिः । यत्तु अवश्यक्लृप्तत्वं नाम लघुत्वं तथा च लघुनियतपूर्ववर्तिभिन्नत्वमन्यथासिद्धत्वं पर्यवसितं लघुत्वं च शरीरसम्बन्धोपस्थितिकृतं त्रिविधं तथाच . दण्डत्वस्य कारणत्वे दण्डघटितपरम्परायाः सम्बन्धत्वकल्पने गौरवात् दण्डस्य कारणत्वे सम्बन्धांशे लाघवात् च तदेव कारणं दण्डत्वं चाऽन्यथासिद्धमिति । तन्न । परस्पराश्रयेण कारणत्वपदार्थाऽपरिज्ञानप्रसङ्गात् ।

तथाहि—लघुत्वगुरुत्वयोः परस्परप्रतिद्वन्द्वित्वेन परस्परग्रहसापेक्षतया गुरुत्वग्रहे सति लघुत्वग्रह स्तद्ग्रहे च गुरुत्वग्रहः तथा च तयोरेव निर्वचनासम्भवात्कथं तद्घटितकारणताग्रहसिद्धिः । किञ्च—

किञ्च गुरुभूतस्य सम्बन्धस्य धर्मस्य वा कारणतावच्छेदकत्वे किं नश्छिन्नं, नहि गौरवज्ञानस्य कारणतावच्छेदकत्वग्रहप्रतिबन्धकत्वं सुशकं वक्तुं तदभावाद्यनवगाहित्वात् । तदभावाद्यनवगाहित्वेऽपि मणिमन्त्रादिन्यायेन प्रतिबन्धकत्वाङ्गीकारे तर्हि प्रतियोगितावच्छेदकत्वसाध्यतावच्छेदकत्वादिकं गुरुभूतस्य न स्यात्, अङ्गीक्रियते च । अतएव दीधितिकारेणापि गुरुरपि धर्मो भवत्यवच्छेदकः प्रतियोगिताया इत्युक्तम् । अतः पारिशेष्यादेतदेव वक्तव्यमापतति यत् यत्र यत्र प्रामाणिकानां कारणत्वेन व्यवहार स्तदनन्यथासिद्धं यत्र च न कारणत्वव्यवहार स्तदन्यथासिद्धमिति । लोके च एतादृशोऽनुभवः यत् लघोः कारणत्वसम्भवे न गुरोस्तदङ्गीक्रियत इति चेत् ? तत्रैव नियामकं किं इति पृच्छयते तत्र व्यवहार एव प्रामाणिकानां नियामक इत्युक्तौ घट्टकुटीप्रभातवृत्तान्तापातः तथाच कारणत्वस्य व्यवहारमात्रसिद्धत्वे व्यवहारस्य वास्तवत्वनिरपेक्षत्वेन देहात्मव्यवहारवत्तया तद्वदेव दण्डादावपि वस्तुतः कारणत्वाभावेऽपि भ्रमेणैव व्यवहारसम्भवाच्च वास्तवत्वमिति व्यवहारमात्रसिद्धकार्यकारणभावबलेन जगत्सत्यत्वं वादिभिः कथं सूपपादमिति कृतधिय एव विदाङ्कुर्वन्तु । अबाधितव्यवहारबलात्सत्यत्वसिद्धिरिति चेत् अग्रे बाधो न भविष्यतीति निश्चेतुमशक्यत्वात् । प्रतीतिश्च भ्रान्ता या अपि सम्भवात् । यथाऽऽह खण्डनकारः "को ब्रूते सती नाम सा विचिः असत्येव कुतो न स्यात्" इति ।

तस्मात् त्वयापि यौक्तिकविमर्शं वर्जयित्वाऽनादिपरम्परामूलव्यवहारमात्रसिद्धान्येव वस्तुजातानि न वास्तवानीत्यकामेनापि

स्वीकर्तव्यम् । एतदेव्र किल ब्रह्मवादिभिर्व्यावहारिकत्वं नाम सर्वेषु वस्तुष्वङ्गीक्रियते यद्विचारे क्रियमाणे सिकताकूपविशरणवत न क्वचिदपि पक्षे व्यवतिष्ठन्ते पदार्थाः । व्यवहारविषयतान्तु नातिक्रामन्तति । यथाऽऽह खण्डनकारः—

"कतिपयप्रतिपत्तृकनिपयकालतथात्वावगमादेव प्रायेण लौकिको व्यवहारः प्रतीयते तादृशश्चायं सत्त्वावगमः कथाङ्गम् एतदुच्यते व्यावहारिकीं प्रमाणादिसत्तामादाय विचारारम्भ" इति ॥

यथा हि स्वप्नसमये नानाविधा द्रष्टृदृश्यादयः पदार्थास्तदानीमबाधितत्वेन व्यवहारविषया अपि वस्तुसन्त इति न वक्तुं शक्यते जाग्रत्काले तेषामुपलब्ध्यभावात्, तद्वदेव लौकिकपदार्था अपि व्यवहारविषया भविष्यन्ति न च वस्तुसन्तोऽपि, न च व्यवहारविषयतायां वस्तुसत्ता प्रयोजिका, अवस्तुनापि देहात्मत्वादिना लोकयात्रायाः अबाधितायाः प्रतीयमानत्वादित्युपपादितमधस्तात् । अत एवाद्वैतदर्शनस्य न केनापि समं विरोधः यच्च येन केनाऽप्यभ्युपगम्यते दूष्यते भूष्यते वा सर्वमेव व्यावहारिकमस्माभिरभ्युपेयते एवंविधाया अघटितघटनापटीयस्त्वात् ब्रह्मज्ञानोत्तरकालं हि विदुषः सर्वव्यवहाराभावं वदसे तद्दर्शनं, नचान्यैरपि वादिभिः मुक्तस्य विधिनिषेधात्मकशास्त्रनियम्यत्वं व्यवहारविषयत्वं वाऽभ्युपगम्यते तथा सति मुक्तत्वानुपपत्तेः । तत्पूर्वन्तु सर्वोऽपि व्यवहारोऽप्रतिबद्ध एव वर्तते चेद्वर्तां, यच्च यावत्किञ्चिज्ज्ञानपूर्वकालीनमभ्युपगम्यते तत्र, नास्त्यस्माकं विप्रतिपत्तिः जाग्रत्प्रबोधात्माक् स्वाप्नव्यवहारस्येव सर्वेषामपि तीर्थकराणामभिमतकल्पनानुरूपवस्तुसत्त्वस्यास्माभिरप्यङ्गीकारात् । केवलं पारमार्थिकत्वांशे विवादो वर्तते । परं सोंऽशः अन्यैरपि तीर्थकरैः न सूपपादः, यतो यावत्किञ्चिद्वस्तु विवादविषयः तत्सर्वं दृश्यं, दृश्यत्वं द्रष्ट्रधीनमिद्धिकं, नहि घटः स्वसत्तां जानी

ति। यश्च द्रष्टा स "यतो वाचो निवर्तन्तेऽप्राप्य मनसा सह" इति श्रुत्युक्तप्रकारेणाज्ञेय एव, अविषये च कथं विवादः योहि विषयो भवति स विवेचयितुं शक्यते, न चात्मा ज्ञानस्य विषयः ? विषयत्वे किं स्वविषयत्वं परविषयत्वं वा, स्वविषयत्वे कर्मकर्तृविरोधः परविषयत्वे तस्याऽप्यन्यविषयत्वमित्यनवस्था दुरवस्था स्यात्। अतएव विज्ञानवादिनो बौद्धा अपि नात्मतत्त्वपण्डिताः। यतो ज्ञानं हि क्षणिकं तेषां मते। न च स्वस्योत्पत्तिर्निरोधो वा स्वात्मना ग्रहीतुं शक्यते तदानीं स्वस्यैवाभावात्। न च परेण, अनवस्थादिदोषात्। नच स्वस्योत्पत्त्यादयो न प्रतीयन्ते तेषां सर्वानुभवसाक्षिकत्वात्। प्रतीयन्ते चेद् अन्येन प्रतीयन्ते द्रष्ट्रेति सिद्धम्। तस्य चोत्पत्तिविनाशयोरभावादेव न द्रष्ट्रन्तरावश्यकता, ज्ञेयत्वस्याभावाच्च। योद्रष्टा स द्रष्टैव न कदाचिदपि दृश्यः, यद्धि दृश्यं तत्स्वातिरिक्तावभास्यं यत्र हि दृश्यत्वं नास्ति स द्रष्टैव तद्विषयग्रहणाकाङ्क्षानुत्पादादेव नानवस्था दोषः। एतदेव वैलक्षण्यं यदात्मा न ज्ञायतेऽथ च न सन्दिग्धोविपर्यस्तोवा। ये के चन सन्देहास्ते सर्वेपि उपहितविषया अत एतादृशमात्मतत्त्वमन्यैर्दुराधिगममित्यभिप्रेत्यैव श्रुतिराह "अविज्ञातं विजानतां विज्ञातमविजानतां"मिति। एवं सत्येतादृशमात्मतत्त्वमधिकृत्य विवादोपि दुर्घटः तस्य सर्वथा ज्ञानविषयत्वायोग्यत्वात्। यत्तु वादिनां कोलाहलः स सर्वोपि दृश्यवर्गविषयक एव। तस्य च मिथ्याभूतस्यैकरूपत्वनियमाभावात् तत्र तद्‌द्रष्टृबुद्धिभेदेनानेकाः कल्पनाः प्रादुर्भवन्ति। तस्य च सिद्धिर्न केनापि कर्तुं शक्या। यथाह शङ्करमिश्रः खण्डनटीकायां तथाहि—

लक्षणाधीना लक्ष्यव्यवस्थितिः लक्षणानि चानुपपन्नानि आत्माश्रयादिदोषात् लक्षणेन हि गन्धवत्त्वादिना ज्ञाते लक्ष्ये पृथिवीः

स्वरूपेऽधिकरणे प्रतिबन्धबलेन व्यवहाररूपमितरभेदरूपं वा साध्यं साधनीयं तत्र लक्षणज्ञानमन्यलक्ष्यसाधारण्येन भवदप्यकिञ्चित्करमिति व्यावृत्ततया तज्ज्ञानमुपेयं तथाहि लक्षणव्यावृत्तिर्लक्ष्याधीना तदाऽन्योन्याश्रयः, लक्ष्यपरतत्रलक्षणान्तराधीनत्वे चक्रकं, लक्षणे लक्षणान्तरं तत्रापि लक्षणान्तरमित्यपरावृत्तावनवस्था । एवं भवदप्यकिञ्चित्करमिति, एवं जलादिसाधारण्येन ज्ञाताया पृथिव्याअपितरभेदसाधनमकिञ्चित्करमिति व्यावृत्तायां तत्साधनं वाच्यं तद्व्यावृत्तिर्यदि प्रकृतलक्षणाधीना, तदाऽन्योन्याश्रयः । लक्षणान्तरेण चेत्तदा प्रकृतलक्षणानुपयोगः । तदपि लक्षणं व्यावृत्तत्वमेव तस्यापीत्यधोऽधोधावन्त्यनवस्था, एवं प्रतिबन्धज्ञानसाध्यज्ञानादावप्यूह्यम् । एवमेव लक्षणान्तरखण्डनान्यप्यूह्यानि ।

तदेतत्सर्वमभिप्रेत्य विचक्षणचक्रचूडामणिः खण्डनकारः प्रथमं शून्यवादिमतमाश्रित्य प्रमाणादिपदार्थानां सत्त्वखण्डनं विधाय पश्चात् विज्ञानवादिबौद्धमतेन ज्ञानस्य स्वप्रकाशत्वं व्यवस्थाप्यानन्तरं स्वाभिमतस्वप्रकाशब्रह्मसिद्धिं विधायाद्वैतप्रतिपक्षाणां युक्तीनां खण्डनपूर्वकमनिर्वचनीयतां विश्वस्य द्रढयितुं प्रमालक्षणमारभ्य सर्वेषां षोडशपदार्थानामनिर्वचनीयत्वं व्यवस्थापितवान् ।

एषा चाऽस्य प्रतिज्ञा—

"शब्दार्थनिर्वचनखण्डनया नयन्तः
सर्वत्र निर्वचनमात्रमलमैर्गवान् ।
धीरा यथोक्तमपि कीरवदेतदुक्त्वा
लोकेषु दिग्विजयकौतुकमानुभवम्"

इति । तथा—नेदं सङ्गवितुमर्हति वक्ष्यमाणदूषणगणग्रस्तत्वात् । नाप्यसदेव तथा सति लौकिकविचारकाणां सर्वव्यवहारव्याहत्यापत्तेः । यस्तु वादी निरुत्तराभिमानं

हलमातनुत्वम्। किंकृत्वेत्यत आह *यथोक्तमिति*। यथोक्तं प्रथमश्लोकोक्तविशेषणप्रयुक्तमपिशब्दाद्वक्ष्यमाणविशेषणं च ब्रह्म तदुक्त्वा मनःपूर्वरूपत्वाद्वाचो ध्यात्वेति यावत्। तदुक्तं कुसुमाञ्जलौ[1]।["न्यायचर्चेयमीशस्य मननव्यपदेशभाक् उपासनैव क्रियते श्रवणानंतरागतेति"। "आगमेनानुमानेन ध्यानाभ्यासवशेन च। त्रिधा प्रकल्पयन्प्रज्ञां विंदते योगमुत्तममिति" स्मृतेश्च। कीरः शुक इत्यर्थः॥

ननु निर्वचनखण्डनं कथायामुतान्यत्र। नान्यत्र। कथातो ऽन्यत्र वादिनो निग्रहाविषयत्वात्। नापि कथायाम् तदंगप्रमाणादिसत्त्वाभ्युपगमे ऽपसिद्धांतात्, अनभ्युपगमे ऽनिर्वचनवादिनः कथानधिकारादित्याक्षिपति

४ कथायाः प्रमाणादिसत्त्वाभ्युपगमनैयत्यपक्षोपपादनम् ]

अथ कथायां वादिनो नियममेतादृशम्मन्यन्ते[2] "प्रमाणादयः सर्वतन्त्रसिद्धान्ततया सिद्धाः पदार्थाः सन्तीति कथकाभ्यामभ्युपेयम्"।

*अथेति*। अथशब्द आरंभार्थः। अधिकृतं खण्डनं वेदितव्यमित्यर्थः। *कथायामिति* नानाप्रवक्तृको विचारगोचरो वचनसंदर्भः कथा। सा त्रिविधा, वादजल्पवितंडाभेदात्। तस्यां वादिनोः वादिप्रतिवादिनोरित्यर्थः। कीदृशं नियमं सद्वादिनो मन्यंत इत्यत आह

१ सप्रकाशपुस्तके पृ. १८। पं. १

२ न्यायभाष्ये १।१।१

* प्रमाणेति * । प्रमाणप्रमेयसंशयप्रयोजनदृष्टांतसिद्धांतावयवतर्कनिर्णयवादजल्पवितण्डाहेत्वाभासच्छलजातिनिग्रहस्थानानि षोडश पदार्थाः प्रमाणादय उच्यंते । प्रामाणिकत्वेनाभ्युपगतः सिद्धांतः । स चतुर्विधः, सर्वतंत्रप्रतितंत्राधिकरणाभ्युपगमभेदात् । सर्वतंत्राविरुद्धः सर्वतंत्रसिद्धांतः । यथा प्रमेयं प्रमाणाधीनमिति । एकशास्त्र एव सिद्धः प्रतितंत्रसिद्धांतः । यथेदं नैयायिकानामिदं वैशेषिकाणामिति । यस्य हेतोः पक्षस्य वा सिद्धावन्यस्यानुक्तस्यापि सिद्धिः सो ऽधिकरणसिद्धांतः । यथेंद्रियव्यतिरिक्तो ज्ञाता दर्शनस्पर्शनाभ्यामेकार्थग्रहणादिति हेतोः सिद्धावनुषंगिणोर्था इन्द्रियनानात्वं नियतविषयाणींद्रियाणीत्यादयः । विवादाध्यासितं बुद्धिमत्पूर्वकमिति पक्षस्य सिद्धावनुषंगिणो ऽर्थाः सर्वज्ञत्वादय सिध्यंतीति अनुमेयानुपक्तासिद्धिरधिकरणसिद्धांत इत्युदयनः । शास्त्रे साक्षादनुक्तस्य सामर्थ्यादभ्युपगतिरभ्युपगमसिद्धांतः । यथा मनस इंद्रियत्वम् । कथं पुनर्ज्ञायते तदनुक्तमप्यभ्युपगतं शास्त्रकारेणेति । इंद्रियार्थसन्निकर्षेत्यादिप्रत्यक्षलक्षणाभिधानात् । अनिंद्रियत्वे हि मनसस्तल्लक्षणं सर्वलोकप्रसिद्धमपि सुखादिप्रत्यक्षं न व्याप्नुयादिति । तत्र प्रमाणादीनां सर्वतंत्रसिद्धांतत्वात्तत्सत्त्वमभ्युपेयमिति भावः ।

सत्ताभ्युपगमस्य कथांगत्वे मानाभावान् मानाद्याकार एव प्रयोजको ऽस्तो ऽसद्वादिनो ऽपि कथाधिकारः किमुतानिर्वचनवादिन इत्यभिप्रेत्य सिद्धांतयति

५ उक्तनैयत्यस्य खण्डने चत्वारो विकल्पाः ]

तदपरे न क्षमन्ते । तथाहि प्रमाणादीनां सत्त्वं यदभ्युपेयं कथकेन[1] तत् कस्य हेतोः । (१) किं तदनभ्युपगच्छद्भ्यां वादिप्रतिवादिभ्यां तदभ्युपगमसांहित्यनियतस्य वाग्व्यवहारस्य प्रवर्त्तयितुमशक्यत्वात्, (२) उत कथकाभ्यां[2] प्रवर्त्तनीयवाग्व्यवहारं प्रति हेतुत्वात्, (३) उत लोकसिद्धत्वात्, (४) अथवा तदनभ्युपगमस्य तत्त्वनिर्णयविजयफलातिप्रसञ्जकत्वात्[3] ।

१ एकवचनमत्र खाण्डनिकमात्राभिप्रायेण ।

२ एतद्विकल्पान्तर्गतमनुमानम्प्रदर्शितङ्खण्डनकुठारे। तद्यथा। कथापूर्वकालावच्छिन्नः कथकस्तत्क्षणावच्छेदेन प्रमाणादिसत्त्वाभ्युपगमवान्, तदुत्तरक्षणावच्छेदेन वाग्मित्वात्, यो यदा वाग्मी स तदा ऽव्यवहितपूर्वसमयावच्छेदेन प्रमाणादिसत्त्वाभ्युपगन्तेति । तत्र व्याप्तौ कार्यकारणभावो मूलमित्युक्तम् ॥

३ अत्र शाङ्करी–(१) यो यः कथकः स प्रमाणाद्यभ्युपगन्ता, या या कथा सा प्रमाणाद्यभ्युपगन्तृकर्तृका, यत्र वा कथकत्वं तत्र प्रमाणाद्यभ्युपगमः, इति प्रथम विकल्पार्थः । (२) प्रमाणादीनामभ्युपगमः कथाकारणमिति द्वितीयविकल्पार्थः। (अत्र) "प्रमाणादीनामेव कथाकारणत्वं विकल्पितन्न तु तदभ्युपगमस्यापि" इति केषाञ्चिदाक्षेपोऽसङ्गत। द्वितीयविकल्पदूषणावसरे प्रमाणाद्यभ्युपगमस्यैव कथाकारणत्वखण्डनात् । (३) लोकाः प्रमाणाद्यभ्युपगच्छन्तीति कथकाभ्यामभ्युपगन्तव्यमिति तृतीयविकल्पार्थः । (४) अनतिप्रसक्ततत्त्वनिर्णयविजयफलाकाङ्क्षया कथकाभ्यां प्रमाणादिसत्त्वमवश्यमभ्युपगन्तव्यमिति चतुर्थविकल्पार्थः ॥

*तदिति* । सत्ताभ्युपगमस्य कथानंगत्वं प्रतिज्ञातमुपपादयति *तथाहीति* । निमित्तकारणहेतुषु सर्वासां प्रायदर्शनमिति कात्यायनस्मरणात् कस्य हेतोः कस्माद्धेतोरिति उक्तानेव विकल्पान्विशदयति * किमित्यादिना * । * तदभ्युपगमसाहित्यनियतस्येति * । प्रमाणादीनां सत्ताभ्युपगमेन साहित्यनियतिरविनाभावस्तदविनाभूतस्येति यावत् । *अशक्यत्वात्* । सत्तानभ्युपगमे इति शेषः । यथा रूपं स्पर्शमविनाभावमात्रबलेन गमयति तथा व्यवहारः प्रमाणादिसत्ताभ्युपगममविनाभावेन गमयतीति प्रथमविकल्पार्थः ॥१॥ यथा ज्ञानं कार्यतया कारणं कल्पयति तथा व्यवहारोऽपि प्रमाणाभ्युपगममिति द्वितीयार्थः । यद्यपि कार्यमविनाभावेन गमकं[1] तथापि स्वभावानुपलब्धिकार्यलिंगकमनुमानं त्रिविधमिति पराभ्युपगमात् पृथगुपन्यासः ॥ २ ॥ लोकशब्देन लोकव्यवहार उच्यते । तत्सिद्धत्वं प्राणिनिकायेन व्यवह्रियमाणत्वम् । लोकावगतसामर्थ्यः शब्दो वेदेऽपि बोधक इत्यादौ लोकशब्दस्य व्यवहारे प्रयोगदर्शनादिति तृतीयार्थः ॥ ३ ॥ प्रमाणादिसत्तामनभ्युपगम्य व्यवहरतो वादफलस्य तत्त्वनिर्णयस्य जल्पादिफलस्य विजयस्य चोपपत्तावुन्मत्तादेरपि स्यादिति तदनभ्युपगमस्य फलातिप्रसंगहेतुत्वात्सत्ताभ्युपगम इति चतुर्थार्थः ॥ ४ ॥

तत्र किं व्यवहारमात्रस्याविनाभावः किं वा विशिष्टस्येति प्रथमविकल्पे द्विधा विकल्प्याद्यं दूषयति

१ ततश्च द्वितीयविकल्पस्य प्रथम एवान्तर्भाव इत्याशयः ॥

६ प्रथमविकल्पस्य खण्डनम् ]

( १ ) न तावदाद्यः । तदनभ्युपगच्छतोऽपि चार्वाकमाध्यमिकादेर्वाग्विस्तराणां प्रतीयमानत्वात् । तस्यैव वा ऽनिष्पत्तौ भवतस्तन्निरासप्रयासानुपपत्तेः । सोऽयमपूर्वः प्रमाणादिसत्त्वानभ्युपगमात्मा वाक्स्तम्भनमन्त्रो भवता ऽभ्यूहितो नूनं यस्य प्रभावाद्भगवता सुरगुरुणा लोकायतसूत्राणि न प्रणीतानि, तथागतेन वा मध्यमागमा नोपदिष्टाः, भगवत्पादेन[1] वा बादरायणीयेषु सूत्रेषु भाष्यं नाभापि ।

* न तावदिति * । विमतो वाग्व्यवहारः प्रमाणादिसत्तांगीकारपुरःसरः वाग्व्यवहारत्वात् संप्रतिपन्नवदित्यत्र निर्विशेषणवाग्व्यवहारस्य हेतुत्वे चार्वाकादिव्यवहारे व्यभिचारः । तस्यापि पक्षीकरणे तत्रैव भागे बाध इत्यर्थः । "ननु चार्वाकस्य प्रत्यक्षस्य प्रामाण्यान्माध्यमिकस्य सर्वशून्यतया व्यवहारस्याभावात् कुतो बाधव्यभिचारौ" इत्यत आह *तस्येति* । यद्यपि चार्वाकः प्रत्यक्षमेकं स्वीकुरुते तथाप्यनुमानादिभिर्व्यवहरन्नेव तत्सत्तां न मनुते । माध्यमिकस्यापि सांवृतो व्यवहारो ऽस्त्यन्यथाप्रसक्त्यभावात्तत्प्रतिषेधासंभवादिति भावः । एवं साहित्यनियममपास्योपह-

१ अद्वैतवादी शङ्कराचार्योऽपि न तत्त्वतः प्रमाणाद्यभ्युपगन्ता नैयायिकानाम् । यद्यपि तेन स्वग्रन्थे प्रमाणानाम्प्रतिपादनं कृतम्, तथापि तद्व्यावहारिकरीत्यैव न पुनस्तत्त्वतः । तत्त्वतो ब्रह्मैवैकं सदिति तत्सिद्धान्तात् ॥

सति *स इति*। प्रसिद्धवाक्स्तंभनमंत्रे प्रयुज्यमाने वाणी न निर्गच्छति। प्रयुज्यमान एव पुनरस्मिन्वागनिस्सरणमित्यपूर्वत्वम्। रहसि वक्तव्यतया मंत्रत्वम्। व्यभिचारमेव द्रढयितुं व्यतिरेकमुखेनोदाहरति *नूनमिति*। यस्य प्रमाणानभ्युपगमस्य प्रभावात्सामर्थ्यात्सुरगुरुणा बृहस्पतिनेत्यर्थः।उदाहरणांतरव्याजेन त्रयोऽत्रखंडनवादिनो मुख्या इति दर्शयति *तथागतेनेति*। तथागतो बुद्धः। मध्यमागमश्च शून्यागम इत्यर्थः। शिष्टं स्पष्टम्।

"व्यवहारमात्रस्य साहित्यनियतिं न ब्रूमः किं तर्हि विशिष्टव्यवहारस्येति" प्रथमविकल्पस्य द्वितीयं विकल्पं शंकते

७ प्रथमविकल्पखण्डने आक्षेपः ]

"[1]प्रमाणाद्यनभ्युपगम्यापि प्रवर्तयन्तु नाम ते वाचोभङ्गीः। तास्तु साधनबाधनक्षमा न भवन्ति तावतेति ब्रूम" इति चेत्।

---

१ अथ प्रमाणादीनामसत्त्वमभ्युपेत्य सत्त्वमनभ्युपेत्य वा प्रवर्तिता वाचोभंग्यस्तदा प्रमाणादिसत्त्वाभ्युपगमपूर्वकभिन्नवाक्यत्वेन साधनबाधनाक्षमत्वमपार्थकत्वन्नाम निग्रहस्थानमनुमेयम्। तथाहि "पौर्वापर्यायोगादप्रतिसम्बद्धार्थमपार्थकम्" इति (न्यायसूत्र ५।२।१०)। अर्थोऽभिमतो वाक्यार्थबोधः, स यत्र न प्रतिसम्बद्धः, जनकतया सम्बन्धेनेति शेषः, तेनाभिमतप्रमितिजनकत्वाभाववद्वाक्यमिति लभ्यते। पौर्वापर्यम् आकाङ्क्षासत्ती। योगो योग्यत्वम्। तेषां भावेन प्रयुक्तो वाक्यस्याभिमतप्रमापकत्वाभावोऽपार्थकत्वम्। एवञ्च निगृहीता प्रमाणाद्यसत्त्वसाधनप्रतिज्ञेत्याशङ्क्याह प्रमाणादीति (खण्डनकुठारे गोकुलनाथः)॥ ननु चार्वाकादिव्यवहारो रथ्यापुरुषव्यवहारवदनुपादेय एव। प्रमाणाद्यभ्युपगमस्तु साधनबाधनक्षमवाग्व्यवहारव्यापकत्वेन मयोपन्यस्तस्तत्र च न व्यभिचार इत्याह प्रमाणेति (शांकरी)।

* प्रमाणेति *। कथकवाग्व्यवहारः प्रमाणादिसत्तास्वीकारपुरस्सरः, साधनबाधनयोरन्यतरक्षमव्यवहारत्वात्, भाट्टादिसंप्रतिपन्नव्यवहारवत्। विपक्षे चार्वाकादिव्यवहारवत् साधनादिक्षमता न स्यादित्यर्थः। वाचोभंगीर्वाक्प्रकारानिति यावत्। ते चार्वाकादय इत्यर्थः। असमव्याप्तिकयोरन्वयव्याप्तिवैपरीत्येन व्यतिरेकव्याप्तिनियमात् साधनबाधनक्षमव्यवहारस्य सत्ताभ्युपगमव्याप्तत्वे सति साधनबाधनक्षमव्यवहाराभावेन प्रमाणाद्यनभ्युपगम्य प्रवर्तितत्वं व्याप्यमिति चार्वाकादिव्यवहारे त्वया दर्शनीयम्। तदशक्यदर्शनं सोपाधिकत्वात्तत्संबन्धस्य।

विपक्षबाधकस्याप्येतेन मूलशैथिल्यं युक्तमेवेत्यभिप्रेत्य परिहरति

८ आपेक्षस्य परिहारः ]

न। प्रमाणाद्यनभ्युपगम्य प्रवर्तितत्वं तदीयसाधनबाधनाक्षमतायां न नियामकं, किन्तु सद्वचनाभासलक्षणयोगित्वमित्यवश्याभ्युपेयं भवता। येनाभ्युपगम्यापि प्रमाणादीनि प्रवर्तिता मतान्तरानुसारिभिर्व्यवहारा अभ्युपगतप्रमाणादिसत्त्वैर्मतान्तरव्यवहारिभिरपरैस्तथाभूता इति कथ्यन्ते।

---

१. यदेव विजयादिरूपफल स्वोक्तहेतौ सद्धेतुत्वव्यवस्थापनेन भवति तदेव परोक्तबाधनेनापि भवतीति फलत. साधनबाधनयोरैक्येऽपि लोकप्रसिद्धिमनुरुध्य भेदेनोपन्यासः॥

२ यत एवमपि माध्यमिकादिवाग्व्यवहार एव व्यभिचारस्तस्यापि साधनबाधनक्षमत्वात् ( शां )॥

*नेति*। साधकत्वं स्वपक्षप्रमितिजनकत्वम्। बाधकत्वं तु परपक्षप्रतिषेधप्रमितिजनकत्वम्। किं तर्हि नियामकं प्रयोजकमित्यत आह *किंत्विति*। सद्वचनाभाससलक्षणानि असिद्ध्यादिलक्षणानि तेषामन्यतमयोगित्वमित्यर्थः। ननु सद्वचनाभासलक्षणयोगित्वं नोपाधिः, सति साध्ये घटादावसत्त्वेनाव्यापकत्वात्। ननु गर्भस्थो मैत्रतनयः श्यामः मैत्रतनयत्वात्संप्रतिपन्नवदित्यत्र शाकाद्याहारपरिणतिपरंपराजन्यत्वमपि नोपाधिः स्यादिंद्रनीलादौ सति साध्ये तदभावात्। ननु पुरुषश्यामत्वे शाकाहारपरिणतिजन्यत्वप्रयोजकमिति विशिष्यस्तर्हीहापि वाग्व्यवहारत्वे सति साधनबाधनाक्षमत्वे सद्वचनाभासलक्षणयोगित्वं प्रयोजकमिति संतोष्टव्यम्। सद्वचनाभासलक्षणयोगित्वस्य साधनबाधनाक्षमत्वे प्रयोजकत्वं परेणांगीकार्यमित्यापादयति, न स्वमतेनोच्यते, भवतेति विशेषणात्। अतो न बाधावकाश इति भावः। ननु प्रमाणाद्यनभ्युपगम्य प्रवर्तितत्वसद्वचनाभाससलक्षणयोगित्वयोः सतोः कस्तत्रान्यतरप्रयोजकत्वनिर्णय इत्यत आह *येनेति*। शब्दो द्रव्यं अव्यवहितसंबंधग्राह्यत्वात्, घटवदिति, शब्दो न द्रव्यं बहिरिंद्रियव्यवस्थाहेतुत्वाद्रूपादिवदिति च व्यवहारस्याभ्युपगतप्रमाणसत्तापुरःसरत्वेऽप्यन्योन्यमाभासतया प्रतिषेधो दृश्यते। प्रमाणाद्यनभ्युपगम्य प्रवर्तितत्वस्य साधनाद्यक्षमत्वप्रयोजकत्वे तन्न स्यादिति भावः। * तथाभूताइति * साधनबाधनाक्षमा इत्यर्थः।

ननु साध्यव्यापकत्वे पि साधनव्यापकत्वान्नायमुपाधिः। उक्तं हि "समेन यदि नो व्याप्तस्तयोर्हीनो ऽप्रयोजक" इतीत्यत आह

९ सद्वचनाभासत्वमेव कथाव्याघातकारणम् ]

यदि त्वस्मद्वचसि सद्वचनाभासलक्षणं न भवान् दर्शयितुमीष्टे तदा अनभ्युपगम्य प्रमाणादीनि भवता प्रवर्तितोऽयं व्यवहार इति शतकृत्वस्त्वयोच्यमानेऽपि नास्माकमादरः। अन्यथाऽभ्युपगमम्य प्रमाणादीनि भवता प्रवर्तितोऽयं व्यवहार इत्येतावता भवदीयो व्यवहाराभास इत्यस्माभिरपि वक्तुं शक्यत एव।

*यदीति*। यद्वा सद्वचनाभासलक्षणयोगित्वस्य साधनाद्यक्षमत्वनियामकत्वे किमायातमित्यत आह *यदीति*। ननु त्वद्व्यवहारः साधनाद्यक्षमः, प्रमाणाद्यनभ्युपगमपुरस्सरव्यवहारत्वात्, संप्रतिपन्नवदिति चेन्न। त्वद्व्यवहारः साधनाद्यक्षमः, प्रमाणादिसत्ताभ्युपगममूलव्यवहारत्वात्, व्यवहारांतरवदित्याभासतुल्ययोगक्षेमत्वादित्याह * अन्यथेति *।

ननु व्यवहारः प्रमितो न वा। नचेदाश्रयासिद्धिः। प्रमितश्चेद्धर्मिग्रहग्रस्तमनुमानं नोत्पत्तुमलम्। न सन्ति प्रमाणादीनीति प्रतिज्ञाहानिश्चेति चोदयति

१० अपर आक्षेपः। [प्रमाणाद्यसत्त्वे व्यवहारस्याभासत्वम् ]

"ननु यदि प्रमाणादीनि न सन्ति तदा व्यवहार एव धर्मी कथं सिद्ध्येत्। दूषणादिव्यवस्था वा कथं स्यात्। सर्वविधिनिषेधानां प्रमाणाधीनत्वात्"।

* नन्विति * । प्रमाणाधीनत्वात् प्रमेयसिद्धेः दूषणादिविभागोऽपि प्रमाणाभावे न स्यादित्याह * दूषणेति * । प्रमाणाद्यसत्त्वे धर्म्याद्यसिद्धिरेव कुत इत्यत आह * सर्वेति * । विधिर्भावो निषेधोऽभावः । आदिपदेन दूषणभूषणतद्विधानादिसंग्रहः ।

प्रतीतत्वमात्रेण धर्मित्वम्, न प्रमितत्वेन । विशेषणवैयर्थ्याद्व्यावहारिकप्रामाण्याभ्युपगमाच्च न विरोध इति परिहरति

[ ११ आक्षेपपरिहारः ]

मैवम् । न ब्रूमो वयं न सन्ति प्रमाणादीनीति स्वीकृत्य कथारभ्येति । किन्नाम सन्ति न सन्ति वा प्रमाणादीनीत्यस्यां चिन्तायामुदासीनैः, यथा स्वीकृत्य तानि भवता व्यवह्रियते तथा, व्यवहारिभिरेव कथा प्रवर्त्यतामिति । अन्यथा न सन्ति प्रमाणादीनीति मतमस्माकमारोप्य यदिदम्भवता दूषणमुक्तं तदपि न वक्तुं शक्यम् ।

* मैवमिति * । किं तर्हि तदपरे न चामंत इत्यादिनोच्यत इत्यत आह * किमिति * । यथा तानि प्रमाणानि भवताभ्युपगम्य व्यवह्रियते । तत्र तथेत्येकस्तच्छब्दो यच्छब्दोपादानादेव द्रष्टव्यः, तथा प्रमाणादीनि संति न संतीत्यस्यां चिंतायामुदासीनैस्तथाव्यव-

१ कथापूर्वकाले प्रमाणाद्यभ्युपगमस्याप्रयोजकत्वमाचक्ष्म, न तु प्रमाणादीनि न सन्तीति तदानीमेव वदाम, येनेदन्देश्यं स्यादित्याह मैवमिति (शा)

२ किन्त्वित्यर्थः ।

हारिभिरुपेक्षितसदसत्त्वप्रमाणमात्रमूलव्यवहारिभिः कथा पूवर्त्यतामिति ब्रूम इति वेष्टनग्रन्थः। प्रमाणादिसत्तामनभ्युपेत्य कथाप्रवृत्तिं परेणांगीकारयति *अन्यथेति*[1]। कथायामेव दूषणस्य कथनीयत्वात्, सत्ताभ्युपगममूलैव कथेति नियमवादिनश्च तदनुगुणकथासंभवादिति भावः। पूर्वपक्षस्याहार्यभ्रमरूपत्वान्मतमारोप्येत्युक्तम्।

कथासंभवमुपपादयितुं पृच्छति

१२ आक्षेपोक्तदूषणस्य विकल्पासहिष्णुत्वम् ]

कीदृशीं मर्यादामालम्ब्य प्रवर्त्तितायां कथायां दूषणमुक्तम्। किं[2] प्रमाणादीनां सत्त्वमभ्युपगम्योभाभ्यां वादिभ्यां प्रवर्तितायां कथायाम्। उतासत्त्वमभ्युपेत्य। अथैकेन सत्त्वमपरेण चासत्त्वमङ्गीकृत्य। न तावदाद्यः अभ्युपगतप्रमाणादिसत्त्वं प्रत्येतादृशपर्यनुयोगानवकाशात्[3]। द्वितीये तु स्वतो[4]ऽप्यापत्तेः। न तृतीयः। तथैव कथान्तरस्यापि प्रसक्तेः, उभयाभ्युपगमानुरोधित्वाच्च कथानियमस्य[5]।

---

१ यदि प्रमाणाद्यभ्युपगममन्तरेण कथाप्रवृत्तिर्न स्यादित्यर्थः।

२ कथायामेव दूषणाभिधानमौव्यादयं विकल्पावसरः ( शां )।

३ यदि प्रमाणादीनि न सन्ति तदा व्यवहार एव धर्मी न सिद्ध्येदित्येतादृशपर्यनुयोगानवकशाद्दित्यर्थः ( शां )।

४ स्वत इत्यत्र सार्वविभाक्तिकस्तसिल् षष्ठीस्थाने। स्वस्याप्यसत्त्वाभ्युपगमापत्तिरिति भावः।

५ प्रमाणादिकमन्तरेण व्यवहारासिद्धिलक्षणो यो व्याघातस्त्वयादत्तस्स मया नेष्यते। व्याख्यानान्तरन्तु—तथा च नान्यतराभ्युपगमोऽपि तन्त्रम्, न चान्यतरासिद्धदोषाभिधानमुचितमिति ( शां )।

अन्यथा स्वाभिप्रायमालम्ब्य तेनापि त्वदृचासि यत्किञ्चिद्भागात्मनि दूषणेऽभिहिते कस्य जयो व्यवतिष्ठताम्। [1]प्रमाणाद्यभ्युपगन्तुरेव यावन्नियमभरयन्त्रणा महती स्यात् [2] ॥

* कीदृशीमिति * । सामान्यतो ज्ञातः संभवदनेककोटितया विशेपतो ऽज्ञातः संदिग्धश्चार्थः प्रष्टव्यः। इह पुनस्तथाभावाभावात् । कथमयं प्रश्न इत्याशंक्य तथाभावं दर्शयति * किमित्यादिना * । प्रमाणादिसत्तानभ्युपगंतुः कथामूलतया प्रमाणादिसत्ताभ्युपगमे कथारंभ एवापसिद्धांतेन निगृहीतत्वादनुत्पन्नसमैव कथा स्यादित्यपरितोपात् फलांतरमाह * उभेति *। उभाभ्यां वादिभ्यां प्रवर्तितायामित्युपरितनकल्पद्वये ऽप्यनुषंगः। असत्त्वाभ्युपगमे तु सद्वादिनो निग्रह इति तदुभयोचितं कल्पांतरमाह * अथेति * । विकल्पक्रमेण निराकरोति * नाद्य इति *। कुत इत्यत आह *अभ्युपगतेति*। अभ्युपगतं प्रमाणादीनां तत्त्वं येन तं प्रति एतादृक्पर्यनुयोगस्य–'प्रमाणादीनामसत्त्वे धर्म्यसिद्धिर्दूपणादिविभागासिद्धिः सर्वपदार्थानां नास्तीति निपेधस्यास्तीति विधेर्विभागादेश्च प्रमाणायत्तत्वादि-

१ यद्युभयाननुमतोऽपि दोषस्तदा प्रमाणाद्यभ्युपगन्तु र्प्रामाणिकदोषानुसरणव्यग्रता स्यात् । उद्भावितदोषस्य प्रामाणिकत्वव्यवस्थापनप्रयासश्च भवेत् । अस्माकन्तु नैवं व्यापृतिरित्याह प्रमाणेति । ( शां )

२ प्रमाणादिसत्तानभ्युपगन्ता हि प्रमाणाभासेनाप्याभिदध्यात् । तदभ्युपगन्ता हि प्रमाणत्वेन निश्चितेनैवेति तस्य महती यन्त्रणा ( शां ) ।

त्यादि'—रूपस्यानवकाशान्निरनुयोज्यानुयोगो निग्रह इत्यर्थः। अस्तु, तर्हि द्वितीयो निरवद्यत्वादित्यत आह *द्वितीय इति*। आपत्तेर्नेत्यनुषंग। परस्यैवात्मनोऽपि धर्म्यायसिद्ध्यापादकन्यायस्य तुल्यतया जात्युत्तरत्वम्। चशब्दात्पर्यनुयोगानवकाशश्चेत्यर्थः। एकेन सत्त्वमपरेणासत्त्वमुपेत्य प्रवर्तितायामिति कल्पं दूषयति *नेति*। प्रमाणादिसत्तानभ्युपगमे किमियं कथा नोपपद्यते, कथांतरं वा। नाद्यः, आरब्धत्वादेव। न द्वितीयः, विमताः कथाः सत्तानभ्युपगतिपुरस्सराः कथात्वात् आरब्धैतत्कथावदिति भावः। तृतीयकल्पमुररीकृत्य दूषणमभाणि। संप्रति स एव न चातुर्यं प्रांचतीत्याह *उभयेति*। अभ्युपगमानुरोधेन कथानियमोपपत्तावुभयेति विशेषणं गौरवाद्व्यतिरेकाभावाच्च हातव्यमित्याशंक्याह *अन्यथेति*। कल्पनायां हि गौरवं, यत आह "प्रमाणवंत्यदृष्टानि कल्प्यानि सुबहून्यपि अदृष्टशतभागो पि न कल्प्यो निष्प्रमाणकः"[1] इति। तदिह कथायाः फलपर्यवसायित्वानुपपत्तिरेव कल्पिका। तथाहि उभयाभ्युपगमानुरोधित्वाभावे तार्किकंमन्यैर्दूष्यत्वेनानभिमतस्य पंचावयवानुमानस्योपन्यासे सुगतेन त्र्यवयवानुमानवादिना स्वाभिप्रायमवलंब्याधिकमिति वागात्मनि वाङ्मात्रे निग्रह उद्भाविते कस्य जय इति निर्णीयेत, वस्तुगतदोषाभावात्, तेन च दूषणोद्भावनादित्यर्थः। एवं परोद्भावितं गौरवं परिहृत्य परपक्ष एव तदाह * प्रमाणेति *। प्रमाणादिसत्ताभ्युपगम्यापि

१ तन्त्रवार्तिके २। १। ९

वक्ष्यमाणो यावान्नियमस्तद्व्यतिरेकेण कथानुपपत्त्या तस्य परेणाप्यंगीकार्यत्वात्तत्साभ्युपगंतुरेव गौरवं नान्यस्य। तेन नियममात्रेण कथाभ्युपगमादित्यर्थः। भरणं भरो ऽतिशयो वा यंत्रणा पीडा सावद्यता वा। यावांश्चासौ नियमश्च यावन्नियमस्तद्भरेण यंत्रेणेति निर्वाच्यम्।

प्रमाणादिसत्त्वासत्त्वौदासीन्येन समयबलात्प्रवृत्तायां कथायामेव भवतेदं दूषणमुक्तं मंतव्यम्। तथा च तद्वदेवं कथांतरमपि स्यादिति विचारफलमुपसंहरति

[ १३ प्रमाणादिसत्त्वासत्त्वौदासिन्य एव दूषणस्य सम्भवः ]

तस्मात् प्रमाणादिसत्त्वासत्त्वाभ्युपगमौदासीन्येन व्यवहारनियमेन समयं बद्ध्वा कथायां प्रवर्तितायां भवतेदं दूषणमुक्तमित्युचितमेव तथा सति स्यात्। योऽयं भवान् स्वाभिप्रायमपि नावधारयितुं शक्नोति दूरतस्तस्मिन् पराभिसन्धानावधारणप्रत्याशा।

*तस्मादिति*। समयः संकेतः। स च प्रमाणतर्काभ्यां वादिना व्यवहर्तव्यमित्यादिवक्ष्यमाणरूपः। अथ को ऽयं नियमः, समयबलप्रवृत्तकथायामेवेदं दूषणमुक्तमित्यत आह *उचितमिति*। अस्मिन्पक्षे प्रागुक्तपक्ष-

१ "यद्युभयाभ्युपगतं स्यात्" इति शेषः ( शां )

२ प्रमाणाद्यनभ्युपगम्य प्रवर्तितायाङ्कथायां व्याघातोऽपन्यस्तः, प्रमाणाद्यनभ्युपगम्य कथायामप्रवृत्तिरिति चाभिधत्से इति स्वाभिप्रायानवधारणम्। कथातः पूर्वं प्रमाणाद्यभ्युपगमो न तन्त्रमिति मयोक्तम्, प्रमाणादीनि न सन्तीति मदुक्तत्वेन त्वया गृहीतमिति पराभिसन्धानानवधारणम् इति ( भवनाथमिश्राणां व्याख्या शाकयोपन्यस्ता )

ग्रयदोषाभावादुचितमित्यर्थः। अर्थात्पक्षांतरानौचित्यमपि सूचितम्। यद्वा औदासीन्येन प्रवृत्तायां कथायामौदासीन्येन तत्प्रवृत्तिर्नास्तीति दूषणमुचितमेवेति विपरीतलक्षणयोपहसति। नन्वौदासीन्येनापि तव कथा नोपपद्यते सत्त्वानंगीकारलिंगेन त्वया सत्त्वमंगीकृतमिति त्वदभिप्रायस्य मया विभाव्यमानत्वादित्याशंक्याह *योऽयमिति*। ईदृश्यां कथायां दोषमहमवादिषमिति स्वाभिप्रायानभिज्ञो भवान्मदभिप्रायं कथं जानीयात्सत्त्ववदसत्त्वस्याप्यनिष्टेरिति भावः। अभिसंधिरभिसंधानम्।

ननु सत्तानभ्युपगमे कथानधिकारो न कथायां प्रतिपाद्यते, किं तूपदेशद्वारेण शिष्यशिक्षापरं क्रियते नातो व्याघात इति शंकते .

१४ आक्षेपान्तरम्-शिष्यप्रत्ययेवोक्तकथानधिकारप्रदर्शनम् ]

"अथ वादीकृत्य दुर्वैतण्डिकं तस्मिन्नुपाधौ बाधोऽभिधीयत इत्येव नेष्यते, शिष्यादयस्तु तस्य[1] कथानधिकारं ज्ञाप्यन्ते। अत एव भाष्यकारः सप्रयोजनमनुयुक्तो यदि प्रतिपद्यत इत्याहस्म न तु प्रतिपद्यस इति"[2]।

*अथेति*। प्रमाणाद्यनभ्युपगंता दुष्टो वैतण्डिकस्तं वादीकृत्य तस्मिन्प्रतिवादिन्युपाधौ वादिवाग्व्यवहारमूलकथानधिकारो विधीयत इति नेष्यत एवेत्यर्थः। किमर्थं तर्हि निष्प्रयोजनः प्रयास इत्यत आह *शिष्ये-

१ दुर्वैताण्डिकस्य। २ वात्स्यायनभाष्य पृ ४।

ति*। आदिपदेन पुत्रादिपरिग्रहः। तत्रैव भाष्यलिंगमाह *अत इति*। स दुर्वैतंडिकः पर्यनुयुक्तः प्रयोजनं प्रतिपद्येत यदि तर्हि प्रतिपद्येतैव प्रमाणम्, तदधीनत्वात् प्रतिपत्तेरतो व्याघात इति। यदि स वादीकृतः स्यात्तर्हि प्रतिपद्यस इति प्रयोक्तव्यः। प्रतिपद्यत इति प्रयुंजानस्तस्य परोक्षतया कथानधिकारं ज्ञापयतीत्यर्थः।

तस्य कथाधिकारानधिकारयोरेतदवद्यं तस्येति न तस्य शिष्यसंबोधनं संभवतीति परिहरति

१५ तदसम्भव. ]

मैवम्। शिष्यादीन् प्रत्यपि चार्वाकादेर्दोषोऽयमित्येवाभिधातव्यम्। कथञ्च तथा स्यात्। तस्य कथाप्रवेशनाप्रवेशनयोस्तद्बाधाक्षमत्वात्। कथायामेव हि निग्रहः।

*मैवमिति*। चार्वाकादेः कथाधिकारो नास्तीत्येव शिष्यादयो बोध्या इत्यर्थः। तथाऽपि किमित्यत आह *कथमिति*। चार्वाकादेः कथाप्रवेशेऽयं दोषो वक्तव्य इति बोध्यते, उत कथातोऽन्यत्र वक्तव्य इति। उभयथाऽप्यनुपपत्तिरित्याह *तस्येति*। बाधाक्षमत्वे हेतुमाह *कथायामिति*। कथाप्रवेशे सत्येवातत्त्वज्ञानलिंगनिग्रहस्तस्येति विनेयबोधनं न संभवति, कथातोऽन्यत्र निग्रहाविषयत्वात्। तथा च व्याघात इत्यर्थः।

कथकप्रवर्तनीयवाग्व्यवहारं प्रति हेतुभावात्प्रमाणादिसत्ताभ्युपगम इति द्वितीयकल्पं दूषयति

---

१ प्रयोजनसत्ता न प्रतिज्ञा, किन्तु तज्ज्ञानम्। तच्च वैतण्डिकस्यापीति न तस्य कथायामनधिकारोऽपीति हृदयम्। ( शां )

१६ प्राक् ( ५ ) उक्ते विकल्पचतुष्टये द्वितीयस्य खण्डनम् ]

(२) नापि द्वितीयः। तथा हि स्यादप्येवं यदि कथकप्रवर्तनीयवाग्व्यवहारं प्रति प्रमाणादीनां हेतुता तत्सत्त्वानभ्युपगमे निवर्त्तेत। न त्वेवं सम्भवति। तथा सति तत्सत्त्वानभ्युपगन्तॄणां वाग्व्यवहारस्वरूपमेव न निष्पद्येत, हेत्वनुपपत्तेः। उक्तश्चायमर्थो यन्माध्यमिकादिवाग्व्यवहाराणां स्वरूपापलापो न शक्यत इति।

*नापीति*। यस्मिन्सत्येव यद्भवति नासतीत्यन्वयव्यतिरेकाभ्यां कारणत्वमवसेयम्। न चेह व्यतिरेकोऽस्ति, प्रमाणादिसत्तानभ्युपगंतुरपि व्यवहारनिष्पत्तेरित्याशयवानाह *तथा हीति*। सत्ताभ्युपगमनिवृत्तौ प्रमाणादीनां व्यवहारकारणत्वमपि निवर्तत एवेत्यस्ति व्यतिरेक इत्यत आह * नत्विति *। शिष्टं स्पष्टम्। प्रमाणादिसत्तानभ्युपगंतुर्माध्यमिकादेर्व्यवहार एव न निष्पद्यते कारणाभावादेवेत्ययमिष्टप्रसंग इत्याशंक्योक्तं संस्मर्तुमर्हसीत्याह * उक्त इति *।

कथां प्रति हेतुभावात्सत्ताभ्युपगमस्य स स्वीकर्तव्य इति द्वितीये कल्पे ऽभिप्रायविशेषं शंकते

१७ द्वितीयविकल्पस्य तात्पर्यान्तरवर्णनम् ]

अथ मन्यसे "कथकवाग्व्यवहारं प्रति हेतुत्वात्

१ ननु प्रमाणादीना हेतुत्वं यदि मनुषे तदा तदाभ्युपगमस्यापि हेतुत्वमंस्यसे। यतो नियमपूर्वस्तत्र त्वया ऽवश्यमभ्युपेयम्—इत्यवर्जनीयासिद्ध एव प्रमाणाद्यभ्युपगम इति शङ्कते अथेति। यद्यदा सत्तया ज्ञायते तत्तदाऽभ्युपगम्यते इति व्याप्तेरुभयवादिसिद्धत्वादित्यर्थः। ( शा )

प्रमाणादीनां सत्त्वं सत्त्वाच्चाभ्युपगमः, यत्सत्तदभ्युपगम्यत इति स्थितेरिति" ।

* अथेति * । प्रमाणादेः कारणत्वं तवापीष्टम्। नियतप्राक्सत्त्वमेव च कारणत्वमित्यभ्युपगंतव्यं सत्त्वमित्यर्थः। कारणत्वे सिद्धे ऽपि तदभ्युपगमः कुत इति तत्राह *सत्त्वाचेति* । तदेव कुत इत्यत आह *यदिति* ।

तदाक्षिपति

[ १८ तात्पर्यान्तरस्याप्यसाधुत्वम् ]

मैवम्। कयाऽपि नियमास्थित्या प्रवृत्तायां कथायां कथकवाग्व्यवहारं प्रति हेतुत्वात् प्रमाणादीनां सत्त्वं सत्त्वाच्चाभ्युपगमो भवता प्रसाध्यः ।

*मैवमिति*।न तावत्सत्त्वमेव हेतुत्वमिति वक्ष्यते। हेतुत्वेनापि सत्ताभ्युपगमानुमानं कथायामुतान्यत्रेति। नान्यत्र। कथातो ऽन्यत्र निग्रहाविषयत्वात्। प्रथमेऽपि प्रमाणाभ्युपगमेन प्रवृत्तकथायामुत समयबलात्। आद्ये ऽन्योन्याश्रयः, कथाप्रवृत्तौ सत्ताभ्युपगमासिद्धिस्तत्सि-

१ प्रमाणादीनि सन्ति, हेतुत्वात्, ब्रह्मवत्--प्रमाणादीन्यभ्युपगमविषयः सत्त्वात्, ब्रह्मवत् इति यस्याङ्कथायान्त्वया साधनीयं तद्वदेव कथान्तरमपि स्यात् । अथ साऽपि प्रमाणाद्यभ्युपगमादेव प्रवृत्ता तदा तस्यां प्रमाणाद्यभ्युपगमहेतुत्वसाधनानर्थक्यम्। अथ तस्यामेव कथायां प्रमाणाभ्युपगमस्य हेतुत्वमप्रसाध्य तत्कथाप्रवृत्तिस्तदा ऽन्योन्याश्रयः । कयापीति-अग्रेवक्ष्यमाणयेत्यर्थः । ( शां )

द्धौ च कथाप्रवृत्तिरिति। द्वितीये चास्मत्समीहितसिद्धिरित्यर्थः।

सत्ताभ्युपगमस्य कथाप्रवृत्त्युत्तरकालसाध्यत्वे किं तर्हि कथातः पूर्वं वादिभ्यामनुरोद्धव्यम्। नियमस्थित्यभ्युपगम इति कथितमेवेति चेत् किं तर्हि तस्य फलपकमित्याशंक्याह

१६ कथायामावश्यकस्य निरूपणम् ]

कथातःपूर्वं तत्त्वावधारणं वा परपराजयं वाऽभिलपद्भ्यां कथकाभ्यां यावता विना तदभिलषितं न पर्यवस्यति तावदनुरोद्धव्यम्। तच्च व्यवहारनियमसमयबन्धादेव द्वाभ्यामपि ताभ्यां सम्भाव्यत इति व्यवहारनियमसमयमेव बध्नीतः[1]।

*कथात इति *। नियमस्थित्यभ्युपगमं फलमेवाक्षिपतीत्यर्थः। ननु यद्येन विना ऽनुपपन्नं तत्तदाक्षेपकम्, यथा दिवाभोजनरहितस्य पीनत्वं शार्वरं भोजनम्। न चेह फलं नियमस्थितिव्यतिरेकेणानुपपन्नम्, अन्यतो ऽपि तत्सिद्धेरित्यत आह * तदिति *। एवेत्यन्यथोपपत्तिं निराचष्टे।

स नियमः कीदृश इत्यतस्तं दर्शयति।

२० नियमस्वरूपप्रदर्शनम् ]

सच—'प्रमाणेन तर्केण च व्यर्हतव्यं वादिना। प्रति-'

१ समयबन्धस्यावश्यकत्वात् तन्मात्रमनुरोद्धव्यम् (कथायाम्), न तु प्रमाणाद्यभ्युपगमो ऽपीत्यर्थः। (शां)

वादिनाऽपि कथाङ्गतत्त्वज्ञानविपर्ययलिङ्गप्रतिज्ञाहान्या-द्यन्यतमनिग्रहस्थानं तस्य दर्शनीयम्। तद्व्युत्पादने प्रथमस्य भङ्गो व्यवहर्तव्यः। अन्यथा तु द्वितीयस्यैव। तादृशेतरौ च जेतृतया व्यवहर्तव्यौ। प्रामाणिकः पक्षस्तात्त्विकतया व्यवहर्तव्यः'—इत्यादिरूपः।

*स चेति*। स च इत्यादिरूप इत्युपरिसंबंधः। वादिना साधकेन प्रथमप्रयोक्त्रा प्रमाणतर्काभ्यां व्यवहर्तव्यम्। वादाभिप्रायमेतत्, जल्पादौ छलादिप्रयोगस्यापि संभवात्। प्रायोपेक्षया वा परस्परं पराजयार्थमेव, विजिगीषुकथायां मत्सरेण प्रवृत्तेः। कदाचन सम्यक्साधने ऽपि परेणोक्ते झटिति वास्तवदूषणास्फुरणेन पर्याकुलितचेतस्कतया छलादिप्रयोगस्याप्युपपत्तेः। तथा सति हि छलाद्याकुलितबुद्धिः कदाचिदुत्तरमप्रतिपद्यमानो निगृह्येतेति। एकः 'च' शब्दः छलादिसमुच्चयार्थो विजिगीषुकथायाम्। अपरस्तु प्रमाण-

१ कथाङ्गतत्त्वज्ञानविपर्ययोऽज्ञानमसम्यग्ज्ञानं वा ( शां )

२ उद्भावितनिग्रहव्यवस्थापने प्रथमस्य भङ्ग, तदव्यवस्थापने निरनुयोज्यानुयोगाद् द्वितीयस्यैव भङ्ग इत्यर्थः ( शा )

३ समर्थितनिग्रहाशक्यसमर्थननिग्रहभङ्गप्रयोजकरूपरहिताविन्यर्थः ( शां ) समर्थितश्चासौ निग्रहः, अशक्यसमर्थनश्चासौ निग्रहः। एतन्निग्रहद्वयम् भङ्गस्य पराजयस्य प्रयोजकं रूपम्। तद्रहिताविति भावः।

४ जल्पे वितण्डायाञ्च फलव्यवस्थामभिधाय वादे तामाह प्रामाणिक इति। व्यवहारश्च वस्तुसत्त्वं विना ऽपीति भावः ( शां )

तर्काभ्यामेवेति वादनियमार्थः। कथाया अंगं फलतया तत्वज्ञानं तद्विपर्ययो ऽभायस्तत्वज्ञानमस्य न विद्यत इत्यत्र गमकम्। हेत्वाभासो निरनुयोज्यानुयोगश्चेत्येतद्वयनिग्रहस्थानं प्रतिवादिना वादिव्यवहारे व्युत्पादनीयं वादकथायामिति 'अपि'शब्देन दर्शयति। इतरत्र प्रतिज्ञाहान्याद्यन्यतमं दर्शनीयमित्यर्थः। तद्व्युत्पादने प्रथमस्य वादिनः पराजयः। अन्यथा तदव्युत्पादने प्रतिवादिनो व्यवहर्तव्य इति यावत्। कौ पुनर्जेतृतया व्यवहर्तव्यौ इत्यत आह * तादृशेति *। एतादृशाभ्यां निगृहीताभ्यामितराविति यावत्। नियमस्यांशांतरमाह * प्रामाणिक इति *। तत्त्वतया वादफलनिश्चयविषयत्वेन। आदिपदेन वादिनि साधनमात्रं प्रयुज्य संक्षेपतो विस्तारतो वा ऽऽभासानुकृत्य विरते सत्युच्यमानग्राह्यनिग्रहाप्रोच्यमानग्राह्यनिग्रहाप्राप्तावा-. भासवहिरुक्तग्राह्यनिग्रहालाभे च तद्वचनार्थमवगम्यानूद्य दूषयित्वा प्रतिवादी स्वपक्षे स्थापनां प्रयुंजीत। अप्रयुञ्जानस्तु दूषितपरपक्षो ऽपि न विजयी, आत्मानमरक्षन् परघातीव वीरः। तस्मिन्नप्येवं विरते सत्यनुक्तोच्यमानग्राह्यनिग्रहालाभे तद्वचनार्थमवगम्यानूद्य दूषणांगं प्रतिदूष्याभासवहिरुक्तग्राह्यनिग्रहालाभे प्रथमवादी स्थापनांगं दूषयेत्। अदूषयंस्तु रक्षितस्वपक्षो पि न विजयी। श्लाघ्यस्तु स्याद्वंचितपरप्रहार इव तमप्रहरमाणः। अनुक्तोच्यमानग्राह्याभासवहिरुक्तग्राह्यनिग्रहलाभे तु तावतैव कथाविरतिर्न्नासाधनविचारावकाशः। शरसंधान-

**समय एव यो मूर्छितस्तस्य तद्वाणवारणतत्प्रहरणानुष्ठानवद्विफलत्वात्। तत्रानुक्तग्राह्यमप्रतिभादि। उच्यमानग्राह्यमप्राप्तकालादि। आभासवहिरुक्तग्राह्यं प्रतिज्ञाविरोधादि। एषु सत्सु न विचारावकाशः। शरसंधानसमये हि प्रहारचिंता। प्रतिपक्षस्थापनाहीनो वितण्डा इत्यादिसंग्रहः।**

**ननु नियमबन्धो पि हेतुसाध्यः स च कथायामभिधानीयः। कथा च नियमबन्धनेति परस्पराश्रयः। अन्तरेण वा च कथेष्टव्या। यथा प्रमाणादिसत्ताभ्युपगमहेतुः कथा सा च सत्ताभ्युपगमाधीनेति परस्पराश्रयात्तमन्तरेणैव कथेष्यत इत्याशंक्याह**

२१ कथाप्रवृत्तिपूर्वक यथोक्तस्य हेतुबन्धस्य सम्भवः]

[1]अत एव 'व्यवहारनियमसमयबन्धे हेतुर्वक्तव्यः, तथा च सोऽपि हेतुः कथायां प्रवृत्तायामभिधातुं युक्त[2]' इति प्रमाणसत्त्वाभ्युपगमहेत्वभिधानवत्[3] प्रत्यवस्थानमनवकाशम्, [4]द्वाभ्यामपि वादिभ्यां विचारप्रवृत्त्याभिलष्य-

---

१ यतः कथकाभ्याङ्गुथातः पूर्वमेव जयपराजयादिव्यवस्थाहेतुत्वेन व्यवहारनियमबन्धोऽनुरोद्धव्य इत्युक्तम् अत एवेति यावत्। ( चित्सुखी )

२ ननु कथाप्रवृत्तौ।

३ प्रमाणसत्ताभ्युपगमहेत्वभिधानवत्। कथायाम्प्रवृत्तायामेव तद्व्यवहारनियमबन्धेऽपि हेतुरभिधातुं युक्त इति यदिदन्नैयायिकस्य प्रत्यवस्थानन्तदनवकाशमित्यन्वयः। ( चित्सुखी )

४ यद्यपि समयबन्धस्येच्छापरिगृहीतत्वे विप्रतिपन्नः कथायामेव प्रबोध्यते इत्यत्रापि दोषस्तदवस्थ एव, तथाऽपि समयबन्धमात्रेण कथाप्रवृत्तौ प्रमाणाद्यभ्युपगमस्य कथाङ्गत्वकल्पना गौरवपराहतेति भावः। (शां)

माणतत्त्वव्यवस्थाजयमूलत्वेन व्यवहारनियमस्य स्वेच्छयैव परिगृहीतत्वात् ।

*अत इति* । परामृष्टहेतुमेव स्पष्टयति *याभ्यामिति*। यथा सत्ताभ्युपगमो हेतुसाध्यस्तथा नियमबंधस्यापि हेतुसाध्यत्वे स्यादयं दोषः । न त्वेवम् । याभ्यां मिथः संप्रतिपत्त्या फलरागात्तत्स्वीकारादित्यर्थः ।

अप्रामाणिकनियमबन्धात् कथारंभे कथकाभिलषितफलादिविप्लवो मूलाशुद्धेरित्याशंक्याह

२२ अस्मिन्नपि पक्षे विचारादिविप्लवासम्भव. ]

नचैवं[1] प्रमाणानुपज्ञस्वेच्छामात्रगृहीतमूलत्वान्मूलापरिशुद्धिसम्भवेन सर्वविचारविचार्य्यतत्फलविप्लवापत्तिः[2] स्यात् । अविद्यमानादिपारम्पर्यायातस्य[3] लोकव्युत्प-

---

१ समयबन्धस्यावश्ये हेतुत्वेऽनिष्टमाशङ्कते नचेति (शा)

२ 'विचारविप्लव' साधनदूषणप्रयोगाव्यवस्था । 'विचार्यविप्लव' पक्षविपक्षाव्यवस्था, वादिप्रतिवाद्यव्यवस्था वा, तयोरपि विचार्यत्वात् ।'फलविप्लव' जयभङ्गाव्यवस्था, तत्त्वनिर्णयाव्यवस्था च । (शा)

३ अविद्यमान आदिर्यस्य तदेवम्भूतम्पारम्पर्यमिति विग्रह । 'अविद्याविद्यमानेत्यादि' पाठस्तु सम्यक् प्रतिभाति । 'अनादि' पदस्थले 'अविद्यमानादि' पदप्रयोगो वृथाक्षरवृद्धिमेवकरोति । इतरत्रतु पाठे अविद्याविद्यमानत्वाभिधानं समयबन्धस्याप्यतात्त्विकत्वप्रदर्शनार्थम्, अनादिपारम्पर्यायातस्येति अवश्याभ्युपगन्तव्यत्वसूचनार्थम्, गृहीतत्वादस्येत्यप्रामाण्यशङ्कानिरासाय । " ननु समयबन्धस्यापि वेदान्तनये ऽज्ञानरूपतया स्वत-

त्तिगृहीतसंवादस्य च तस्यान्यथाभावासम्भाव्यतालक्षण-स्वतःसिद्धिपरिशुद्धत्वात् ।

* नचेति * । प्रमाणेनानुपक्रम्य स्वेच्छामात्रगृहीतो नियमबन्धो मूलं यस्य विचारस्येति विग्रहः । उपज्ञा ज्ञानमाद्यं स्यात् ज्ञात्वाऽऽरंभ उपक्रम इत्यभिधानात् । प्रमाणेनोपज्ञाऽऽद्यज्ञानं यस्य नास्तीति तत्प्रमाणज्ञानशून्येनेति वा । विचारविप्लवः प्रमित्यनुत्पादकत्वम् । विचार्यविप्लवो भ्रांतिविषयत्वम् । फलविप्लवो वादे तत्त्वावधारणासिद्धिरितरयोर्जल्प-

सिद्धत्वमनुपपन्नम् " इत्यत आह अन्यथाभावेत्यादि । 'समयबन्धो न कर्तव्य' इति सम्भावनाविरह एव तस्य स्वतःसिद्धत्वमिति भावः ।

'अन्यथाभावस्यासम्भाव्यतया तल्लक्षणयोः स्वतःसिद्धितया शुद्धत्वाद्-विप्लवार्थत्वादिति योजना ।' ( चित्सुखी ) ॥ शिरोमणिस्त्वेवमाह खण्डनभूषामणौ । तस्येत्यनेन न समयबन्धस्य परामर्शः, किन्तु विचारस्यैव, तस्यैव सम्भावितदोषसमयमूलकत्वेन दुष्टत्वस्योक्तत्वात् । न वा संवादः सम्बन्धे सम्भवी, किन्तु विचार एव । तस्यैवप्रमित्युत्पादकत्वेन प्रवृत्तिसंवादितत्वात् पारम्पर्येणायातस्य प्राप्तस्य । तथाच न तस्यान्धपरम्परातुल्यत्वम् । स्वयमपि दुष्टत्वेन पराधीनप्रमाणत्वाभावात् । अनादिपरम्परागतविचारस्य प्रामाण्यं लोकव्युत्पत्तौ शब्दस्य सङ्केतग्रहे गृहीतसंवादस्य । अन्यथा तन्मूलकशाब्दव्यवहारोच्छेदापत्तेः । यद्वा विप्रलम्भकव्यवहारे यो ऽन्यथाभावः सम्भवति तथाभूतस्यान्यथाभावस्य या ऽसम्भाव्यता, तल्लक्षणायाः स्वतःसिद्धेः तया शुद्धत्वात् । असम्भाव्यतैव कुत इत्याशंक्योक्तम्—लोकः कपकः, तद्व्यवहारेण गृहीतो ऽन्यथा न भवति इति संवादो यस्येत्यर्थः । लोकस्य किम्मूलमित्याकाङ्क्षायां अनादिपारम्पर्यमूलमित्यादि व्याख्येयम् । इति ।

वितंडयोर्जयस्येति द्रष्टव्यम्। कुत इत्यत आह *अविद्यमानेति*। तत्रेत्थं पदसंबंधः। अन्यथाभावश्चासावसंभाव्यश्चेत्यन्यथाभावासंभाव्यः, तद्भावस्तत्ता, तल्लक्षणा या स्वतःसिद्धिस्तया शुद्धत्वाद्विचारस्य न विप्लवः। तत्र हेतुः * लोकेति *। लोकव्युत्पत्त्या वृद्धव्यवहारेण गृहीतोऽन्यथा न भवतीति संवादो यस्येति यावत्। "ननु लोकस्य किं मूलम्। प्रमाणं चेदादौ स्वीक्रियताम्, व्यवहारांतरंचेदनवस्था" इत्याशंक्य दृष्टपरंपरात्वेनानादित्वान्नमूलव्याप्तिरित्याह * अविद्यमानेति *। अविद्यमान आदिर्यस्य परंपराभावस्य तेनायातस्येति। अनादीति वक्तव्ये अविद्यमानेत्याद्युदितं [1]वक्रकारित्वस्वाभाव्यात्। [2]लोकव्युत्पत्त्या वृद्धव्यवहारेण कथारूपवाग्व्यवहारेण निष्पन्नेन गृहीतः संवादः विचाराद्यविप्लवो यत्रेत्यर्थः।

फलहेतुत्वेन नियमः कथांगमंगीक्रियते चेत् प्रमाणादिसत्ताऽपि तथांगीक्रियतामविशेषादित्यत आह-

२३ उक्तनियमवदङ्गीकरणम्प्रमाणादिसत्तायां न सम्भवति ]

नच प्रमाणादीनां सत्ताऽपीत्थमेव ताभ्यामङ्गीकर्त्तुमुचिता। तादृशव्यवहारनियममात्रेणैव कथाप्रवृत्त्युपपत्तेः। प्रमाणादिसत्तामभ्युपेत्यापि तथाव्यवहारनियमव्यतिरेके कथाप्रवृत्तिं विना तत्त्वनिर्णयस्य जयस्य वाऽभिलपितस्य कथकयोरपर्य्यवसानात्।

---

१ मूलग्रन्थकारो वक्रोक्तिप्रियइत्यतः कारणादिति भावः।

२ लोकेत्यारभ्य अर्थइत्यन्तो ग्रन्थः कलिकातापुस्तके नास्ति।

* नचेति *। उभयांगीकारे गौरवं स्यादित्यर्थः। "ननु नियममंतरेण प्रमाणादिसत्तांगीकारात्कथाप्रवृत्त्युपपत्तेरुभयांगीकारे गौरवान्नियम एव किन्नपरित्यज्यते" इत्यत आह * प्रमाणेति *। तथाविधस्योक्तलक्षणव्यवहारनियमस्य व्यतिरेके ऽभावे सति विप्रलंभकादिसमयवत्कथाप्रवृत्तिर्न्नसंभवतीत्यर्थः।

लोकप्रसिद्धत्वात्सत्ताङ्गीकृतिरितितृतीयंनिरस्यति

[ २४ प्राक् ( ५ ) उक्तेषु विकल्पेषु तृतीयस्य खण्डनम् ]

नापि तृतीयः। लोकव्यवहारो हि प्रामाणिकव्यवहारो[1] वा स्यात् पामरादिसाधारणव्यवहारो वा। नाद्यः। विचारप्रवृत्तिमन्तरेण तस्य दुर्न्निरूपत्वात्। तदर्थमेव च पूर्वं नियमस्य गवेषणात्। नापि द्वितीयः, शरीरात्मतादीनामपि तथा सति भवता स्वीकर्त्तव्यतापातात्।

* नेति *। लोकशब्दस्य प्रामाणिकाप्रामाणिकयोस्तुल्यत्वाद्विकल्पयति * लोकेति *। पामराः शास्त्रसंस्काररहिताः। विवर्णः पामरो नीचः प्रकृतश्च पृथ-

१ 'प्रमाणव्यवहार' इति शाङ्कर्यभिमतःपाठः। 'लोक्यत इति लोकः प्रमाणम्' इति च तत्रत्या व्याख्या। वस्तुतस्तु 'प्रामाणिक' इत्येव पाठः साधीयान् प्रतिभाति। एवमेव च पाठः प्रायशः प्राचीनपुस्तकेषूपलभ्यते।

२ प्रामाणिकव्यवहारत्वस्येत्यर्थः।

३ 'अहं स्थूल' इति पामरव्यवहारः अहम्पदार्थस्य स्थूलत्वविशिष्टेन सहा भेदस्य बोधकः। अतः पामरव्यवहारस्य प्रामाणिकत्वस्वीकारे शरीर एवात्मनाव्यवहारसम्भव इत्यर्थः।

ग्जन इति नामशासनात्। विचारसिद्धौ प्रामाणिकत्वसिद्धिर्व्यवहारस्य, तत्सिद्धौ सत्ताभ्युपगमस्ततश्च विचार इति चक्रकापत्तेर्नाद्यो ऽनवद्य इत्याह * नाद्य इति *। सत्तां स्वीकृत्यापि नियमो वध्यते वादिभिर्विचारप्रवृत्त्यर्थं तदनुपपत्तिरपि सत्ताया अहेतुत्वं गमयतीत्याह * तदिति * । द्वितीयमतिप्रसंगेनापाकरोति * नापीति * ।

अबाध्यत्वे सति लोकसिद्धत्वं स्वीकारप्रयोजकमिति न शरीरात्मतादीनामपि स्वीकारप्रसंग इति शंकते

२५ विचारबाध्यत्वोपन्यासे ऽपि दोषस्तदवस्थः ]

"पश्चात्तद्विचारबाध्यतया नाभ्युपेयत" इति चेत, तर्हि प्रमाणादयो ऽपि यदि विचारबाध्या भविष्यन्ति तदा नाभ्युपेया एव, अन्यथा तूपगतव्या इति लोकव्यवहारसिद्धतया सत्त्वमभ्युपगम्यत इति तावन्न भवति ।

* पश्चादिति *। हेत्वंतरं नाम निग्रहस्थानं स्यादिति दूषयति * तर्हीति *। लोकप्रसिद्धेरप्रयोजकतामाह * अन्यथेति *। प्राप्ताप्राप्तविवेकेनाबाध्यत्वमेव स्वीकारप्रयोजकमित्याशयः।

तदनभ्युपगमस्य फलातिप्रसंजकत्वात्तदभ्युपगम इति चतुर्थं दूषयति

---

१ ततश्चप्रमाणादिसत्ताभ्युपगमहेतौ तृतीयो विकल्पो निरस्त. ।

२६ प्राक् ( ५ ) उक्तेषु विकल्पेषु चतुर्थस्य खण्डनम् ]

नापि चतुर्थः। यादृशो भवता प्रमाणादीन्यभ्युपगम्य व्यवहारनियमः कथायामालम्ब्यते तस्यैव प्रमाणादिसत्त्वासत्त्वानुसरणोदासीनैरस्माभिरप्यवलम्बनात्। तस्य यदि मां प्रति फलातिप्रसञ्जकत्वं तदा त्वां प्रत्यपि समानः प्रसङ्गः।

* नापीति *। नियमबन्धादेवावश्याश्रयणीयात्फलव्यवस्थोपपत्तौ सत्ताभ्युपगमो व्यर्थ इत्यर्थः। *मां प्रतीति*। मया नियमबन्धमात्रे स्वीकार्ये यस्य कस्यचित्फलापत्तिः। तदा त्वया ऽपि प्रमाणसत्ताभ्युपगंत्रा ऽपि तस्मिन् स्वीकार्ये ऽतिप्रसंगो ऽविशेषादित्यर्थः। नियमस्याप्रमाणिकत्वेनाव्यवस्थापकत्वमित्याशंक्याप्रमाणिकत्वादेव तवापि न व्यवस्थापकः स्यादिति प्रसंगः समान इत्याह।

तस्येति चतुर्धा ऽपि प्रमाणादिसत्ताभ्युपगमः कथोपयोगी न भवतीत्यापादिते पुनः सद्वादी शंकते

२७ समयबन्धने ऽपि प्रमाणसत्ताभ्युपगमावश्यकत्वशंका ]

"स्यादेतन्नियतवाग्व्यवहारक्रियासमयबन्धेन कथां

१ तत्त्वनिर्णयविजयातिप्रसङ्गभिया प्रमाणाद्यभ्युपगमः कथातः पूर्वं त्वया क्रियते। यदि नियतसमयबन्धेनैव तद्वयन्निवर्तेत तदा वृथा प्रमाणाद्यभ्युपगम इत्यर्थः। ( शा )

२ "द्वैतापत्तिभयेन प्रमाणादि सत्ता नाभ्युपेयते वेदान्तिना। किंतु व्यवहारसत्ताभ्युपगमे ऽपि तदापत्तिरविशिष्टा। किञ्च प्रमाणादिसत्ताभ्युपगमो ऽपि व्यवहारादिसत्ताभ्युपगमसहभाव्येव" इति शङ्काकृदभिप्रायः।

प्रवर्त्तयताऽपि व्यवहारसत्ताऽभ्युपगन्तव्या। नहि सत्तामनभ्युपगम्य व्यवहारक्रियाऽभिधातुं शक्या । क्रिया हि निष्पादना, असतः सद्रूपताप्रापणमिति यावत्। प्रमाणैर्व्यवहर्त्तव्यमिति नियमबन्धनम्— प्रमाणकारणभावस्य नियमान्तर्भावात् नियतपूर्वसत्त्वरूपं कारणत्वं प्रमाणानामनादाय— न पर्यवस्यति । दूषणानाञ्चास्तित्वेन भङ्गावधारणनियमबन्धने [१]साधनाङ्गानां व्याप्त्यादीनां सत्त्वेन तद्विषयस्य तत्त्वरूपताव्यवहारनियमनादौ च कण्ठोक्तमेव तस्य तस्य सत्त्वमङ्गीकृतमिति रिक्तमिदमुच्यते प्रमाणादीनां सत्तामनभ्युपगम्य कथारम्भः शक्यत इति"।

* स्यादिति * । नियतत्वं समयविशेषणम् । नियमबन्ध एवापर्यवसानवृत्त्या व्यवहारसत्तां स्वीकारयतीत्याशयः । ननु सत्तां विना नुपपत्त्यभावान्न तां स्वीकारयति इत्यत आह *नहीति* । किमियं राज्ञामाज्ञेति नेत्याह * क्रियेति * । नन्वत्राप्यनुपपत्तिर्न प्रतीयत इत्यत आह * असत इति * । अनेन समयेन व्यवहर्तव्यमिति व्यवहारो निष्पादनीय इत्युक्त्यैव सत्त्वमिष्टं स्यात्,ततो निष्पादना नामासतः सत्त्वप्रापणमित्यर्थः । न केवलं व्यवहारसत्त्वं स्वोक्त्यैवेष्टं प्रमाणादिसत्त्वमपि त्वदुक्तिबलादेवापद्यत इत्याह

१ 'दूषणानि सन्ति' 'व्याप्तिरस्ति' इत्यादिवचनन्तत्सत्ताभ्युपगमपरमेवेत्यर्थः । ( शा )

*प्रमाणैरिति*। तृतीया याकरणत्वा भिधानात्तस्य च कारणविशेषत्वात् कारणत्वस्य सत्ताऽव्यतिरेकात्प्रमाणानां सत्त्वमनंगीकृत्य नियमबंधनमेव न पर्यवस्यतीत्यर्थः। यस्य व्यवहारे दोषाः संति तस्य भङ्गो व्यवहर्तव्यो यस्य पुनः साधनांगानि संति तस्य जय इति वदन्नेव पुनस्तानि न संतीति वदन् कथं सभ्यः स्यादित्यत आह * दूषणानामिति *। साधनस्य हेतोरंगानां व्याप्त्यादीनां सत्त्वेन तद्विषयस्य प्रतिज्ञातार्थस्य तत्त्वरूपता सत्यतेति यावत्। तद्वैपरीत्येऽसत्यत्वमादिपदार्थः। उपसंहरति *इतीति*। रिक्तमिति रिक्तं परस्परपराहतत्वेन शून्यवचनमित्यर्थः।

परिहरति

[ २८ तत्परिहारः ]

मैवम्। एभिरपि बाधकैः कथायामारब्धायामेवाभिमतस्य प्रसाधनीयत्वे पूर्वोक्तबाधाया अनिस्तारात्।

* मैवमिति *। कथायामेवैतान् बाधकानुपन्यस्यासद्वादिनं निगृह्य सत्ताभ्युपगमनं साधनीयम्। तथा च न तदन्तरेण कथाप्रवृत्तिः। सत्ताभ्युपगमसिद्धौ कथासिद्धिस्तत्सिद्धौ बाधकोपन्यासस्ततश्च सत्ताभ्युपगम इति चक्रकापत्तिरेवेत्यर्थः।

ननु न मया सत्त्वं साध्यते किं तु स्वेच्छास्वीकृतस्यैव व्यवहारनियमस्य प्रमाणादिसत्ताङ्गीकारे पर्यवसानमात्रमुच्यते। ततो न मम चक्रकादिदोषः स्यादित्यत आह

२९ नियमस्य प्रमाणादिसत्तास्वीकारे ऽपर्यवसानम् ]

न च व्यवहारनियमस्य स्वेच्छाकृतस्यैव प्रमाणादिसत्तास्वीकारपर्यवसायितया नायं दोषः[1] स्यात् । यतः सत्ताज्ञानस्य तत्राङ्गत्वम्, न तु सत्तायाः ।

* नचेति * । कुत इत्यत आह * यत इति * । सत्तावगमे सति सत्ताभावेन व्यवहाराभावादर्शनात्केवलव्यतिरेकाभावात्सत्तावगम एव हेतुरिति भावः ।

ज्ञानमात्रस्यांगत्वे ऽतिप्रसंगात्, ज्ञेयावच्छिन्नस्यांगत्वे तस्याप्यंगत्वप्रसंग इत्याशंक्याह

३० न सत्ताज्ञानमात्रं सत्ताभ्युपगमे तन्त्रम् ]

तत्र[2] किं सत्तावगममात्रात्सत्ताऽभ्युपगमस्येति मन्यसे, अबाधितात्तदवगमाद्वा । न तावदाद्यः । मरुमरीचिकादौ जलरूपतासद्भावाभ्युपगमप्रसङ्गात् । द्वितीयेपि किं वादिप्रतिवादिमध्यस्थमात्रस्य—तस्यापि कथाकालमात्र एव—बाधितावगमाभावात्, अथवा कस्यचिदपि कालान्तरे ऽपि बाधितबोधविरहात् । नाद्यः । अतिप्रसङ्गात्; पुरुषत्रयावगतस्यापि एकक्षणावगतस्य च पुरुषान्तरेण-तेनापि क्षणा-

१ समयबन्धः प्रमाणादिसत्ताज्ञानमात्रमाक्षिपति, न तु प्रमाणादिसत्तामपि, येनद्वैतापत्तिः स्यादिति भावः । ( शां )

२ ननुप्रमाणादिसत्ताज्ञानञ्चेदायातम्, तदा तदभ्युपगमो ऽपि सिद्धः, तत्रैव च त्वं विप्रतिपन्नः, इत्यत आह तत्र किमिति । यद्वा 'सत्त्वमात्रं कथाहेतुः, अपि तु प्रमाणादिसत्तावगम' इति विजिगीषुकारणतासाहकस्यास्मै विशेषणमपि विपर्यीकरोतीति प्रमाणादिसत्ताभ्युपगमो ऽपीत्यत आह तत्र किमिति । ( शा )

न्तरे-बहुलं बाध्यतादर्शनादिति । न चासावर्थो ऽसन्नपि द्वित्रादिपुरुषमात्रपूर्वजाततत्प्रतीत्यनुरोधाद्, बाधदर्शने सत्यपि, तथैव सन्निलभ्युपगम्यते । तस्माद् द्वितीयः[1] पक्षः परिशिष्यते । यत्र सर्वप्रकारेण बाधितत्वं नास्ति तत्सदित्यभ्युपगन्तव्यम् ।

* तत्रेति * । ज्ञानमात्रस्य ज्ञेयस्य साधकत्वे मरीचिसलिलादेरपि सत्त्वस्वीकारप्रसंगेनायं दूषयति * नेति * । प्रमाणादिपरमार्थसदबाधितावगमगोचरत्वात् आत्मवदित्याशंक्याह * द्वितीय इति * । तस्य वादिप्रतिवादिमध्यस्थमात्रस्य कथाकाले बाधितावगमाभावात् सत्ताऽभ्युपगम्या, किं वा कदाचिदपि तदभावात्, उत कस्य चिदपि कालांतरे ऽपि बाधावगमविरहात्, उत प्रतीतिकाले इति विकल्पार्थः । आद्यमनैकांतिकत्वेन दूषयति * नेति * । व्यभिचारमेव स्फोरयति * पुरुषेति * । पुरुषत्रयावगतस्यापि पुरुषांतरेणैकक्षणावगतस्य च क्षणांतरे तेनापीति सम्बधः । योगाचारसौत्रांतिकवैभाषिकत्रयावगतस्य स्वरसभंगुरत्वस्य वाद्यन्तरेण बाध्यतादर्शनात्, तथा मन्दांधकारे पथि गच्छतः पुरुषत्रयस्य स्रजं दृष्ट्वा [2]रापर्णमन्वानस्य कालांतरनिकटोपसर्पणादिना रशनात्त्वदर्शनेन बाध्यतादर्शनात्, पुरुषत्रयस्यैकक्षणे ऽबाधितावगतत्वहेतुस्तत्र व्यभिचरतीत्यर्थः । आद्यविकल्पस्य द्वितीयविकल्पदूषणं द्वितीयविकल्पदूषणे ऽन्तर्भ-

१ द्वितीयकल्पस्य द्वितीयः पक्षः । २ कुपित, सर्पमिति पाठः ।

घटीति न पृथगुच्यते । ननु विगीतप्रत्ययाः यथार्थाः प्रत्ययत्वात् संप्रतिपन्नप्रत्ययवदिति पुरुषत्रयावगतस्यापि सत्त्वान्न तत्र व्यभिचार इत्याशंक्याह *न चेति* । द्वौ च त्रयश्च द्वित्रा आदिर्येषां ते द्वित्रादयः । त एव पुरुषाः । त एव मात्रा परिमाणं यस्य तस्य । पूर्वजाता सा च तस्य वस्तुनः प्रतीतिरिति विग्रहः । प्रातीतिकसत्त्वसाधने सिद्धसाधनम्, अर्थसत्त्वसाधने बाधाविरोध इत्यर्थः । द्वितीये नास्माकं काऽपि क्षतिरिति तं परिशेषयति *तस्मादिति* । तमेव विशदयति *यत्रेति* । केनापि कदाचिदपि बाधितावगमशून्यं स्वीकार्यमित्यर्थः । तच्च भट्टमिश्रोक्तप्रकारेण द्रष्टव्यम् । "सर्वेषां सर्वदा यत्र धीः स्यात् तत्र न बाधनम्"[1]इति ।

आक्षिपति ।

३१ प्रमाणादिसत्ताभ्युपगमस्य न सर्वप्रकाराबाधिततत्सत्तामूलकत्वसम्भवः ]

तदित्थं यदि नाम वादिप्रतिवादिमध्यस्थमात्रस्य दूषणादिसत्तावगमः कथाकालमात्रे तैरबाध्यमानः कथाङ्गत्वेनाभ्युपेयते, किमायातं सर्वप्रकाराबाधिततत्तत्सत्त्वावगमायत्ततत्तत्सत्त्वाभ्युपगमस्[2]कथाङ्गताङ्गीकारस्य[3]। कतिपयप्रति-

१ श्लोकवार्तिके वृत्तिकारग्रन्थे—श्लो २४ ।

२ सर्वप्रकारेणाबाधितो य प्रमाणादिसत्तावगम तदायत्त प्रमाणादिसत्ताभ्युपगमः कथाङ्गत्व भवतीति मदीय पक्ष., तत्र त्वया न किञ्चिदुक्तमिति भावः । ( शा )

३ त्रैकालिकसार्वलौकिकबाधवैधुर्याकलनमशक्यमिति कतिपयप्रतिपत्तृमात्रबाधविरह एव प्रवृत्त्यङ्गम्—इत्यवश्यं वाच्यम् । नैतावताऽस्तुस्थितिरिति भाव. । ( शा )

पत्तृकतिपयकालतथात्वावगमादेव च प्रायेण लौकिकव्यवहारः प्रतीयते। तादृशश्चायं सत्त्वावगमः कथाङ्गम्। एतत्तदुच्यते व्यावहारिकीं प्रमाणादिसत्तामादाय विचारारम्भ इति।

* तदिति *। इत्थमुच्यते परं सखादिना, न तु घटते। अत्यंताबाध्यत्वस्यासर्वज्ञेनावगंतुमशक्यत्वात्। नहि पुरुषान्तरादिवर्तिबाध उपलब्धुं योग्योऽसर्वज्ञस्य, येन योग्यानुपलब्ध्या तदभावनिश्चय इत्यर्थः। तदुक्तं [1]कुसुमांजलौ "आपाततो न दृश्यत इति सर्वत्र कालक्रमेणापि न द्रक्ष्यत इति को नियंतेति"। ननु त्वयाऽपि कतिपयपुरुषदेशकालाबाध्यत्वे सत्त्वावगमस्येष्टे चेदत्यंताबाध्यत्वं तर्ह्यनुमीयतां–विमतः कालः प्रमाणादिसत्तावगमबाधवान् कालत्वात् कथाकालवदिति। तत्राह * यदि नामेति *। सर्वप्रकारैर्देशांतरकालांतरपुरुषांतरस्वरूपैरबाधितस्य तस्य प्रमाणस्य प्रमेयादेश्च सत्त्वावगमस्तदधीनस्तदायत्तः। तस्य तस्य सत्ताभ्युपगमस्तस्य कथांगतानंगीकारस्येति विग्रहः। अनंगीकारस्य किमायातम्। सोऽस्त्येवेत्यर्थः। त्वदनुमानरीत्या गंधर्वनगरादेरप्यत्यंताबाध्यत्वप्रसंगादत्यंताबाध्यत्वं सत्तावगमस्य नांगीक्रियत एवेत्यर्थः। "सत्त्वं

१ पृ. ३७८, पं. २। किन्तु तत्र 'अनवगत' इत्यस्य स्थाने 'आपातत' इति पाठ उपलभ्यते। स एव च साधीयान्, इति विद्यासागरीपुस्तकद्वयधृतमपि 'अनवगत' इति पाठमनादृत्य कुसुमाञ्जल्यनुसार एव पाठो निवेशितः।

व्यवहारांगमंगीकृतं चेन्मुख्यव्यतिक्रमे कारणाभावाद-सत्त्वमेवांगीक्रियतामिति" चेन्न, लौकिकव्यवहारस्यापि प्रातीतिकसत्त्वमूलत्वादित्याह * कतिपयेति *। प्रतीयते सप्रपंचं जन्यत इत्यर्थः। अन्यथा तदुच्छेदप्रसंगादिति हेतुर्द्रष्टव्यः। शास्त्रीयव्यवहारः प्रातीतिकसत्त्वमूलो व्यवहारत्वाल्लौकिकव्यवहारवदित्याह *तादृश इति*। न चैतत्स्वमनीषिकासिद्धम्, तत्त्वविदामपि सम्मतमित्याह *एतदिति*। स्वप्नवद्व्यवहरेम इत्यादावुच्यत इत्यर्थः।

नियमस्योभयसंप्रतिपन्नत्वाल्लाघवाच्च स एव कारणमित्युपपादितमित्युपसंहरति

३२ व्यवहारनियमस्यैव कथाकारणत्वस्योपसंहारः ]

तस्माद्यादृग्व्यवहारानियमः कृतः तन्मर्यादाऽनेन नोल्लंघितेति, यद्वादिवाग्व्यवहारे मध्यस्थावगमः स विजयते, यस्य च वचसि नैवं तस्यावगमस्तस्य पराजयः। यत्र वाद्युक्तनिग्रहसत्त्वावगमः स निगृहीतः, तदितरस्तु न तथेत्यादिनियम एव कथारम्भाय ग्राह्यः।

* तस्मादिति *। अदुष्टेऽप्यनुमाने दुष्टमिदमनुमानमिति विप्रलंभकवाक्यादवगमः पराजयहेतुर्न भवतीति सूचयितुं मध्यस्थग्रहणम्। * यत्र * प्रतिवादिनीति यावत्। शिष्टं स्पष्टम्।

नियमस्य तर्हि कारणत्वेन सत्त्वमंगीकृतं स्यादित्यत आह

३३ 'अनेन नियमेन व्यवहर्तव्यम्' इत्यस्यार्थः]

अनेन नियमेन व्यवहर्तव्यमित्यस्य ह्ययमर्थः-अनेन नियमेनोक्तमनेनेति मध्यस्थावगमस्य विषयीभवितव्यमिति।

*अनेनेति*। अनेन वादिना ऽनेन नियमनोक्तम् इति मध्यस्थावगमस्य विषयत्वेन भवितव्यमित्यर्थः।

नन्वर्थस्य यथा प्रतीतिसत्त्वं तथा प्रतीतेरर्थसत्त्वं स्वीकर्तव्या, व्यवहारांगत्वात्। तथा च नासद्वादः सिद्ध्यति, तस्यैव सत्त्वादित्यत आह

३४ न च मध्यस्थावगमस्यैव सत्ताऽभ्युपेया]

न च वाच्यम्—"ततस्तदवगमस्यापि सत्ताऽभ्युपेयेति[२]"। तस्यापि सत्ताचिन्तायां तत्सत्तावगमान्तरस्यैव शरणत्वात्।

* नचेति *। कुतो न वाच्यमित्यत आह * तस्येति *। अर्थसत्त्वे प्रमाणाभावादवगमः कथं सन्निति जिज्ञासायामवगमो ऽस्तीत्यवगमांतरमेव तस्य सत्त्वमित्यर्थः।

प्रतीतेरपि प्रतीतिसत्त्वं चेत्, तत्राप्येवमित्यनवस्था[३] स्यादित्याशंक्याह

१ ननु प्रमाणादिसत्ता माऽभ्युपगम्यताम्, नियमबन्धश्चेदङ्गीकृत एतावतैव द्वैतापत्तिरित्यत आह अनेनेति। (शां)

२ ततश्चानेनैव द्वैतापत्तिरित्याशयः।

३ ततः सर्वव्यवहारोच्छेद इत्यर्थः।

३५ उक्तपक्षेऽनवस्थाया निराकरणम् ]

नचैवमनवस्था। तदनुसरणावश्यम्भावानङ्गीकारात्। एवं त्रिचतुरज्ञानजन्मनो नाधिका मतिरिति[2] न्यायात्।

*नचेति*। अनवस्थाभावे हेतुमाह *तदिति*। यथा रत्नपरीक्षायां त्रयाणां चतुर्णां वा वाक्यात्सम्यग्ज्ञाने जाते न पुनः पुनर्ज्ञानांतरमपेक्षते तथाऽन्यत्रापि ज्ञानांतरानुसरणस्यानावश्यकत्वान्नानवस्थेत्यर्थः। उक्तमर्थं भट्टवचनेन दृढीकरोति * एवमिति *। 'एवं त्रिचतुरज्ञानजन्मनो नाधिकामतिः। प्रार्थ्यते तावतैवैकं स्वतः प्रामाण्यमश्नुत' इति।

ननु – सत्तावगमप्रवाहाविच्छेदेनावस्थाविच्छेदेऽन्तिमज्ञानस्य प्रातीतिकसत्त्वस्याप्यभावात्–उत्तरोत्तरज्ञानस्यैव पूर्वं पूर्वम्प्रति सत्त्वरूपत्वात्–उत्तरोत्तरासत्त्वेनामूलमसत्त्वापत्तौ प्रातीतिकसत्त्वेनापि न कथारंभः शक्यत इत्यत आह

३६ प्रकारान्तरेणानवस्थायाः परिहारः ]

न च–" अन्तिमासत्त्वे पूर्वपूर्वप्रवाहासत्त्वापत्तिः, तथाचावगममादायापि न निस्तार" इति वाच्यम्। अस्तु

१ भवेदेवं यदि ज्ञानमवश्यं स्वव्यवहारार्थं स्यात्। किन्तर्हि विषयव्यवहारार्थमनुसृतस्य व्यवजिहीर्षायां ज्ञानान्तरमनुसिसृयताम्, न तु तत्तज्ज्ञानव्यवहारपरम्पराध्रौव्यम्, येनानवस्था स्यादित्यर्थः। ( शां )

२ श्लोकवार्त्तिके–चोदनासूत्रे श्लो. ६१

३ 'आमूलम्' मूलादारभ्य सर्वेषामसत्त्वापत्तिरित्याशयः।

४ ननु ज्ञानस्यापि व्यावहारिकी सत्ता, तथा चान्तिमज्ञानमव्यवह्रियमाणमसत्स्यात्, तन्मात्राधीनसत्ताकन्तत्पूर्वज्ञानमप्यसदापद्येत–इत्याशंक्य-

एवम् तथाऽपि त्रिचतुरज्ञानकक्षागवेषणमात्रविश्रान्तेन विचारेण ततःपरमननुसरणरमणीयेनैव समयं बद्धा कथायाम्मिथः सम्प्रतिपत्त्या प्रवर्तनात् । अन्यथा प्रमाणादिसत्ताभ्युपगमेऽपि ज्ञानानवस्थाया दुष्परिहरत्वात् ।

* नचेति * । अंतिमज्ञानस्य प्रतीत्यंतरानंगीकारे वस्तुत आमूलमसत्त्वमापद्यते चेदिष्टसिद्धिरित्याह * अस्त्विति * । अस्तु नाम तथेत्यर्थः । कथं तर्हि व्यवहार इत्याशंक्य त्रिचतुरज्ञानादूर्ध्वमविचार्यैव कथारंभ इति संकेतकरणात्तत्सिद्धिरित्याह * त्रिचतुरेति * । त्रिचतुराणि च तानि ज्ञानानि, तेषां कक्षासु कोटिषु गवेषणमात्रेण पर्यालोचनमात्रेण विश्रांतो यो विचारस्तेन ततः परमविचारितरमणीयेन समयं बध्वा कथायां प्रवृत्तिसंभवादित्यर्थः । त्रिचतुराणि चेत्यादिज्ञेयस्वरूपसत्त्वांगीकारे लाघवादनवस्थाभावाच्च तदेव स्वीकार्यमित्यत आह * अन्यथेति * । अर्थसत्तांगीकारे ऽपि तत्प्रमाणाननुसरणेन तत्सिद्धिरिति दुष्परिहरैवानवस्थेत्यर्थः ।

ननु कथं स्वरूपसत्तांगीकारे ऽनवस्था, अदृष्टादिवदज्ञातस्वरूपत्वेनैव ज्ञानेन व्यवहारोपपत्तेः; त्वत्पक्षे तु स्वरूपसत्त्वाभावात् प्रतीत्यंतरानुसरणमावश्यकं विवेकिनामिति दुष्परिहराऽनवस्थेत्याशंक्याह

---

सर्वेशान्यताभिप्रायेणेष्टापत्त्या परिहरति अस्त्विति । सर्वामत्त्वमस्त्वित्यर्थ (ग)

'अस्तु, एवंहि' इति शाङ्करीसम्मत पाठ । अत्र धृत पाठ सम्यकर प्रतिभाति विद्यासागरीसम्मतसिद्धश्च ।

३७ स्वरूपसत्तामादायाप्यनवस्थाया दुष्परिहरत्वम् ]

न च वाच्यम्—"मत्पक्षे स्वरूपसत्तांज्ञानेन व्यवहारस्य चरितार्थयितुं शक्यत्वात् न ज्ञानस्य परम्परानुसरणमुचितम् । न त्वेवं त्वत्पक्षे, ज्ञानस्वरूपसत्ताङ्गीकारप्रसङ्गादिति" । स्वरूपसत्तामादायापि परिहरतोऽनवस्थाप्रसङ्गस्य स्वप्रकाशप्रस्तावे वक्तव्यत्वात् । यथा च त्वत्पक्षे स्वरूपसत्त्वाविशेषेऽपि ज्ञानस्वरूपसत्तैव परं व्यवहारोपपादिका, न घटादिसत्ता, एवमेवासत्त्वाविशेषेऽपि ज्ञानमेवासद्व्यवहारोपपादकं नान्यत् ।

* नचेति * । कुत इत्यत आह * स्वरूपेति * । को ब्रूते सती सा वित्तिरसत्येव न कुत इत्यादौ—अनवस्थाप्रसंगः स्वरूपसत्त्वमादाय प्रत्यवतिष्ठमानस्य-वक्ष्यत इत्यर्थः । नन्वसद्वादे ज्ञानं न व्यवहारोपपादकम्, असत्त्वात्, अर्थवत्, विपक्षे ऽर्थस्यापि तद्धेतुत्वप्रसंग इत्याशंक्याह * यथेति * । ज्ञानं न व्यवहारोपपादकम्, सत्त्वात्, अर्थवत्, विपक्षे ऽर्थस्यापि तद्धेतुत्वप्रसंग इत्याभाससमानयोगक्षेमत्वमित्यर्थः ।

* तत्त्वत एतावदेव कथारम्भे नैयायिकाभिमतप्रमाणादिसत्तास्वीकारावश्यकत्वस्य खण्डनम् । इतः परन्तत्प्रसंगेनोपन्यस्तस्य कारणत्वस्य सत्त्वासत्त्वविवेचनम् । *

१ मत्पक्षे ज्ञानं स्वरूपसदेव विषयव्यवहारसमर्थम्, त्वत्पक्षे स्वरूपेणासतो ज्ञानस्य ज्ञानान्तरमेव सत्त्वमित्यनयोर्महद्वैषम्य मिति शङ्काकृदभिप्रायः ।

२ ननु ज्ञानस्यासत्त्वे कथं तदधीनो व्यवहारः । अथासदपि व्यवहारहेतुस्तदा सर्वदैवासतो व्यवहारः स्यात्, अविशेषादित्याशंक्याह यथेति । (शा)

उपपादकत्वं नाम कारणत्वम्। तच्च नियतप्राक्सत्त्वरूपम्। तदभावश्चासत्त्वम्। तेन परस्परं व्याघात इति चोदयति

३८-असतो ऽपि कारणत्वसम्भवः ]

"असच्चोपपादकश्चेति व्याहतमिति" चेन्न। सदुपपादकमिति कुतो न व्याहतम्। न हि सदुपपादकमसच्च नेति क्वचिदावयोः सिद्धम्।

* असच्चेति *। नियतप्राक्संबन्धि कारणम्, न तु प्राक्सत्त्वम्। संबन्धश्च सदसतोरविशिष्ट इत्यभिप्रेत्य प्रतिबन्दीन्यायेन परिहरति * नेति *। "सदुपपादकमिति न व्याहतं; सतस्तंत्वादेः पटाद्युत्पादकत्वदर्शनात्" इत्याशंक्याह * नहीति *।

नन्वसतः कार्यकाले अन्यदातो ऽविशेषे शून्यत्वहानिः, विशेषे न नियमेन कार्यजन्म स्यादिति शंकते :

३९-न चासत्त्वाविशेषात्कार्यस्य सार्वत्रिकोत्पत्तिप्रसङ्गश्चोद्यः ]

"ननु तदसत्त्वाविशेषात्तत्कार्यस्यान्यदाऽपि प्रसङ्गः" न। कार्यस्याद्यसत्ताक्षण इवान्यदाऽपि सामग्र्यसत्त्वाविशेषात्त्वयापि किं नान्यदा कार्यजन्म।

१ कारणन्नियतप्राक्सदित्येव नास्ति, कुतो, व्याघात इत्यभिप्रायेणाह सदिति। ( शां )

२ कार्योत्पत्तिक्षणे सामग्री त्वयाऽपि नेष्यते, प्रागभावस्य तद्घटकस्याभावात्, तथा च यथासमग्रीविरहिणि तस्मिन् क्षणे कार्यन्तथा क्षणान्तरेऽपि कथन्न स्यात्; अविशेषात्—इत्यभिप्रायेणाह नेति। ( शां )

* नन्विति * । तदुदितमुदयनेन—'अनुपाख्यस्य हेतुत्वे प्रागपि सत्त्वप्रसक्तौ पुनः सदातनत्वापत्तेरिति'। किं कारणासत्त्वे कार्यजन्मेष्टमित्यवष्टंभेनेदं चोद्यते, किं वा नियामकाभावाभिप्रायेण। आद्यं प्रत्याह * न कार्यस्येति *। कार्योत्पत्तिकाले सामग्री नास्ति, उतास्ति । अस्ति चेदुत्तरक्षणे ऽपि द्वितीयकार्यप्रसंगः। नास्ति चेत्प्रागूर्ध्वं च तदसत्त्वाविशेषात्तदापि कार्यजन्म स्यादित्याशयः।

द्वितीयं शंकते

४० तस्य प्रसङ्गस्य पक्षद्वयेऽपि सम्भवात् ]

"अथ न मम तदानीन्तनं सामग्रीसत्त्वं तदातनस्य कार्यजन्मनो नियामकम् किन्तु ततः प्राक् सामग्रीसत्त्वम्, तथादर्शनात्,"—तर्हि ममापि कालांतरस्थमपि तदसत्त्वं तदातनकार्यजन्मनो नियामकम्, तथादर्शनादेव ।

*अथेति*। सामग्र्यसत्त्वमसत्त्वादेव न नियामकं, किं तु तत्सत्त्वम्। न चातिप्रसंगः, नियतप्राक्कालावच्छिन्नमिति विशेषणादिति भावः। पूर्वक्षणावच्छि-

---

१ कुसुमाञ्जलौ प्रथमेस्तबके. पृ. ४३

२ अस्मत्पक्षे सामग्र्यसत्त्वन्न कार्योत्पत्तिनियामकम्, किन्तु कार्याव्यवहितपूर्वक्षणसामग्रीसत्त्वमेव तथेति शङ्काभिप्रायः।

३ कार्यक्षणे नियमतः कार्योत्पत्तिदर्शनात् यथा पूर्वक्षणसामग्रीसत्त्वं तव नियामकम्, तथा ममापि नियतकालकार्यदर्शनात् पूर्वक्षणसामग्र्यसत्त्वमेव किन्न नियामकमित्याशयेन समाधानम्। सामग्रीसत्त्वम्पूर्वक्षणमात्रे, तदसत्त्वञ्च सार्वत्रिकमिति यद्यपि महद्वैषम्यन्तथा ऽपि कार्यस्यापि यतः पारमार्थिकबुद्ध्याऽस्मत्पक्षे ऽसत्त्वमेव ततो न काऽपि क्षतिरिति हृदयम्॥

अनुत्तरक्षणवर्तिनः कथं नियामकमसम्बन्धादित्यत आह *तथेति*। न हि दृष्टे ऽनुपपन्नं नामेति भावः। सामग्री किमेकक्षणवर्त्तिनी किं वा पूर्वक्षणेप्यस्ति। आद्ये यत्सत्तत् क्षणिकमिति वदन् सुगतश्चरितार्थः स्यात्। द्वितीये पूर्वोत्तरक्षणयोरविशेषेपि पूर्वकालावच्छिन्नसद्वदसदपि तथाभूतं नियामकं विशिष्म इत्याह *तर्हीति*।

सामग्रीकालादव्यवहितोत्तरत्वं प्रयोजकं नियतप्राक्सत्कारणं नियतोत्तरं सत्कार्यमित्यङ्गीकारादिति नियामकांतरं शंकते।

४१ न कार्योत्पत्तिसमकालीनसामग्रीसत्त्वमपि कार्यजन्मनियामकम्]

मम तदव्यवहितोत्तरत्वं तदा कार्यनियामकमिति चेत्, न। [१]समसमयत्वादागन्तुकत्वाच्चाविशेषेण नियम्यनि-

---

१ समसमयत्वादिति पदं बहुधा व्याख्यातं शङ्करमिश्रेण। तद्यथा। (१) यदेव कार्योत्पत्तिक्षणत्वन्तदेव सामग्र्युत्तरक्षणत्वमिति कथमभेदेनैव नियम्यनियामकभावः। 'समयस्य' क्षणस्य 'समत्वात्' एकत्वादित्यर्थः। न चोपाधिभेदाद्भेदः। तथा सति दण्डित्वकुण्डलित्वाभ्यान्देवदत्तो भिद्येत। (२) यद्वा तुल्यकालयोः सामग्र्युत्तरक्षणत्वकार्यक्षणत्वयो सव्येतरविषाणवन्नियम्यनियामकभावाभावादित्यर्थः। (३) यद्वा 'समय.' व्यवस्था, तेन समत्वान्नियम्यनियामकयोः समव्यवस्थत्वात्। तथा च कार्यनियामकत्वेनाभिमतस्य सामग्र्युत्तरत्वस्य नियामकान्तरं वाच्यमित्यर्थ.। एतदेवाग्रे-'अन्यथा तद् विशेषान्तरन्तदपि' इत्यादिना-स्फुटयिष्यति। (४) यद्वा 'समय.' सङ्केतः। तथा च कार्यक्षणसामग्र्युत्तरक्षणयोरेकार्थवाचकत्वेन तदुपस्थाप्ययोर्घटकलशपदोपस्थाप्ययोरिव न नियम्यनियामकभाव इत्यर्थ.। * आगन्तुकत्वादिति * । (१) अव्यवस्थितोपनिपातित्वात्। आकस्मिकोपनिपातिन्यतिथ्यादावागन्तुकपदप्रयोगात्। तथा चागन्तुका ऽऽक-

यामकव्यवस्थानुपपत्तेः। तस्मादन्यदास्थाया एव सामग्र्या-
स्तदा कार्यनियमोऽभ्युपेयः, तथादर्शनादित्येव मन्तव्यम्।
तथा च समः समाधिः[1]।

*** ममेति *। नियतोत्तरत्वं नाम धर्मः कार्यस्य किं भिन्नकालो ऽभिन्नकालो वा। प्रथमो दत्तोत्तरः। द्वितीये नियम्यनियामकभावानुपपत्तिः सव्येतरकरयोरिवेति परिहरति। *नेति*। नियम्यनियामकभावस्य पूर्वापरभावगर्भत्वादिति भावः। किं च उत्तरत्वमपि नियामकान्तरपूर्वकं चेदनवस्था, न चेत्स्वयमव्यवस्थितं कथ-**

---

स्मिकी सामग्री स्वोत्तरत्वेन कार्यजन्म कथन्नियमेदित्यर्थः। (२) यद्वा प्रागभावेतरयावत्कादाचित्कारणप्रागभावानाधारः कार्यप्रागभावाधारः क्षणः सामग्रीत्युच्यते। कार्यप्रागभावः कार्यानुत्पाद एव। तथा च कार्यानुत्पादः कार्योत्पादन्नियमयतीति पर्यवसितम्। तच्चानुपपन्नम्। कार्यानुत्पादस्य कार्योत्पादम्प्रति 'आगन्तुकत्वात्' उदासीनत्वात्। उदासीनो ह्यागन्तुक इत्युच्यते इत्यर्थः। तथा च समसमयत्वागन्तुकत्वाभ्यामविशिष्टयोस्त्वदभिमतनियम्यनियामकयोर्न नियम्यनियामकभाव इति समुदायार्थः। (३) अन्ये तु—'आगन्तुकत्वात्' अन्यथासिद्धत्वात्-इतिवा—'आगन्तुकत्वात्' अक्लृप्तनियामकत्वात्—इति वाऽर्थः' इत्याहुः। यद्यपि समसमयोरप्यागन्तुकयोरपि रूपरसयोर्बीह्यसमयोरपि नियम्यनियामकभावो दृष्ट एव, तथाऽपि कार्यस्यासत्त्वमेवेति हृदयम्॥

१ सामग्र्युत्तरक्षणत्वस्य नियामकत्वे खण्डिते, भिन्नकालाऽपित्वया सामग्र्येव नियामिका वाच्या। तथा च भिन्नकालसामग्र्यसत्त्वमेव किन्न नियामकमिति समः समाधिरित्यर्थः।

मन्यद्यवस्थापयेदित्याह *आगन्तुकत्वादिति*। तस्मात्प्राक्सामग्रीसत्त्वमेव नियामकमिति पक्षः परिशिष्यत इत्याह * तस्मादिति *। अन्यदास्थायाः पूर्वक्षणवर्त्तिन्या इति यावत्। भवतु, तव तावता को लाभ इत्यत आह * तथा चेति *। सामग्रीसत्त्वास्वीकारे कार्यकालस्याकार्यकालात्तदव्यवहितोत्तरत्वं विशेष इति न शक्यं वक्तुम्, विशेषान्तरं च नास्तीति कार्यकालाकार्यकालयोरविशेषप्रसंग इति शंकते

४२ कार्यजन्मैव कार्यजन्मकालस्य विशेषः ]

"तथापि कार्यजन्मकालस्य को विशेषः।" कार्यजन्मैव। अन्यथा यद्विशेषान्तरं तदपि विशेषान्तरवतः कालस्य स्यादित्यपर्यवसानमेव पर्यवस्येत।

*तथापीति *। जनिसंबन्ध एव विशेष इत्याह कार्येति परेणापि कार्यकालस्य जनिसम्बन्ध एव विशेषो वक्तव्य इत्याह *अन्यथेति*। यद्विशेषान्तरवतः कालस्य कार्यसत्तासम्बन्धस्त्वया कल्प्यते तदपि निर्विशेषस्य सविशेषस्य वा कालस्य स्यात्। आद्ये न नियमः। द्वितीये विशेषान्तरवत एवेत्यनवस्था स्यादित्यर्थः।

व्यावृत्तकार्यकालानामुपसंग्राहकं रूपं वक्तव्यम्। अन्यथा तेष्वैकरूपप्रत्ययायोगात्। नचाव्यवहितोत्तरत्वम्, सामग्रीसत्त्वानंगीकारादिति शंकते

१ अत्र 'यत्' इति, अग्रे च 'तत्' इति सर्वेषु पुस्तकेषूपलभ्यते। अनयोश्च पदयोः साक्षात् 'सम्बन्धः' इति पदनेकैवाक्यता न सम्भवति। अतस्तत्पदद्वयं 'सम्बन्धकल्पनम्' इत्येतत्परमेव नेयम्। 'यत्...सम्बन्धकल्पनम्....तत्....स्यात्' इति सम्बन्धः।

४३ न धानुगतरूपस्यानुधावनमुचितम् ]

तथापि तत्कालस्यानुगतं किं रूपमिति चेत् रूपान्तरवतोपि किं रूपमित्यपि पर्यनुयोगस्यानुवृत्तेः ।

*तथेति*। परिहरति* नेति *। अनुगतप्रत्ययहेतुतया यद्रूपमुच्यते तदपि किं रूपान्तरनिरपेक्षमुत सापेक्षम्। सापेक्षत्वे तस्य तस्याप्येवमित्यनवस्था। ततोऽन्ततोऽपि गत्वा किमपि रूपं निरपेक्षमेव वाच्यम्। तदादावेव किं नाभ्युपेयम्। तच्च जनिसंबन्धित्वामिति भावः।

* इत्यसतः कारणत्वसाधनम् *

* अथ सतः कारणत्वखण्डनम् *

एवं तावत् सदसत्कारणयोः साम्यमापाद्येदानीं कारणस्य सत्त्वमपास्यति ।

४४ सतः कारणत्वाभावे संग्रहकारिका ]

किञ्च

अन्तर्भावितसत्त्वञ्चेत्कारणं तदसत्ततः ।
नान्तर्भावितसत्त्वञ्चेत्कारणं तदसत्ततः ।

* किंचेति * । बीजमित्येव नांकुरस्य कारणं किंतु सद्बीजमिति तद्वादिना विशेष्यते। तत्र वक्तव्यम्—सत्ताविशिष्टं कारणं किं वा सत्तोपलक्षितम् । विशिष्टं चेत्, तत्राह*अन्तर्भावितेति*। अन्तर्भाविता ऽन्तःप्रवेशिता सत्ता यस्मिस्तदंतर्भावितसत्त्वम्। तच्चेत्कारणमुच्यते, सत्त्वविशिष्टे सत्ताऽसंभवात्कारणमसदेव स्यात्। सत्तासमवायात्सद्व्यवहारापगमादित्यर्थः। सत्तोपल-

चितं बीजस्वरूपं कारणमिति द्वितीयं शंकते *नांतर्भावितेति* । अन्तर्भावितसत्त्वं कारणं न, किं तूपलक्षितमिति चेदिति सम्बन्धः । के चिन्नांतर्भावितसत्त्वमित्यलुक्समासमिच्छन्ति । दूषयति*कारणमिति* तदा कारणकोटौ सत्त्वाप्रवेशादुपलक्षणतया तस्य बहिर्भावात्केवलं बीजस्वरूपमसदेव कारणमित्यसत्कारणत्वं स्फुटितं स्यादित्यर्थः ।

श्लोकार्थमेव विवृणोति

[ ४५ कारिकाया व्याख्या । सत्ताविशिष्टं कारणन्न सत ]

तथा ह्यन्तर्भूतसत्त्वं यदि कारणत्वं तदा स्वविशिष्टे स्ववृत्तिरंशतः स्वाश्रयत्वमापादयति । विशिष्टस्यार्थान्तरत्वेपि च स्वस्मिन् [1] स्ववृत्तिव्यतिरेकवत् स्वविशिष्टे स्ववृत्तिव्यतिरेकनियमदर्शनात् न सैव सत्ता तस्मिन्निति[2] अन्यस्यास्तस्याविशिष्टवृत्त्यभ्युपगमे[3] तामसन्निवेश्य कारणत्वमभ्युपगन्तुः सर्वथैव कारणमसत्पर्यवस्यति । अपरापरसत्तानिवेशने चापर्यवसानमेव ।

---

१ स्वस्मिन् स्वं वर्तत इति यथा विरुद्धम्, तथा स्वविशिष्टे स्वं वर्तत इत्यपि विरुद्धमेव । विरोधप्रयोजकस्यादर्शनस्योभयत्राविशेषात् (शा).

२ 'इति'=इत्यस्मात् कारणात् ।

३. ननु स्वविशिष्टे स्वम् मा वर्तिष्ट । स्वभिन्नया द्वितीयया सत्तया प्रथमसत्ताविशिष्टानां सत्त्वम्, सत्त्वाच्च कारणत्वमुपपद्यत इत्यत आह *अन्यस्याः इति* । प्रथमसत्ताया अकिञ्चित्करत्वेऽपि तत्तुल्यतया द्वितीयसत्तामप्यनिवेश्यैव त्वया कारणत्वं वाच्यम् । तथा च न प्रथमया न वा द्वितीयया सत्तया सताद्कारणत्वमिति सर्वथैवासत्कारणमिति भावः । (शा)

* तथा हीति *। सत्ताविशिष्टे कारणत्वं धर्मः, किं
ो तदुपलक्षिते। यदि विशिष्टे तदा ऽपि विशेषणवि-
ोष्यतत्सम्बन्ध एव विशिष्टम्, किं वा ऽन्यत्। उभ-
था ऽपि तत्र सत्ता वर्तते न वा। यदि वर्तते विशेषण-
ूतैव सत्ता, उतान्या। यदि सैव तत्राह *अन्तर्भूते-
न*। अंशतो विशेषणांशे स्ववृत्ति। न च तद्युक्तम्। न हि
ुटुतरो ऽपि नटवटुः स्वस्कन्धमारुह्य नरीनर्तीत्यर्थः।
ादि मीमांसकंमन्यस्य मते विशिष्टमर्थान्तरं तत्राह।
* विशिष्टस्येति *। सत्ता न स्वविशिष्टे वर्तितु-
र्हति, विशेषणत्वाद्, दण्डवत्। स्वस्मिन् स्ववृत्त्यभा-
ात् स्वविशिष्टे स्ववृत्त्यभावनियमदर्शनात् सैव
त्ता तस्मिन्नित्यसत्कारणं स्यादित्यन्वयः। यद्यन्या-
त्ता विशिष्टे वर्तते तदा ऽपि, तामंतर्भाव्य विशिष्टं
ारणमनन्तर्भाव्य वा। नान्तर्भाव्यं चेत्तत्राह *अन्य-
था इति*। तत्र वर्तमानाया अपि सत्तायाः कारणत्वे
निवेशानङ्गीकारात्। नहि काष्र्ण्यं धूमे वर्तत इत्येताव-
ता कृष्णत्वमपि लिङ्गत्वोपयोगि, तद्वदित्यर्थः। यद्य-
न्तर्भाव्य सत्तां विशिष्टं कारणं तत्रापि सत्त्वावृत्ताव-
सत्त्वम्, वृत्तौ वा ऽनवस्थेत्याह * अपरेति *। अपर्य-
वसानमनवस्थेत्यर्थः।

अपरापरसत्त्ववृत्तिस्वीकारे ऽपि नानवस्था, सत्ता-
नामानन्त्येन मूलक्षयाभावादित्याशंक्याह

४६ सत्ताभेदानन्त्यस्वीकारेऽपि न कारणस्य सत्त्वम् ]

न च सत्ताभेदानन्त्यमस्त्वेवेत्यपि पादप्रसारिका
निस्ताराय। सत्ताभेदे हि सद्बुद्धिव्यवहारानुगमननि-

बन्धनलंघिनः प्रथमाऽपि सत्ता न स्यादिति सत्त्वबुद्धिमिष्टवतो मूलमपि ते नष्टमिति कष्टतरम् ।

* न चेति *। अनुगतैकसत्तया सद्बुद्धिव्यवहारोपपत्तौ तद्भेदस्वीकरणं गौरवान्मानाभावाच्चायुक्तमिति भावः। सत्ता स्वव्यतिरिक्तसत्तासंसर्गिणी, सद्व्यवहारविषयत्वात्, घटवत्। न च समवायादौ व्यभिचारः, उक्तहेतुनैव साध्यसंप्रतिपत्तेस्तत्रापि सुकरत्वादित्याशंक्याह * सत्तेति *। अनन्तसत्तास्वनुगतसद्व्यवहारतद्बुद्ध्योरनुगतसत्त्वान्तरमूलत्वे तस्मिन् तासु च तदुपपत्तये सत्त्वान्तरं स्वीकार्यमिति सत्तानवस्था। सत्तासु तद्बुद्धिव्यवहारयोः स्वरूपमात्रमूलत्वे घटादिव्यावृत्तस्वरूपाणामेव सद्व्यवहाराद्युपपादकत्वसंभवेन प्रथमाऽपि सत्ता न स्यादिति सत्त्वबुद्धिमिष्टवतो मूलमपि सत्त्वं नष्टमिति महती विपदापन्नेत्यर्थः।

ननु मा भूदनुगता सत्ता, प्रमाणयोग्यं स्वरूपं तत्सम्बन्धो वा सत्तेत्यभ्युपगमादित्याशंक्याह

४७ स्वरूपसत्ता नोपगमाय समर्था। अनुगत्यभावे च कारणस्यानुगमः ।

न च स्वरूपसत्तोपगमाय स्वस्ति। भिन्नानप्यनुगतबुद्ध्याद्याधानपदेऽभिषिञ्चता त्वया जातिमात्राय जलाञ्ज-

---

१ अनेकसद्वस्तूनामेकत्र व्यवहारायैकत्रानुगमाय च सत्तारूपा जातिः स्वीक्रियते साम्प्रदायिकैः। एतत्स्वीकारस्तु सत्तानन्त्याभ्युपगमस्यावश्यकत्वे, व्यर्थ एव। एकत्रानुगमस्यानावश्यकत्वात्, पूर्वोक्तदोषप्रसङ्गाच्च। ततश्च न सत्तेति दूरएव तस्या आनन्त्यमिति भावः।

लिर्वितीयेत । मा भूदनुगतिः स्वरूपसत्त्वस्येति च वदन् तद्धर्मिणीं कारणतां कथमनुगमयितासीति[2] ।

* न चेति * । स्वरूपाणां व्यावृत्तत्वादनुगतसद्बुद्धिव्यवहारनिदानत्वं न स्यात्।अचाक्षुषत्वं च सत्त्वस्य स्यादित्याशयः। सत्त्वं सद्बुद्धिव्यवहारनिदानम् व्यावृत्तमनुगतं वा, विशेषणायोगात् इत्याशंक्याह *भिन्नानिति* । अनुगतबुद्ध्यादिराधीयतेऽस्मिन्नित्यनुगतबुद्ध्याद्याधानम्, तत्पदे तत्प्रवृत्तिगोचरे तत्स्थान इति यावत् । गवादिव्यक्तीनामेव गौर्गौरित्यनुगतबुद्ध्यादिनिदानत्वसंभवाज्जातिमात्राय जलांजलिर्दीयेतेत्यर्थः । नन्वनुगतसद्बुद्ध्यादेः सामान्यसत्त्वमेवालम्बनमस्तु स्वरूपसत्त्वस्य कारणत्वोपयोगिनो मा भूदनुगतिः,ततः को दोषस्तत्राह *मा भूदिति* । तद्धर्मिणीं स्वरूपसत्त्वविशिष्टां कारणतां कथमनुगमयितासि । कारणतानुमानस्य कथं कारयिता स्याः । स्वरूपाणां परस्परं व्यावृत्तत्वादनुगतं कारणं दुःसंपादमस्मिन्पक्षे स्यात् । न च तदपि मा भूदिति

---

१ ननु च सत्ताविरहिण्यपि सत्ता स्वरूपमती एव । दण्डादिरपि सत्तारहिर्भावेन कारणमस्तु । स्वरूपसत्ताया धर्मरूपमात्रनिरन्वयत्वात्, भाक्तादिभिस्तथैवाङ्गीकाराच्चेत्यत आह * नचेति * । स्वरूपसत्त्वस्य प्रतिस्वं विश्रान्तत्वेनाननुगतत्वात् अनुगतसद्व्यवहारविलोपप्रसङ्गात्, अननुगतेनैव चानुगतधीजनने गोत्वादिकमपि न स्यादित्यर्थ । ( शा )

२ कारणतायानुगमस्त्वयाऽभ्युपगतो न स्यात् । स्वरूपसत्तायास्तदनुगमकत्वेनाभ्युपेताया अननुगतत्वात् , सत्ताजातेश्च खण्डितत्वादित्यर्थ. ।(शा)

वाच्यम्, अनुगततद्बुद्ध्यादेरनालम्बनत्वप्रसंङ्गादित्यर्थः।

स्वरूपशब्दस्य सच्छब्दस्य चार्थभेदे स्वरूपसत्त्वस्य हानिः,अभेदे त्वसतोऽपि कारणत्वमविरुद्धमित्याह

४८ स्वरूपसत्त्वं वस्तुनो नाधिकम् ]

किञ्च स्वरूपसत्त्वं स्वरूपात् घटाद्यात्मनो नाधिकम्, असतोऽपि स्वरूपं स्वरूपमेव। नह्यसन् घटादिः। तथा सति 'घटादिर्न' इत्यपि न स्यात्; असतोऽघटादित्वात्।

* किं चेति *। घटादेरात्मा पृथुबुध्नोदराकारत्वादिस्वरूपमुच्यते। ततोऽधिकं न स्वरूपसत्त्वमस्ति। तच्चेत्कारणम्, असत्स्वरूपमपि कारणं स्यात्, स्वरूपत्वाविशेषादित्याशयः। तदुक्तं कुसुमांजलौ[2]। "भावो यथा तथाऽभावः कारणं कार्यवन्मत" इति। स्वरूपसत्त्वं कारणमिति स्वीकारे कथमसतः कारणत्वम्, तस्य निःस्वरूपत्वादित्याशंक्याह * असत इति *। बाध्यत्वमेव ह्यसत्त्वम् न स्वरूपशून्यत्त्वम्। यदि सत्त्वस्वरूपेण शून्यत्वान्निःस्वरूपत्वं विपरीतमेव तर्हि किं न स्यादित्यर्थः। यथाह्योदयनः[3]। "न ह्यभावस्याका-

१ घटस्य च निरूप्यमाण घटस्वरूपसत्त्व घट एव पर्यवस्यति। तथाच 'घटः' = कारणमित्यापातम्। असन्नपि घटो घट एवेति मत्पक्षात्त्वत्पक्षे न कश्चिद्विशेषः। यद्यपि च 'स्वरूपसत्' इति पारमार्थिकं (स्वरूपम्) अभिमतम् [अयमेव च त्वत्पक्षाद्विशेषः, त्वया दण्डादीनामपारमार्थिकत्वाङ्गीकारात्] तथाऽपि पारमार्थिकत्वखण्डने हृदयम्। (शां)

२ प्रथमस्तवक पृ. १०१।

३ कुसुमाञ्जलि प्रथमस्तवक. पृ. १०१।

रणत्वे प्रमाणमस्ति, न हि विधिरूपेणासौ तुच्छ इति स्वरूपेणापि तथा, निषेधरूपाभावे विधेरपि तुच्छत्व-प्रसंगादिति"। असतो घटादित्वमेव नास्ति, असत्त्वात्, शशशृंगवदित्याशंक्याह * नहीति * । वैपरीत्येपि पर्यनुयोगसाम्यादिति भावः। अप्रसिद्धप्रतियोगिकप्रतिषेधायोगादसतः प्रतिषेधप्रतियोगित्वेनासन् घटादिरेष्टव्य इत्याह * तथासतीति * । तदुक्तं कुसुमांजलौ। "निषेध्यासिद्धेर्निषेधस्याशक्यत्वादिति"।

एवं तावत् सत्ताविशिष्टं कारणमिति पक्षे ऽसदेव कारणमित्युपपाद्येदानीं तदुपलक्षितं कारणमित्यस्मिन्नप्युपपादयितुमनुभाषते

४६ न च सत्तोपलक्षितं कारणं सत् । तत्र सत्तामनन्तर्भाव्य कारणत्वे असदपि कारणम् ]

अथ सदपि सत्तामनन्तर्भाव्य कारणम्, तदानीमसदपि तथाऽस्तु, सत्तासत्तयोः कारणकोटयप्रवेशाविशेषात्[२] ।

* तथेति * । सद्वदसदप्यसत्त्वमनन्तर्भाव्य कारणमस्त्विति सिद्धान्तयति * तदानीमिति * ।

कारणत्वस्य भावत्वेन व्याप्तत्वात् तन्निवृत्तौ तदपि निवर्तेत इति शंकते

१ प्रथमस्तबक पृ. ३६९

२ सत्ताया इवासत्ताया अपि कारणकोटयप्रवेशात् असत्कारणवादित्वाद्भयमपि नोपालम्भ्याः। अतो दण्डादिः कारणमित्यावयोः समानोऽभ्युपगमः। स च सन्नसन् वेति क्रमेण विचारणीयम्। ( शां )

५० न च कारणत्वं सत्त्वमेव ]

अथ "न सत्ता कारणकोटिनिविष्टा किंतु कारणत्वं सत्त्वम् नियतपूर्वसत्तां हि कारणताम्मन्य" इति मन्यसे तर्हि मत्पक्षे सैव कारणताऽस्तु ।

* अथेति * । तद्व्याप्यत्वं तदभाववन्निष्ठात्यन्ताभावप्रतियोगित्वम् । अत एकत्वेऽपि न विरोधः । सत्त्वे सत्त्वाभावादसत्त्वसमन्तादित्यभिसन्धिमुपगृह्य परिहरति * तर्हीति * । असतः कारणत्वं नोपपद्यते सत्त्वस्यैव कारणत्वादिति शंकाग्रन्थार्थ इति केचित् ।

बलान्निगृहीतोऽसावसद्वादीति सोपहासं शंकते

५१ सत्ताभ्युपगमस्य नासामञ्जस्यम् कारणासत्त्ववादे ]

तर्हि कारणसत्तामभ्युपगतवानसीति घट्टकुट्यां प्रभातमिति चेत्, न । मात्रानवबोधात् । सत्तामसतीमभ्युप-

---

१ ननु सत्तावटितत्कारणत्वन्न ब्रूम, किन्तर्हि सत्त्वेव कारणत्वमिति, तथा च कारणत्वमभ्युपगच्छता त्वया सत्ताऽप्यङ्गीकर्तव्येति शङ्कते * अथ नेति * । ममापि नियतपूर्वसत्त्वमेव कारणत्वमिति परिहरति * तर्हीति * ।

२ मात्रमाविष्करोति सत्तामिति । न वयमसतीमपि सत्तामभ्युपेमः, किन्तर्हि सतीम् । अन्यथा किमुद्दिश्यासत्त्वमपि मया विधेय मित्यर्थे त्वयाऽपि या सत्ता कारणत्वेनाभ्युपेयते सा स्वान्तर्भावेनैव कारणत्व वाच्यम् । । स्वविशिष्टाच सा स्वस्मिन्ने ऽप्यसत्यत्र । यदि च स्वात्मानन्तटस्थीकृत्य सा सत्ता कारणत्वम्, तदा तया सत्तया तटस्थया कारणता सती निर्हेतु । सैव तु न सती । तस्या सत्तान्तराभावात् । भावे वा पुनरपर्यवसानं स्यात । ( शा )

गच्छताऽपि सत्ता मयाऽभ्युपगतैव। अन्यथा कासावसतीति। त्वमपि किं सत्तान्तरसत्तामन्तर्भाव्य कारणत्वमिच्छसि। नत्वेवम्। पूर्ववत् क्वापि सत्तात्यागो वा अनवस्थायां पर्यवसानं स्यात्।

* तर्हीति *। शौल्किकभयान्निशायां मार्गान्तरेण गच्छतः क्षपितनिशस्य घट्टकुट्यां शुल्कशालायां यथा प्रभातं कस्य चिद्वंचकस्य तथा तव सद्वादापत्तिभयात् भापान्तरेण वंचयतोऽपि सद्वाद आपन्न इत्यर्थः। स्वाभिप्रायकमप्रत्ययन् परिहरति *नेति* 'भावानवबोधात्' सत्त्वानवगमात्। सत्त्वस्य कारणधर्मत्वाङ्गीकारेऽपि तस्य सत्त्वान्न सत्कारणत्वव्याघात इति भावः। सत्ता न सतीति व्याघात इत्याशंक्याह * सत्तामिति *। यद्वा 'भावानवबोधात्' अभिप्रायापरिज्ञानादित्युक्तम्, तमभिप्रायमाह। सत्तां कारणतामसतीमभ्युपगच्छता सद्वादिना पूर्वक्षणे स्वरूपमसत्ताऽभ्युपगतैवेति यावत्। सत्तायां सत्तान्तराभावेऽपि सत्ता सतीति यथा न व्याघातस्तथा मन्मते सत्ता न सतीति न व्याघात इत्यर्थः। ननु मानसम्बन्धं तद्योग्यत्वं वा विना सत्तैव नास्ति तस्यां सत्तान्तरस्वीकारेऽनवस्थानादित्याशंक्याह * अन्यथेति *। सत्तोद्देशेनासत्त्वोपादाने तद्धर्मित्वेन सत्ता स्वीकृतेति भावः। ननु यद्यपि सत्ता स्वीक्रियते त्वया तथाऽपि तत्सत्ता त्वया नाङ्गीक्रियते मया पुनः सत्तायामपि सत्तान्तरं स्वीक्रियत इति मम सत्ताभ्युपगमेऽपि न तव तदभ्युपगमसम्भव इत्या-

शंक्याह * त्वमपीति *। नियतप्राक्सत्त्वं कारणत्वम्। तस्य च सत्तान्तरमिच्छंस्त्वमपि तत्सत्तामन्तर्भाव्य कारणत्वमिच्छस्यनन्तर्भाव्य वा। द्वितीये कारणमसदेव स्यादिति बहिरेव दूषयित्वा प्रथमकल्पमनुवदति। तस्याः सत्ता तत्सत्ता, तां प्रथमसत्तायामन्तर्भाव्य प्रथमसत्तां कारणतामिच्छसीति यावत्। तदंगीकरोति सद्वादी * नन्विति *। अपरापरसत्तानिवेशने सत्तानवस्थानम्, अनिवेशने तत्प्रभृत्यामूलमसतापत्तिरिति प्रागीरितपरिहारं स्मारयति * पूर्ववदिति *।

असत्कारणत्वे कालानियतिं परिहृत्य कारणानियतिं परिजिहीर्षुः परकीयां शंकामाह

५२ असत्त्वाविशेषात्कारणनियमसम्भवः ]

असत्त्वाविशेषात्कारणनियमः कथं स्यादिति चेन्न, सत्त्वाविशेषेऽपि तुल्यत्वात्।

* असत्त्वेति *। सत्त्वाविशेषे ऽपि यथा कमलकंदलयोः कमलांकुर कमलबीजादेव न पुनः कंदलादिति नियमस्तव तद्वदसत्त्वाविशेषे ऽपि नियम इति परिहरति * नेति *।

यस्मिन् सत्येव यद्भवति नासति तत्तस्य कारणमित्यन्यथासिद्धान्वयव्यतिरेकाभ्यां कार्यकारणभावो नियम्यत इति शंकते

१ ननु यद्यसत्कारणं तदा इदङ्कारणमियमकारमिति किङ्कृतो नियम इत्याद असत्त्वेति। ( शां )

५३ अन्वयव्यतिरेकानुविधानस्यापि सत्त्वासाधनत्वम् ]

"सत्त्वेऽस्त्यन्वयव्यतिरेकानुविधानम् तस्य तज्जातीयस्य वा। स्वपक्षे स्वसत्त्वाविशेषाद्व्यतिरेकः। परं सोऽप्यनियतः। यदा कारणाभावस्तदा कार्यावश्यम्भावानभ्युपगमात् नित्यासतः कारणस्यासत्त्व एव कदाचित् कार्योत्पादात्। अन्वयस्तु न क्वचिदपि"—इति चेत् न। तुल्यत्वात्। अन्वयो नास्तीत्यभ्युपगच्छता ऽप्यन्वयोपगमात्। अन्वयस्यापि सतान्तर्भावने कथितदोषापत्तेः।

* सत्त्वेस्तीति *। क्षणिकज्वालादिसंग्रहार्थं तज्जातीयस्येत्युक्तम्। अस्तु तर्हि ममाप्यन्वयव्यतिरेकाभ्यां तन्नियम इत्याशंक्याह *स्वदिति*। कारणयोः सत्त्वानभ्युपगमान्नासतीति व्यतिरेकः केवलं संभवति। बीजे सत्यंकुरो भवतीत्यन्वयज्ञानं दुर्घटमित्यर्थः। व्यतिरेकादेव तर्हि कारणनियमो ऽस्त्वित्यत आह * सो ऽपीति *। कारणाभावस्य कार्याभावेनाविनाभावानभ्युपगमादिति हेतुमाह * यदेति *। अवश्यंता अवश्यंभावस्तदेव कुत इति तत्राह * नित्येति *। यदा शाल्यंकुरो जायते ततो बीजासत्त्व एव जायते तदसत्त्वस्य नित्यत्वादित्यर्थः। कार्यभावस्य कारणभा-

---

१ यथा सतोऽन्वयव्यतिरेकौ तथैवासतोऽपि। परन्तुनिरूप्यमाणौ तावप्यसन्तौ पर्यवस्यतः इत्यन्यदेतदित्याह * नतुल्यत्वादिति * (शा)।

२ "अन्तर्भावितसतश्चेदन्वयो न स संस्ततः, नान्तर्भावितसतश्चेदन्वयो न स संस्तत" इति दोषापत्तेरित्यर्थः ( शां )।

येनाविनाभावोऽन्वयः, स न संभवति कार्यकारणभावानभ्युपगमादित्याह * अन्वयस्त्विति * । व्यतिरेकः परमित्यत्रोक्तव्यावर्त्यान्वयस्वरूपन्दर्शितमिति न पौनरुक्त्यमिति द्रष्टव्यम् ।

प्रतिबंदीग्रहेण परिहरति * नेति * । नियतपूर्वभाविसत्त्वस्य व्यावहारिकस्य स्वीकारादन्वयोऽपि तुल्य इत्यर्थः । यद्वा सत्ताविशिष्टस्य तदुपलक्षितस्य च सत्त्वाभावादन्वयाद्यभावस्तवापि तुल्य इत्यर्थः । एवं साम्यमापाद्याधुना स्वपक्षेऽधिक इत्याह * अन्वय इति * । असतोऽन्वयो नास्तीति वदन्नेवान्वयमंगीकुरुते ऽप्राप्तप्रतिषेधायोगात् । प्राप्तिरपि कश्चित्सत इति भवन्नियमादिति भावः । पूर्वं सदन्वयमभ्युपगम्याभाषि, स एव संप्रति न संभवतीत्याह *अन्वयस्येति*। कार्यकारणभावं नियमयन्नन्वयः सत्ताविशिष्टस्तदुपलक्षितो वा । आद्ये तत्र सत्तांतरवृत्तावनवस्थानम्, अवृत्तावसत्त्वम् । उपलक्षितत्वेऽप्यसत्त्वमुपलक्षणस्य बहिर्भावात् नहिकाकोपलक्षितं सद्म काक इति युज्यत इत्यर्थः ।

एवं कारणनियममुपपाद्य चोद्यांतरमप्येवं सति निरस्तं भवतीत्याह ।

५४ भक्षणस्य कारणत्वे चोद्यान्तरस्य परिहारः ]

एतेन "आशामोदकतृप्ता ये ये चोपार्जित मोदकाः ।

---

१ 'उपार्जनम्' भक्षणम् । 'रस' आद्यो धातु । 'वीर्यम्' बलम्, चरमधातु । 'विपाक' परिणाम लौहित्यमिति यावत् । 'रसो' मधुरादिरिति

रसवीर्यविपाकादि तेषां तुल्यं प्रसज्यते" इत्यस्यापि बाधकत्वमाशामोदकायते । सत्तान्तर्भावानन्तर्भावाभ्यां प्रत्यादेशात्, आशामोदकादिनापि च रसवीर्यविपाकादि-जननात् ।

*एतेनेति* । आशया कृतानि मोदकान्याशामोदकानि, मनोराज्यविजृंभितानीति यावत् । तैस्तृप्ता इत्यर्थः । रसो मधुराम्लादिः । वीर्यमोषधिगतः शक्तिविशेषः । शीतवीर्या हि पिप्पलीत्यादिः । विपाकः परिणामःकटुत्वादिः । आदिशब्देन रसकार्यपुष्ट्यादिग्रहः । असतः कारणत्वे सत्याशामोदकतृप्तानामुपार्जितमोदकानां च रसवीर्यादि तुल्यं प्रसज्यत इत्यस्य प्रसंगस्यासत्पक्षे बाधकत्वमाशामोदकवदाचरतीत्यर्थः। *एतेनेति* परामृष्टमेव हेतुं स्पष्टयति । *सत्तेति* । अस्य प्रसंगस्य सत्कारणत्वे विपर्ययपर्यवसानं वाच्यम्, तस्य सत्ताविशिष्टस्योपलक्षितस्य वा कारणत्वस्य खंडितत्वात् । विपर्ययापर्यवसायी प्रसंगाभासोऽयमित्यर्थः। स्वप्नेन कल्पितादेव कार्यजननादिष्टापत्तेश्च प्रसंगाभास इत्याह *आशेति* ।

एवमसतः कारणत्वमापाद्येदानीमसतः कार्यत्वमापादयितुं चोद्यमुद्भावयति

व्याख्यानमयुक्तम्, तस्य भोजनाजन्यत्वात्, इति शांकरी । किन्तु रसशब्दोऽन्नरसानुभवपरः तेन च मधुराद्यनुभवानाम्भोजनमात्रजन्यत्वे धिया्सार्गयुक्तव्याख्याने न कश्चिद्दोषः ।

१ सतः कारणत्वमभिप्रेत्य बाधो ऽयम्भवता ऽभिधीयते ।' तच्च 'अन्तर्भावितसत्त्वञ्चेत्' इत्यादिना प्रागेव निरस्तमित्यर्थः ।

५१ असत एव च कार्यत्वम् ]

तदसत्कथं कार्यं स्यादिति चेन्न। सत्तामन्तर्भाव्य कार्यत्वोपगमे कारणवत्कार्येऽपि उक्तदोषस्य—अनन्तर्भावे वा ऽविशेषस्य—पूर्ववदावृत्तेः।

* तदिति *। प्रागसतः सत्तासमवायो जनिः, कारणसमवायो वा। तदसतः कथं स्यादित्याशयः। परिहरति * नेति *। सत्कार्यवादी प्रष्टव्यः—सत्तामन्तर्भाव्य कार्यत्वमनन्तर्भाव्य वा। आद्ये स्वविशिष्टे स्ववृत्त्यभावात्कारणत्वस्येवासत्त्वम्। द्वितीये ऽप्यसदप्यसत्त्वं वहिर्भाव्य कार्यमस्त्वित्यविशेषापत्तिरित्यर्थः। कारणकोटौ सत्तामन्तर्भाव्य कारणत्वोपगमे कारणवत्तामन्तर्भाव्य कार्यत्वोपगम उक्तदोषस्यावृत्तेः। अनन्तर्भावे चावयोरविशेषस्य पूर्ववत्कारणवदावृत्तेरिति योजना।

---

१ *सत्तामिति*। (१) 'अन्तर्भावितसत्त्वञ्चेत्कार्यञ्चेत्तदसत्ततः नान्तर्भावितसत्त्वञ्चेत्कार्यं स्यात्तदसन्ततः' इति दोषापत्तेरित्यर्थः। दृष्टञ्च गुञ्जापुञ्जस्थले असता हुताशनेनासतः शीतापनोदनस्योत्पत्तिर्वानराणाम्; असत्यैव च मत्तकाशिन्या (वरस्त्रिया) सम्भोगसुखमसदेव स्वप्ने सुप्तानामिति भावः। (२) यद्वा—ननु प्रागसतः सत्त्वङ्कार्यत्वम्, इति कार्यसत्ताऽवश्यमङ्गीकार्येत्यत आह सत्तामिति। यथा नियतपूर्वसत्त्वङ्कारणत्वमित्यत्रासती सत्ताऽभ्युपगता, तथा कार्यसत्तामप्यसतीमङ्गीकृत्यैतन्मया समाधेयमित्यर्थः। (शां)

५६ सत्त्वासत्त्वविचारस्योभयत्रापि वैयर्थ्यम् ]

तस्माद्

पूर्वसम्बन्धनियमे हेतुत्वे तुल्य एव नौ।
हेतुतत्त्वबहिर्भूतसत्त्वासत्त्वकथा वृथा।

यस्मादुन्नीतनीत्यासत्त्वं कारणकोटिनिविष्टं न भवति *तस्मादिति* उपसंहरति। 'नौ' आवयोः। सदसद्वादिनोः पूर्वकालसंबन्धनियमहेतुत्वे तुल्ये सति सद्वादे कारणत्वं घटते नासद्वाद इति हेतुत्वानुपयोगिनी सत्त्वासत्त्वचिंता वृथेत्यर्थः।

स्वपक्षे दोषमपरिहृत्य परपक्षे तं प्रसंजयतो मतानुज्ञा नाम निग्रहस्थानं स्यात् 'स्वपक्षदोषाभ्युपगमात्परपक्षे दोषप्रसंगो मतानुज्ञेति' सूत्रकारवचनादिति चोदयति।

५७ असतो ऽपि कारणत्वे नियतपूर्ववृत्तित्वस्यैव नियामकता ]

"आस्तां[2] प्रतिबन्दिग्रहग्रहः। कथं पुनरसतः कारणत्व-

१ न सत् कारणन्नाप्यसत् कारणम्, किन्तु नियतपूर्ववृत्ति कारणम्। तच्च यथा सत्तथाऽसदपीति सदेव कारणमिति त्वत्कथावत् असदेव कारणमिति मत्कथाऽप्यापाततो वृथा। विचारस्तु करिष्यत इत्यर्थः। (शा)

२ (१) ननु—असत्त्वाविशेषात् कारणानियमः कथं स्यादिति मदुक्ते, 'सत्त्वाविशेषेऽपि तुल्यत्वात्' इति त्वया प्रतिबन्दिः कृता। प्रतिबन्दिश्च न दूषणम्, इत्यसतः कारणत्वप्रमापकाभावादनुपपन्नमयेति शङ्कते *आस्तामिति*। (२) यद्वा—'पूर्वसम्बन्धनियमे हेतुत्वे तुल्य एव नौ' इति साम्यमाग्रन्थत्वयोक्तम्। तच्चानुपपन्नम्। सत्त्वासत्त्वपक्षे ग्राहकसत्त्वासत्त्वाभ्यां विशेषात्—इति शंकते *आस्तामिति*। प्राचि काले सत्त्वङ्कारणत्वङ्ग्राह्यम्। तदस्मन्मतेऽस्ति। त्वन्मते तु सर्वदैवासत्त्वम्, इति प्राचि काले सत्त्वङ्ग्राहकन्नास्त्येव, किं गृह्येतेत्यर्थः। (शां)

मत्रसेयम्, प्राक्सत्त्वनियमस्य विशेषस्यानभ्युपगमात्, असत्त्वस्य चाविशेषादिति" चेन्न। इदमस्मान्नियतं प्राक्सदिति बुद्ध्या विशेषात्।

* आस्तामिति *। सत्त्वाविशेषात् सतः कथं कारणत्वमित्यादिरूपप्रतिबंदीग्रहः। द्वितीयग्रहो ऽभिनिवेशः। मानाभावादसतः कारणत्वमवगंतुमशक्यमित्याह * कथमिति *। सतः कारणत्वगमकमसतो ऽपि भवतीति नेत्याह *प्रागिति*। इदमस्मान्नियतप्राक्सदिति यत्र बुद्धिस्तत् कारणत्वेन व्यवह्रियते, तच्च त्वया नानुमन्यते इत्यर्थः। सतः प्राक्सत्त्ववदसतः प्रागसत्त्वं कारणत्वगमकमिति नेत्याह *असत्त्वस्येति*। कारणाकारणयोर्विशेषवत्त्वे असत्त्वहानिरित्यर्थः।

असत स्वरूपविशेषे ऽपि बुद्ध्यैव विशेषो ऽसिद्ध इति परिहरति * नेति *। इदमस्मान्नियतप्राक्सदिति बुद्धिगोचरत्वं कारणत्वगमकं ममापीत्याशयः।

जगतो नियतप्रागसदिति बुद्धिः कापिलानां प्रधाने ऽस्ति। न च तज्जगत्कारणमतो ऽतिव्यापकं लक्षणमिति शंकते

५८ भ्रान्तावतिप्रसङ्गाभावः ]

"भ्रान्तैवंबुद्धिगोचरे ऽतिप्रसङ्ग" इति चेन्न। यादृश्या

१ रासभादीनामपि विषये घटप्रागस्तित्वबुद्धिर्भवति, न च भ्रान्तिहेतवो ऽपि कार्यं चिन्नियम्यन्ते—इति तेषामपि घटकारणत्वतद्व्यवहारयोः प्रसङ्ग इत्याह *भ्रान्तेति*। चोदितमतिप्रसंगम्परिहरति *नेति*। कारणाकारणयोरेवंबुद्धिसम्भवे ऽपि कारणे झटिति बाधानवतारः, अकारणे तु झटित्येव बाधावतारः इति विशेषो ऽस्त्येवेत्यर्थः।

हि धिया त्रिचतुरकक्षाबाधानवरोधविश्रान्तया वस्तुसत्त्वनिश्चयस्ते, तादृश्यैव विषयीकृतस्य ममापि कारणतानिश्चयः। केवलन्ततः परास्वपि कक्षासु बाधात् पर्वपूर्वभ्रान्तिसम्भवेन न तावता सत्त्वावधारणं वयं मन्यामह इति विशेषः। परदर्शनसिद्धान्तस्य भूरिकक्षाधाविनोऽपि ततः परकक्षाबाध्यमानत्वेनातथाभावोपगमात्। अन्यथैकदर्शनपरिशेषः स्यात्।

* भ्रांतेति *। "तवापि प्रतीतिमात्रं प्राक् सत्त्वव्यवस्थापकम्, उतात्यंताबाधितप्रतीतिः। आद्ये प्रसंगसाम्यम्। द्वितीये देशकालान्तरभाविबाधाभावस्य प्राक्तनानवसेयत्वादसिद्धिस्त्रिचतुरकक्षाबाधितयेति" चेत्, ममापि तर्हि तादृश्यैव विषयीकृतस्य कारणत्व-

---

१ एवमबाधितधीविषयाणाम्पारमार्थिकसत्त्वमायातमिति तत्परिजिहीर्षया आह *केवलमिति*। आपाततोऽबाधविशेषमात्रमाचक्ष्महे। नतु तेन परमार्थसत्त्वम्। यतः पर्यन्ततस्तत्रापि बाधावतार एवेति भावः। सर्वथैवायमापेक्षिको विशेषो बुद्धिकृतो, न वास्तविक इति हृदयम्।

२ शब्दनित्यत्वे मीमांसकाभिमते नैयायिकस्य त्रिचतुरकक्षाबाधानवतारेऽपि क्रमबाध्यत्वस्वीकार इत्यर्थः। तथा च यथा कतिपयकक्षाबाध्याबाधविरहाधीनोऽभ्युपगमोऽभ्युपगम्यमानो वाऽर्थः सिद्धान्तः, तथा कारणत्वाकारणत्वव्यवस्थितिरपि तावतैव, न तु सर्वप्रकाराबाध्यतयेति भावः। सर्वप्रकाराबाध्यत्वनिबन्धनश्चेत् सिद्धान्तः, तदेक एव सिद्धान्तो भवेत् सर्वेषान्दर्शनानामिति भावः। न च सर्वबाध्यत्वेऽपि दर्शनभेदानुपपत्तिः। वेदान्तदर्शनस्य सर्वथाऽबाध्यत्वात्।

नियम इत्याह * न, यादृश्येति * । * केवलामिति * । वस्तुशून्य इत्यर्थः । प्रथमोत्पन्नप्रतीतेरसंजातविरोधितया प्राबल्यात्तद्बललभ्यसत्त्वमेव किं नाश्रीयते इत्यत्राह * तत इति * । निरपेक्षोत्तरप्रत्ययविरोधान्न सत्त्वमिति भावः । परपक्षात्स्वपक्षस्य विशेषं दर्शयतीति केचित् । त्रिचतुरकक्षासु यन्न बाध्यते तत्कालान्तरे न बाधिष्यत इति संभावनास्पदन्तत्राह *परेति*। महीषु भूमिपूपलब्धस्यापरसिद्धांतध्वांतस्यान्ययुक्तिबाध्यत्वेनासत्त्वमुपगम्यत इत्यर्थः। विपर्यये बाधमभिधत्ते * अन्यथेति * । प्रामाणिकः सिद्धांत इति नियमात्तत्तरदर्शनसिद्धांतः प्रतीतो ऽबाधितश्च यदि तदा सर्वं सर्वैः स्वीकार्या इति दर्शनभेदो न भवेदिति भावः ।

स्वपरपक्षयोरसत्त्वमविशिष्टं चेत् कथं कतिपयकक्षासु स्वपक्षो ऽबाधित आस्तामित्यत आह

५९ असत्त्वाविशेषे ऽपि पक्षाणां विशेषावधारणम् ]

एतेन "असत्त्वाविशेषात् कथं कस्यचित्पक्षस्य त्रिचतुरकक्षाबाधितत्वमास्तामित्यपि" निरस्तम् ।

---

१ (१) ननु रासभे घटप्राक्सत्त्वाज्ञानवद् दण्डेऽपि चेत् तद्बाध्यमेव, तदा त्रिचतुरकक्षाबाधितत्वाबाधितत्वलक्षणोऽपि विशेषो न भवत्येवेत्यत आह *एतेनेति*। शुक्तौ रजतत्वज्ञानस्य, शब्दे नित्यत्वज्ञानस्य च ऽबाध्यत्वाविशेषेऽपि त्वया ऽप्यतादृशस्यार्थनियमस्याभ्युपगमेनेत्यर्थः। (२) यद्वा–परकीयसर्वसिद्धान्तानां बाध्यत्वे बहुकक्षाबाधितत्वाबाधितत्वविशेषः किन्निबन्धन इत्यत आह *एतेनेति*। परसिद्धान्तस्थले रजतज्ञाने च त्वया ऽप्येतादृशस्य विशेषस्याभ्युपगमेनेत्यर्थः । (शा)

* एतेनेति *। व्यवहारविसंवादिबुद्धिकृतोऽसतो विशेष इत्युक्तन्यायेन निरस्तम्। यथा हि सत्त्वाविशेषेऽपि परस्य बुद्धिकृतं विशेषमुपादाय परपक्षस्य सतोऽपि निरासः स्वपक्षस्याबाध्यत्वेन स्वीकरणं तद्वदित्यर्थः।

इदमस्मान्नियतप्राक्सदिति बुद्धिगोचरत्वं कारणलक्षणत्वं चेत्तर्हि गिरिगुहादिगते बीजादौ नैवं बुद्धिविषयतेति कारणत्वं न स्यादित्यव्याप्तिं शंकते

८० नियतप्राक्सत्त्वबुद्ध्यभावस्थले तादृशबुद्धिविषयतैव शरणम्]

"अनेवंबुद्धिविषयतादशायां को विशेष" इति चेत्, यदा कदापि तादृशबुद्धिविषयतैव। अन्यथा कथय कथमन्यदातनतादृशबुद्धिविषयतया अन्यदा सत्त्वं स्यात्। "तदातनसत्त्वमन्यदार्थेन गृह्यत" इति चेत्, अन्यकालिकमेव तर्हि तत् तदातनकारणत्वोपयोगीति समानम्। तदेतत् संवृतिसत्त्वमितिगीयते।

* अनेवमिति *। नियतप्राक्सदिति बुद्धिविषयत्वमेवं बुद्धिविषयत्वम्, तदभावकाल इत्यर्थः। यथोत्पन्नक्षणे ऽव्याप्तिपरिहाराय गुणवत्त्वात्यन्ताभावानधिकरणमिति लक्षणमुच्यते द्रव्यस्य, तद्वदेवंबुद्धिविषयत्वात्यंताभावानधिकरणत्वं विशेष इति। परिहरति * यदा कदापीति *। उत्पन्ननष्टपुत्रस्यानुत्पन्नपुत्रस्य

१ यदा कदाचित्तादृशबुद्धेरतन्त्रत्वे तथापि-तादृशबुद्धिविरहदशायां प्राक्सत्त्वस्य वस्तुनः कथं सिद्धिरित्यर्थः। (शां)

चेदानीमपुत्रत्वे न विशेषस्तद्वदविद्यमानबुद्धिविषयत्वे न विशेषसंभव इत्याशंक्याह * अन्यथेति * । यदेवं बुद्धिर्नास्ति तदा पूर्वकालावच्छिन्नतया गृहीतं सत्वं तत्रापि कथं स्यादिति भावः । इदमस्मान्नियतप्रागासीदिति कालांतरस्थबुद्ध्या बुध्यमानत्वं कारणस्याकारणाद्विशेष इति शंकते *तदेति* । तर्हि कालान्तरे विशिष्टबुद्धिविषयीकृतमिति कालान्तरे गृह्यमाणत्वं कारणस्याकारणाद्विशेष इति तुल्यमिति परिहरति * अन्यकालिकमिति * । सांवृतं सत्त्वमसद्वादिभिर्व्यवहारोपपादकमिष्टम् तद्विरुद्धमिदमुच्यत इति तत्राह *तदिति* । संव्रियते ऽनयेति संवृतिरविद्याऽसत्प्रकाशनशक्तिरिति यावत् । तदुक्तम्

द्वे सत्वे समुपाश्रित्य बुद्धानां धर्मदेशना ।
लोके संवृतिसत्वं च सत्त्वं च परमार्थत इति ।

संवृतिस्सती न वा । न चेन्न विशिष्टव्यवहारप्रवर्तिका स्यात् । सती चेत् सर्वशून्यताहानिरित्याशंक्याह

६१ प्राक्सत्त्वबुद्धिविषये सत्त्वासत्त्वविचारः ]

"असती सा न विशेषिका सती सा नेष्टा"—इत्यभिसन्धानेन-"संवृतिरपि सती न वेति" पृच्छन्-प्रतिवक्तव्यः। ज्ञानं तावद्व्यवहारोपपादकतया द्वाभ्यामप्यनुमतम् तस्यापि जिज्ञासायां त्रिचतुरकक्षाविश्रान्तगवेषणस्य यदि सत्तापेक्षा भविष्यति, तदा सता तेनेदमुपपादितम्भाविष्यति ॥ अथासत्ता तस्य पर्यवसास्यति, तदा असतैव तेनेदमुपपा-

यत इति, स्वीकर्त्तव्यम्, भ्रमविषयेणैव भ्रमे विशिष्टताव्यवहारः।

* असतीति * । तदुक्तम्—
'संवृतेर्नन्तु सत्यत्वं सत्यभेदः कुतो न्वयम्।
सत्या चेत्संवृतिः केयं मृषा चेत्सत्यता कथम्।
सत्यत्वं न च सामान्यं मृषार्थपरमार्थयोः।
विरोधान्न हि वृक्षत्वं सामान्यं वृक्षसिंहयोरिति'।

तदिदं श्लोकद्वयमुवेकेन (?) व्याख्यातम्। न हि संवृतिपरमार्थयोः सत्यत्वं नाम सामान्यम्, एकत्र विरोधादपरत्र पौनरुक्त्यप्रसंगादिति। बाह्यार्थसत्त्वं योगाचारादेः समानमिति ते ऽप्यत्र पूर्वपक्षीकृता इति तदुदाहरणं कथं प्रतिवक्तुं शक्यः। असतो व्यावर्तकत्वादेस्तेनानंगीकारादित्यत आह *विज्ञानमिति* । घटज्ञानाद् घटव्यवहार इति सदसद्वादिनोः संमतमित्यर्थः। विमर्शनपूर्वकं विज्ञानस्य स्वरूपसत्त्वाव्यतिरेकेण व्यावर्तकत्वाद्युपपादयति *तस्येति* । कथमस्य स्वमिति जिज्ञासायां तिसृषु चतसृषु कक्षासु विश्रान्तगवेषणमन्वेषणं यस्येति विग्रहः। अनवस्थां परिहर्तुं त्रिचतुरकक्षाविश्रांत्यभ्युपगमे तदारभ्यामूलमसत्त्वापत्तेर्व्यतिरेकाभावात्तत्सत्तावगमस्यैव व्यवहारजनकत्वसम्भवान् न स्वरूपसत्ता विज्ञानस्येति भावः। मा भूत् स्वरूपसत्ता, ततः किमित्यत आह *अथेति*। 'पर्यवसास्यति' पर्य-

१ यथा ऽसदेव रजतं स्वविषयं ज्ञानं विशेषयति 'इदमस्मान्नियतमाक्सत्' इति बुद्धि विषयत्वमेव कारणत्वमित्यर्थः। ( शां )

वसिता भविष्यति, विचारेण तदा ऽसतैव तेन विज्ञानेनेदं व्यवहाराख्यं कार्यमुपपाद्यते इति कर्तव्यमित्यर्थः। विज्ञानमसत्, व्यवहारादिजनकत्वाच्छुक्तिरजतसंसर्गवदिति स्वपक्षपर्यवसानमाह *भ्रमेति*। शुक्तिरजतसंसर्गज्ञानमिति संसर्गः स्वज्ञानमितरज्ञानाद्व्यावर्तयति। संसर्गावच्छिन्नज्ञानस्य विशिष्टाभिवदनव्यवहारजनकत्वे विशेषणतया संसर्गो ऽपि व्यवहारहेतुरिति भावः।

ननु विचार्यमाणे विज्ञाने विज्ञानस्यासत्तापर्यवसास्यति चेत्तदा विषयपरतन्त्रत्वाद्वेदनस्य सुषुप्त्यादौ व्यभिचाराच्च न वस्तुत्वमित्ययमेव विचारो न सिद्ध्यति, विज्ञानभस्त्वमूलत्वादस्यापीत्याशंक्याह

६२ सदसत्त्वविचारं विनैव विचारस्य आरब्धव्यत्वम्।

अविचार्यैव तावत्तस्य सदसत्त्वं विचार आरब्धव्यः। अन्यथा प्रथममेव मतिकर्दमे कथारम्भणमशक्यमापद्येत। स्वीकृतञ्च भवताऽपि भविष्यदादिविषये विज्ञाने विशिष्टव्यवहारनिदानत्वमसतो विषयस्य। कारणशक्तेश्च विशेषकमसदेव कार्यम्।

* अविचार्यैवेति *। विपक्षबाधकेनैतद्द्रढयति *अन्यथेति*। सदसत्त्वनिर्णयाधीनश्चेद्विचारारंभः सोऽपि तदधीन इतीतरेतराश्रयात्प्रथमतो मतिकालुष्यपरिहाराय तदन्तरेणापि विचार्यतामित्यर्थः। सकृद्दर्शनमात्रस्य गोमयपायसीकरणसमत्वात् प्रदर्शिते असतो

व्यवहारजनकत्वे व्याप्तिग्रहणभूम्यन्तरमाह *स्वीकृतमिति*। भविष्यदाद्यर्थविशिष्टज्ञानस्य व्यवहारजनकत्वे तद्विशेषणत्वेनासतो ऽपि व्यवहारहेतुत्वं ज्ञानमात्रस्य तद्धेतुत्वे ऽतिप्रसंगात् स्वीकृतमित्यर्थः। भविष्यद्दादिविषये विज्ञाने सतो ऽपि विषयस्य विशिष्टज्ञानव्यवहारनिदानत्वं स्वीकृतमिति योजना। एवमसतो ऽव्यवहारजनकत्वे दृष्टान्तमभिधाय व्यावर्तकत्वे दृष्टान्तमाह * कारणेति * । यद्वा ऽविनाभावबलेन लिङ्गमेव व्यवहारजनकं नासदर्थविशिष्टं विज्ञानमित्याशंक्याह *कारणेति*। कस्य कस्मिन्निति शक्तेराश्रयविषयसापेक्षत्वात्तिलगतशक्तेरसदेव तैलं व्यावर्त्तकम्। नच भविष्यदाकारेण कार्यमिदानीमस्ति, भविष्यत्कालस्येदानीमसत्त्वेन तदवच्छिन्नरूपस्याप्यसत्त्वात्। न च शक्तिरेव नास्ति, करतलानलसंयोगे मंत्रादौ च सति स्फोटानुदयानुपपत्त्या सिद्धत्वात्। नच प्रतिकूलाभावरूपकारणाभावात्तदानीं विसामग्र्येवप्रतिबन्धः, सति पुष्कलकारणे कार्योत्पादविरोधिनः प्रतिबन्धत्वप्रसिद्धेः। अन्यथा कारणाभावमात्रं प्रतिबन्धः स्यात्। न चैवं प्रसिद्धिरस्ति, अभावस्य क्रियानाश्रयस्य कारणत्वानुपपत्तेश्चेति भावः।

ननु बुद्धिसाम्यार्थं दृष्टान्तो विधीयते, नात्र तत्साम्यं भवति, अतीतादेः कालान्तरे सत्त्वात् त्वदभिमतज्ञानस्य कदाचिदप्यसत्त्वात् दृष्टान्तदार्ष्टान्तिकयोर्वैषम्यादित्याशंक्याह

६३ विशिष्टव्यवहारसमये उभयोरपि दृष्टान्तदार्ष्टान्तिकयोरसत्त्वम्]

न च " कालान्तरसम्बन्धिनी सत्ता तस्यैकत्र[1], अन्यत्र नान्यदापीति वैधर्म्यमेतयोरपीति " वक्तव्यम्। विशिष्टव्यवहारप्रवृत्तिसमये द्वयोरप्यसत्त्वाविशेषात्। प्रयोजनानुपयुक्ते काले तस्य स्वरूपतो ऽवस्थानं पाटच्चरलुण्ठिते वेश्मनि यामिकजागरणवृत्तान्तमनुहरति।

*न चेति*। नियतप्राक्सत्त्वं कारणत्वोपयोगि, किं वा सत्त्वमात्रम्। यद्याद्यस्तदभावस्य समानत्वमुभयोरित्याह *विशिष्टेति*। न द्वितीयः, नियतप्राक्सत्त्वात् कारणत्वमिति प्रतिज्ञाहानान्नष्टघटेन मधुधारणप्रसंगाच्चेत्याह *प्रयोजनेति*। यामिको यामरक्षकः। पाटच्चरेण दरीचोरेण वेश्मन्यपहृतसर्वस्वे सति पूर्वापरकालयोर्यामिकस्य जागरणमिंद्रियक्लेशाय। तद्वत्कार्यकालात्पूर्वापरकालयोः स्वरूपतो ऽवस्थानमनुपयुक्तमित्यर्थः।

नन्वतीताद्यर्थस्य कालांतरस्थितिमात्रेणासाधारणपृथुबुध्नोदरत्वादिस्वभावतो घटत्वादिविशेषणतश्च व्यावृत्तत्वात् ज्ञानशक्त्यादेर्व्यावर्तकत्वेनोपादानं संभवतीति शंकते

---

१ 'तस्य एकस्य'=अतीतादे। 'एकत्र'=कालान्तरे। 'अन्यत्र'=ज्ञानविषयो। 'अन्यदा'=कालान्तरेऽपि।

२ दृष्टान्तदार्ष्टान्तिकयो।

३ भविष्यत्पुत्रादे घटादिकार्यस्य च।

[ १४ स्वभावविशेषणवत्त्वाभ्यां सदसतोर्भेदशङ्का ]

"तथाऽपि कालान्तरस्थिल्या घटादिकं स्वरूपतो विशेषणतश्च व्यवच्छिन्नं तद्विज्ञानेन स्वभावबलात्स्वविशेषणत्वेनोपादीयते । न त्वेवमत्यन्तासद्भवितुमर्हति, तस्य स्वरूपतो विशेषणतश्च व्यवच्छिन्नतया ऽनङ्गीकारात्कुत्र स्वभावतो विज्ञानं सम्बन्धि निरूप्येत" ।

* तथाऽपीति * । संयोगाद्यसंभवात् ज्ञानशक्त्यादेर्व्यावर्तकत्वं न संभवतीत्याशंक्याह *स्वभावेति* । स्वभावसम्बन्धो विषयविषयिभावस्तद्बलेनेति यावत् । असदपि तथा किं न स्यादित्यत आह * न त्विति * । व्यावृत्तस्वरूपत्वे विशेषणयोगे वासत्त्वव्याघातादित्यर्थः । नासंबद्धज्ञानमर्थव्यावहारजनकमतिप्रसंगात्, न च संबद्धम् संयोगाद्यनिरूपणात्, न च स्वभावसंबंधान्निःस्वभावत्वादित्यत्राह * कुत्रेति * । कुत इति पाठे केन स्वभावेनेत्यर्थः । असतोऽप्यसाधारणस्वभावो निषेधात्मकः सद्व्यावृत्तत्वन्नाम धर्मभेदश्च विद्यत इत्यति ।

१ ननु यस्यात्यन्तिकमसत्त्वं तस्य विशेषणत्वे विशेष्यत्वं वा न स्वीकुर्मः । भविष्यत्पुत्रादेः कार्यस्य च नात्यन्तिकमसत्त्वम्, स्वकाले तयोः सत्त्वादित्याह तथापीति । ( शां )

२ भविष्यदाद्यालम्बनमपि ज्ञानं शब्दलिङ्गमहिम्ना जायत इति तादृशो विशेषस्तद्विशिष्ट एवेत्यर्थः । ( शां )

३ विषयस्वरूपमपि त्वन्मते ऽत्यन्तासद्विशेषणम्, संवृतिरप्यत्यन्तासतीत्यर्थः । ( शा )

४ स्वभावतोऽपि ज्ञानमत्यन्तासद्विषयसम्बन्धि कथम्भवेत् । तथा च त्वन्मते ऽत्यन्तासतोर्ज्ञानविषययोर्न सर्वथाविशेषणविशेष्यभावः । ( शा )

असतो ऽपि स्वरूपं स्वरूपमेवेत्यादावुक्तमिति परिहरति

६५ शङ्कापरिहारः ]

न । उक्तमत्रासतोऽपि तदेव स्वरूपम् तस्य नियतस्वरूपतैव, नियतविशेषणस्यैवासत्त्वात् । अन्यथाऽतिप्रसङ्गात् भ्रान्तिविपर्येण दत्तोत्तरत्वाच्चेत्यलमतिविस्तारेण।

* नेति * । तदेवेति * । निषेधात्मकत्वं व्यावृत्तत्वधर्मत्वं चेत्यर्थः । असतो ऽसाधारणस्वभावे व्याघात उक्त इति तत्राह *अन्यथेति* । गगनकुसुमस्य साधारणस्वरूपापत्तेर्मूषकविषाणादेर्व्यावृत्तव्यवहारो न स्यात् सदसतोः सांकर्यं चस्यादित्यर्थः । यदुक्तमसतो निःस्वरूपत्वाद्विषयविषयिसंबंधानुपपत्तिस्तत्राह * भ्रांतीति * । भ्रांतिविपर्येणासता रूप्यादिना ज्ञानस्य विषयविषयिभावसंबंधस्य सद्रादिना ऽप्यंगीकारादसतः संबंधो नास्तीति न वक्तुं शक्यत इत्यर्थः ।

इति प्रमाणप्रमेयाद्यभावसिद्धिः [ शून्यवादमाश्रित्य ] ।

---

अथ विज्ञानवादमाश्रित्य ज्ञानभिन्नसफलपदार्थासत्त्वसाधनम् ।

एवं तावत्सर्वशून्यतांगीकारे ऽपि कारणतादिव्यवहारः संगच्छते, किं पुनर्ज्ञानमात्रस्य सत्त्वे, इति कैमुतिकन्यायमभिप्रेत्य विज्ञानं स्वयंप्रकाशं साधयति। निरूप्यमाणे तदद्वैतब्रह्म संपत्स्यत इत्याह

६६ विज्ञानस्य सत्त्वं स्वयम्प्रकाशता च ]

अपरे पुनश्चेतसोऽपि शून्यताङ्गीकारे मनः प्रत्ययमनासादयन्तः सर्वमिदमसदेव विश्वमित्यभिधातुं सहसैवानुत्सहमाना मन्यन्ते—विज्ञानं तावत् स्वप्रकाशं स्वत एव सिद्धस्वरूपम्। न खलु विज्ञाने सति जिज्ञासोरपि कस्यचिज्जानामि न वेति संशयः, न जानामीति वा विपर्ययो व्यतिरेकप्रमा वा। तेन जिज्ञासितस्यातत्त्वज्ञानव्यतिरेकप्रमाणामभावसमुदायः स्वव्यापकं जिज्ञासितस्य प्रमितत्वमानयति। अन्यथा हि जिज्ञासितप्रमितत्वव्यतिरेकव्यापकं जिज्ञासितव्यतिरेकोल्लेखि ज्ञानमविघ्नितजिज्ञासस्य स्यात्। अतः सर्वजनस्वात्मसंवेदनसिद्धं बोधस्य स्वरूपम्।

* अपरे पुनरित्यादिना *। चेतसो विज्ञानस्येति यावत्। मनःप्रत्ययस्तुष्टिः, तामनासादयन्तोऽलभमाना इत्यर्थः। ज्ञेयासत्त्वे तदुपरक्तरूपस्य क्षणिकविज्ञानस्यासत्त्वं स्वयमेव प्रतिपत्स्यत इत्यभिप्रेत्याह *सहसेति*। किं मन्यत इति तदाह * विज्ञानमिति *। स्वव्यवहारहेतुप्रकाशत्वं स्वयंप्रकाशत्वमिति ब्रह्मवादिनः संगिरन्ते। तद्भिन्न भवति योगाचारमते स्वयमेव प्रमात्वं प्रमेयत्वं चेति स्वप्रकाशशब्दार्थमाह * स्वतःसिद्धरूपमिति *। अप्रमितत्वस्य व्यापकाभावेन व्याप्याभावं दर्शयितुं व्यापकाभावमुपन्यस्यति * न खल्विति *।

पथि गच्छतस्तृणादावजिज्ञासिते विपर्ययाद्यभावो प्रमिते ऽपि दृष्टस्ततो व्यावर्तयति *जिज्ञासोरिति*। अतस्मिंस्तद्बुद्धिर्विपर्ययो ज्ञायमाने ऽर्थे नजानामीति विरुद्धानेकप्रकारावलम्बी प्रत्ययः। संशयो जानामि वा न वेति। योग्यानुपलब्धिजन्यं नास्तीति ज्ञानं व्यतिरेकप्रमा न जानाम्येवेति। जिज्ञासितत्वे सत्यप्रमितस्य संशयविपर्ययाभावप्रमाणामन्यतमाविषयत्वमावश्यकमित्यर्थः। जिज्ञासोर्विचारकस्यापि ज्ञाने संशयादिर्न जायते किमु लौकिकस्येत्यपि शब्दार्थः। ननु विज्ञाने सत्यभावप्रमाप्रसंग एव नास्ति, किमिदमुच्यते व्यतिरेकप्रमा वा न जायते इति। सत्यम्, सतो ऽप्रमितस्य जिज्ञासितस्य संशयविपर्ययान्यतरगोचरत्वं जिज्ञासितस्याप्रमितस्य त्रयाणामन्यतमाविषयत्वमिति विभागेन योजनीयत्वात् न कश्चिद्दोष इति। व्यापकाभावमभिधाय व्याप्याभावमाह * तेनेति *। अतत्त्वज्ञाने संशयविपर्ययौ, व्यतिरेकप्रमा, अभावप्रमा तासामभावसमुदायः स्वव्यापकमानयतीति सम्बन्धः॥ असमव्याप्तिकयोरन्वयव्याप्तिवैपरीत्येन व्यतिरेकव्याप्तिनियमात् व्यापकाभावस्य व्याप्याभावो व्यापकः। व्यापकस्वरूपमेव दर्शयति *जिज्ञासितस्येति*। आनयतीत्युक्तम्; आनयनमर्थाक्षेपः स चानुपपत्त्येति [1]तामाह *अन्यथेति*। जिज्ञासितस्य व्यतिरेको ऽभावस्तमुल्लिखतीति जिज्ञासितव्यतिरेकोल्लेखि ज्ञानं स्यादिति सम्बन्धः। व्यतिरेकोल्लेखीति संशयविपर्ययव्य-

---

१ अनुपपत्तिमित्यर्थः।

तिरेकज्ञानानि विवक्ष्यंते। जात्युपाधावेकवचनम्। हेतुगर्भं विशेषणमाह *जिज्ञासितेति*। जिज्ञासितप्रमितत्वस्य व्यतिरेकस्तस्य व्यापकमिति विग्रहः। यत्र जिज्ञासानन्तरं मनसो ऽन्यत्र व्यासंगेनाकस्मान्निद्राभिभवेन वा प्रतिवन्धो जायते, तत्र जिज्ञासितप्रमितत्वाभावस्य व्यापकजिज्ञासिताभावोल्लेखिज्ञानमपि न भवतीति सूचयति *विघ्नितेति*। अविघ्निता ऽप्रतिबद्धा जिज्ञासा यस्य ज्ञानस्य पुंसो वा तस्येति विग्रहः। अतोऽयमभावसमुदायो ऽर्थात्प्रमितत्वमाक्षिपतीति भावः। निगमयति *अत इति*। आत्मसंवेदनसिद्धं स्वरूपप्रकाशसिद्धं स्वप्रकाशमिति यावत्। अनुमानपक्षे ज्ञानं स्वसत्तायां प्रमितत्वाव्यतिरेकि, जिज्ञासितत्वे सति संशयाद्यविषयत्वात्, यत् यदा जिज्ञासितत्वे सति संशयाद्यविषयः तत्तदा प्रमितत्वाव्यतिरेकि, यथैतन्निर्णयविषयैतद्घट इति। अर्थापत्तिस्तु–व्यापकाभावसमुदायो व्याप्याभावमन्तरेणानुपपद्यमानस्तमाक्षिपतीति द्रष्टव्या।

प्रत्ययस्य स्वसत्तायां प्रमितत्वाव्यतिरेकित्वं स्वयंप्रकाशित्वमन्तरेणापि स्यादिति हेतोरन्यथासिद्धिमर्थापत्तेरन्यथोपपत्तिं शंकते

६७ ज्ञानस्वप्रकाशतासाधके हेतावन्यथासिद्ध्यादिदोषपरिहार ]

"व्यवसायस्यानुव्यवसायनियमान्न तत्र संशयादि"[1]

---

१ अनुव्यवसायेन व्यवसायस्य प्रतीतत्वान्न तत्र संशयविपर्ययव्यतिरेकप्रमा इत्यर्थः ( शां )

इति चेन्न। यत्रैवानुव्यवसाये ज्ञेयता नोपेया तत्र जिज्ञासायामात्मधर्मिकं तत्संशयमारभ्य व्यवसायविषयपर्यन्तं संशयाक्रान्तेर्दुष्परिहरत्वात्। विषयिसद्भावसंशये च तद्विषयेऽपि संशयस्य सम्भवात्।

* व्यवसायेति *। अर्थनिश्चयोत्पत्तिमनु तद्गोचरनिश्चयोत्पत्तिनियमात्तत एवार्थज्ञानप्रकाशोपपत्तेरित्यर्थः। तदनुव्यवसायज्ञानं स्वयंप्रकाशमानमर्थज्ञानं साधयति, सत्तया [2]वा। न तावत्सत्तयेत्याह *नेति*। अस्त्यनुव्यवसाय इति नैयायिकाः। नास्तीति बौद्धाः। एवं विप्रतिपत्तौ विचारकस्य जिज्ञासायां सत्यां यत्रैवानुव्यवसाये ज्ञेयता न स्वीक्रियते तत्र संशयः स्यात्—अनुव्यवसायोऽस्ति न वेति। ननु "धर्मिणि सामान्यप्रतिपन्ने संशयो दृष्टः—स्थाणुर्वा पुरुषो वेति। कोऽत्र धर्मी। न तावदनुव्यवसायः, धर्मित्वेनास्तित्व-

---

१ (१) अनुव्यवसायानन्तरम्, 'अहन्तृतीयज्ञानवान्न वा' 'अहं ज्ञानविषयतृतीयज्ञानवान्न वा' 'अहं ज्ञातघटज्ञानो न वा'-इत्यात्मधर्मिकसंशयमुपक्रम्य विषयपर्यन्तं संशय. स्यात्। न चैतादृशी संशयधारा ऽनुभूयते। तन्नून स्वयम्प्रकाशमेव ज्ञानमित्यर्थः। (२) यद्वा 'घटज्ञानजिज्ञासावानयञ्चैत्रो यदि ज्ञातघटज्ञानो न स्यात् प्रमिततद्विरहः स्यात्'-एवन्तृतीयादिज्ञानपरम्परापूरणेन तत्तद्विरहमभामापाद्यार्थापत्त्या स्वप्रकाशता साधनीयेत्यर्थ॰॥ यद्यप्यनुव्यवसाये सति न तत्र जिज्ञासा, ज्ञानधारया विच्छेदात्, नोत्तरकालीना (जिज्ञासा) विषयाभावात्, तथाऽप्यनुपसंजातविरोधितया पूर्वजिज्ञाया एव तथा सामर्थ्यमभिप्रेतम् (शां)।

२ ज्ञानं स्वप्रकाशतया ऽथ वा स्वसत्तया ऽर्थज्ञानं साधयतीति सन्देहः।

निश्चये भावाभावसन्देहानुपपत्तेः" इत्यत आह *आत्मधर्मिकमिति * । ममानुव्यवसायो ऽस्ति न वेति सामान्यप्रतिपन्न आत्मनि अनुव्यवसायभावाभावविशिष्टत्वकोटिद्वयविषयः संशय इत्यर्थः । नन्वनुव्यवसायसंशये ऽपि न व्यवसायनविषयः संशयः स्यादनुव्यवसायव्यवसायाभ्यामेव तयोः प्रमितत्वादित्याशंक्याह * विषयीति * । विषयिसिद्ध्यधीनत्वाद्विषयसिद्धेरित्यर्थः ।

यदि प्रकाशमानं साधकं, परतः स्वतो वा। परतः प्रकाशे ऽपि त्रिचतुरकक्षाविश्रान्तिरस्त्युत नेति विकल्प्य प्रथमविकल्पस्याद्यविकल्पं दूषयति

६७ ज्ञानस्य स्वप्रकाशत्वे दोषाभावः, विपक्ष दोषसम्भवः ]

एवं त्रिचतुरसंवेदनकक्षाज्ञानध्रौव्यनियमाभ्युपगमेऽपीति । [1]स्वयंप्रकाशे तु मानमेयव्यवस्थाया अभावादेव तदाश्रया दोषा निरवकाशाः। अन्यथा तु बोधस्वरूपमेव न सिद्ध्येत्। यदि हि विज्ञानं परतः सिद्ध्येत्तदा ऽनवस्था स्यात् ।

---

१ ननु स्वप्रकाशनये तदेव ज्ञान कर्म स्यात् क्रिया च । न चैवं सम्भवति, क्रियाकर्मणोर्भेदगर्भत्वात् । कथं वा ऽत्यन्तमभिन्नतया विषयविषयिभावः । इत्यत आह स्वयम्प्रकाशे त्विति । यदि भिन्नयोः क्रियाकर्मभावो विषयविषयिभावो वा क्वचिन्मया ऽङ्गीक्रियेत उपपन्नो वा स्यात् तदा विरोधो भवेत् । नत्वेवम् । स्वप्रकाशज्ञानातिरिक्तवस्तुनो मया योगाचारलयनगरप्रवेशादेवानभ्युपगमादित्यर्थः ॥ ( २ ) यद्वा—ननु ज्ञानप्रामाण्यसंशयाधीनः संशयस्तत्रापि विषयपर्यन्तः—इत्यत आह स्वयम्प्रकाशे त्विति । ( शा )

*एवमिति*। यस्यां कक्षायां विश्रान्तिः तस्याः सन्देहे पूर्वपूर्वसन्देहादर्थपर्यन्तं सन्देहाक्रान्तिः साध्यधूमसन्देहवदित्यर्थः। नियमाभ्युपगमे ऽप्येवं विषयपर्यन्तसंशयाक्रान्तिरिति सम्बन्धः। स्वप्रकाशे ऽपि यत्प्रमाणं त्वयोच्यते तस्य प्रमाणान्तरेण सद्भावानिश्चये संशयः स्यात्। तथा स्वप्रकाशप्रमाणस्यानुभवो विषयो न वा। आद्ये व्याघातः। अंत्ये कथं तस्य स्वप्रकाशत्वं साधयेत्-इत्यादि दोषास्तवापि प्रसज्येरन्नित्याशंकां निराकुर्वन् द्वितीयपक्षः परिशिष्यत इत्याह *स्वयमिति*। मानमेयभावाभावान्न कर्मकर्तृविरोधः। अविषयत्वेनापि प्रकाशमानत्वान्न संशयाक्रान्तिरित्यर्थः। इदं तु ब्रह्मवाद्यभिमतं स्वयंप्रकाशत्वमभिहितमत्रैवात्मनो ऽभिप्रायं प्रकटयितुमिति न विरोधः। स्वतःसिद्ध्यनभ्युपगमेन ज्ञानान्तरतः सिद्धिः प्रकाशस्य सजातीयप्रकाशाविषयत्वात्। अतः सकलव्यवहारलोपप्रसंग इत्याह *अन्यथेति*। परतः सिद्धिपक्षे त्रिचतुरकक्षाविश्रान्तिर्नेति परिशिष्टकल्पेऽनवस्थादोषमाह * यदीति *।

निलीनमेव ज्ञानं चक्षुरादिवदर्थव्यवहारकारणमतो वित्त्यन्तरावश्यंभावानभ्युपगमान्नानवस्थेत्याशंकां निरस्तामपि दूषणान्तराभिधित्सयोद्भाव्य पराकरोति

[ ६८ परतः सिद्धिपक्षे प्रकारान्तरेणानवस्थोद्भावनम् ]

न च वाच्यम्—"अवश्यवेद्यता वित्तेर्नाभ्युपेयते। स्वार्थो व्यवहारस्तु स्वरूपसत्तया प्रसूयत इति क्वानव-

स्था"—इति। यतस्तस्यां प्रमाणानुपन्यासे स्वरूपसत्ताऽपि कुतः यया व्यवहारोपपत्तिः। को ब्रूते सती सा वित्तिः, असत्येव न कुतः।

*न चेति*। क्वानवस्थेति च न वाच्यमिति संबन्धः। वित्तेरप्रकाशत्वे कुतस्तदर्थव्यवहार इत्यत आह *स्वार्थ इति*। प्रसूयते प्रवर्त्यत इत्यर्थः। फलितमाह *क्वेति*। ज्ञप्तावुत्पत्तौ वा। न तावत् ज्ञप्तौ, ज्ञप्त्यन्तरानवश्यम्भावात्। नोत्पत्तौ, वेद्यत्वस्य व्यभिचारादित्यर्थः। कुतो न वाच्यमित्यत आह *यत इति*। यदस्ति तन्मेयमिति नियमात्परेषामित्यर्थः। मानाभावमात्रेण न ज्ञानस्य सत्ताभावः, तयोरन्यत्वादित्याशंक्याह *क इति*। देवदत्तनिष्ठज्ञानमसद्भवितुमर्हति प्रमाणेनानुपलभ्यमानत्वाच्छशशृङ्गवदिति भावः।

सामान्यविशेषाभ्यां प्रमाणत एवोपलब्धेरसिद्धो हेतुरिति शंकते

६६ ज्ञानस्य स्वरूपासत्त्वे हेतोरसिद्धिशङ्का, तन्निरासश्च]

"सामान्यतो वित्तेस्तथात्वविवक्षयापेक्षितासिद्धा यत्र विशेषरूपायां प्रमाणाप्रवृत्तिः तदा तत्र सत्त्वसाधना-

१ ज्ञानस्य स्वरूपसत्त्वे ऽपि को ऽनुभवः प्रमाणमितिभावः।

२ व्यवहारमात्रात्तावद्विषयज्ञानमात्रं सिद्धमेव। घटादिप्रतिनियतविषयकज्ञानजिज्ञासा तु यदि स्यात् तदा प्रतिनियतविषयकव्यवहारेण वा प्रतिनियतविषयस्मरणादिना वा, तदप्यनुमास्यत इत्याशङ्कते सामान्यत इति। जानामीति सामान्याकारेणापेक्षितस्य वित्तिविशेषासिद्धावपि घटज्ञानत्वादिना जिज्ञासाया वित्तिविशेषसिद्धिरिति वा ऽर्थ (शङ्कायाः)। (शां)

सत्त्वे ऽपि जिज्ञासायां सत्यां पश्चाद्व्यवहारसत्त्वेव वा अन्यद्वा प्रमाणमस्त्येवेति" चेन्न । तस्यापि सत्त्वं कथमित्यनवस्था स्यात्, शेषासिद्ध्या सर्वासिद्धिर्वा, प्रसज्येत-इत्यर्थासिद्धिपर्यन्तस्य व्यसनस्य दुरुत्तरत्वात्। सेयम् 'अप्रत्यक्षोपलम्भस्य नार्थदृष्टिः प्रसिद्ध्यति' इति ।

*** सामान्यत इति *। वित्तेर्ज्ञानस्य तथात्वविधौ ज्ञानत्वसिद्धावहंज्ञानवानस्मीति प्रतीतौ सत्यामपेक्षितस्य सामान्यतः सत्त्वस्य सिद्ध्या तत्र विशेषरूपायां व्यवहारसत्त्वेव प्रमाणम्, अन्यद्वा स्मरणादिलिङ्गमस्त्येवेति सम्बन्धः। तामेव विशेषरूपां वित्तिं दर्शयति * यत्रेति *। यत्र विशेषरूपायां प्रमाणाप्रवृत्तिस्तदा व्यवहारप्रसूतिसमये विशेषरूपसत्त्वसाधनासत्त्वेऽपि**

---

१ मा भूद्विज्ञानपरम्परायास्तदानीमेव सिद्धिः, किमेतावता, त्रिचतुरज्ञानासिद्ध्यैव तद्विषयसिद्धेरित्यत आह शेषेति । यद्यपि सर्वासिद्धिप्रसञ्जनमनुपपन्नम्, यत्पक्षीकृत्यासिद्धिसपाद्या तत्सिद्धौ बाधः तदसिद्धावाश्रयासिद्धिः, शेषासिद्धेश्चापादकत्वेनाभिमताया असिद्धिः, 'शेषस्य चरमज्ञानस्यासिद्धौ तत्पूर्वज्ञानस्यासिद्धिः' इति विशिष्टापादनं त्वद्वचनादेव तयोः (ज्ञानयोः) तदैव सिद्धौ सुतरामापाद्यापादकयोरसिद्धिः,—तथा ऽप्यनवस्थायामेव हृदयम् । ( शा )

२ यस्य मते उपलम्भो न प्रत्यक्षः ( न स्वसंवेद्य इत्यर्थः ) तस्य मते ' न अर्थदृष्टि ' ज्ञानमात्रमेव न सिध्यतीति ॥ - यद्यपि प्राकट्यानुमेयज्ञानं भट्टम्प्रति नैयायिकानामप्ययमुपालम्भः, तथा ऽपि स्वप्रकाशानभ्युपगमे ऽप्युक्तदोषबलेनोपालम्भः सम एवेति भावः । ( शा )

कुतश्चिन्निमित्तात्तज्जिज्ञासायां सत्याम्। 'पश्चात्' तदुत्तरकालमित्यर्थः। एतदुक्तं भवति—ज्ञानसमवायवानहमस्मीति ज्ञानमात्रसिद्धया घटादिविषयो व्यवहारः सिध्यति, तदा घटज्ञानमिति विशेषरूपे यद्यपि प्रमाणं नास्ति तथाऽपि सामान्यंविशेषमनादाय न पर्यवस्यतीति विशेषजिज्ञासायामसाधारणव्यवहारानुपपत्त्या विशेषविज्ञानं गमयति तज्जन्यासाधारणस्मरणं चेति।

अपरे पुनरेवं योजयन्ति—प्रमाणानुपन्यासे सत्त्वासिद्धिर्मा भूत्। तथाऽपि सामग्रीसम्पत्तौ वित्तिर्जायते इत्युभयसम्प्रतिपन्नम्। ततः सत्त्वासत्त्वसाधारणाया वित्तेः सकाशादर्थनिश्चयेऽपेक्षितस्य व्यवहारस्य सिद्धय। नाग्रे सत्त्वसिद्धिरिष्यते इति। विशेषः कुतस्तर्हि सत्त्वसिद्धिरित्याशङ्क्याह *यत्रेति* यत्र सत्तारूपायां वित्तौ प्रथमक्षणे प्रमाणाप्रवृत्तिर्नासीत्तत्र सत्त्वसाधनस्यासत्त्वे ऽपि यदि जिज्ञासा जायते तदा प्रमाणमुपन्यस्यते इत्यर्थः। इति सामान्यविशेषाकारयोर्यत्प्रमाणं त्वया ऽवाचि तस्य सत्त्वं परतः सिद्धं स्वतो वा? न तावत् स्वतः, अनिष्टत्वात्। नापि परतः, अविच्छिन्नपरम्पराभ्युपगमे ऽनवस्थानादिति परिहरति * नेति *। क्वचिद्विच्छेदे तदारभ्यामूलमसिद्धिरित्याह * शेषेति *। सो ऽयमर्थो धर्मकीर्तिनाऽप्युक्त इत्याह * प्रत्यक्षेति *। स्वतो ऽपरोक्ष उपलंभो नेष्यते येन वादिना तस्य घटो मया विदित इति व्यवहारो न सिध्यतीत्यभिप्रायः।

प्रमाणसत्ता प्रमाणान्तरमूलेत्यनुमातुमन्वयव्याप्तिमाह

६७ उक्तानवस्थासर्घासिद्ध्योरुपपादनम् ]

घटसत्तां हि व्यवहरता प्रामाणिकेन तत्र प्रमाणसद्भावो वाच्यः। यदि प्रमाणमनुपन्यस्य साऽस्तीत्यङ्गीक्रियते तदा वैपरीत्यमेव किन्न स्यात्। ततश्च घटसत्तायां प्रमाणसत्ता दर्शनीया। तथा च प्रमाणसत्ताऽपि तत्प्रमाणसत्तामन्तरेण न प्रामाणिकस्याङ्गीकारार्हा सर्वप्रमाणसत्तानिवृत्तेर्वस्तुसत्ता निवृत्तिनियतत्वात्[1]; अन्यथा[2] सप्तमरसादेरप्यापत्तेः, इति व्यक्तमनवस्थादौस्थ्यमस्वप्रकाशवादिनः स्यात्। यदि हि विनैव प्रमाणसत्तां प्रमाणसत्तां परोऽङ्गीकार्येत तदा घटसत्तामपि तथैवाङ्गीकार्यतामिति घटेऽपि वृथा प्रमाणोपन्यासायासः।

* घटेति *। प्रमाणमनुपन्यस्य सन् घट इति व्यवह्रियते त्वया यथा तद्वन्ममापि स्यादिति तत्राह *प्रामाणिकेनेति*। एतदेव व्यतिरेकमुखेनोपपादयति * यदीति *। ततश्च सत्त्वाभ्युपगमः प्रमाणमूलइतिव्याप्तिरस्खलितेत्याह * ततश्चेति *। प्रमाणसत्त्वं प्रमाणा-

१ यद्यपि कदाचित् सर्वप्रमाणनिवृत्त्या न प्रमेयनिवृत्तिः तथा ऽपि सार्वदिकसर्वप्रमाणनिवृत्त्यभिप्रायमेतत्। यद्यपि सर्वप्रमाणनिवृत्तिर्दुर्ग्रहा तथा ऽपि प्रमाणान्तरन्त्वयैवोपपादनीयमिति भावः (शां)।

२ यदि प्रमाणनिवृत्तौ न प्रमेयनिवृत्तिरित्यर्थः।

न्तराधीनम्, सत्त्वशब्दवाच्यत्वात्, घटसत्त्ववदिति प्रयोगमाह * तथा चेति * । न च प्रमेयसत्त्वमुपाधिः, सत्त्वमात्रस्य प्रयोजकत्वे प्रमेयेति विशेषणस्य पक्षेतरत्वापादकत्वेन वैयर्थ्यादिति भावः । प्रमाणसत्त्वस्य प्रमाणान्तरनिबन्धत्वानङ्गीकारे विपक्षबाधकाभावाद् प्रयोजक इत्याशंक्याह *सर्वेति* । यन्न केनापि प्रमाणेनोपलभ्यते तदसदिति गगनकुसुमादौ व्याप्तिरस्ति स्वरूपश्च इति योजनीयम् । अन्यथा तत्र व्याप्तिप्रमित्यप्रमित्योर्व्याघातादप्रमेयस्यापि ब्रह्मणः सत्त्वस्वीकारात्प्रमाणनिवृत्तिसत्त्वनिवृत्त्योर्नास्ति व्याप्तिरित्याशंक्याह *अन्यथेति*। असंदिग्धाविपरीतानवगतप्रतीतेरेव प्रमाणत्वेन विवक्षितत्वादागमगम्ये ब्रह्मणि न व्यभिचार इत्यर्थः । एतावता कथमनवस्थेत्याशंक्योपसंहारव्याजेनाह *इति व्यक्तमिति* । प्रमाणसत्तामंतरेण कथारम्भस्वीकारवत्प्रमाणसत्तास्वीकारो ऽपि किन्न स्यादित्याशंक्याह * यदीति * । प्रमाणसत्तां विनैव परः प्रतिवादी प्रमाणसत्तामंगीकार्यतेति सम्बन्धः ।

ननु धारावाहिकप्रत्ययन्यायेन विचितद्वित्तिधारा विच्छिन्ना यद्यभ्युपगम्येत तर्हि स्यादनवस्था । तत्तज्जिज्ञासायां कदाचित्प्रमीयत इति स्वीकारात् नानवस्थेत्याशंकते

इन्द्रज्ञातानान्धारावाहिकत्वास्वीकारेऽप्यनवस्थादुष्परिहरा, विषयसत्तावगाहिन्या वित्तेरसमत्प्रत्यक्षागोचरत्वात् ]

अथ "नाव्यवधानलग्नविचितद्वित्तिधाराभ्युपगम्यते,

१ येन विषयान्तरसञ्चारो न स्यादित्याशयः ।

प्रमाणसत्ता प्रमाणान्तरमूलेत्यनुमातुमव्ययन्या- प्तिमाह

[ ६७ उक्तानवस्थासर्वासिद्ध्योरुपपादनम् ]

घटसत्तां हि व्यवहरता प्रामाणिकेन तत्र प्रमाणसद्भावो वाच्यः। यदि प्रमाणमनुपन्यस्य साऽस्तीत्यङ्गीक्रियते तदा वैपरीत्यमेव किन्न स्यात्। ततश्च घटसत्तायां प्रमाणसत्ता दर्शनीया। तथा च प्रमाणसत्ताऽपि तत्प्रमाणसत्तामन्तरेण न प्रामाणिकस्याङ्गीकारार्हा सर्वप्रमाणसत्तानिवृत्तेर्वस्तुसत्ता निवृत्तिनियतत्वात्; अन्यथा सप्तमरसादेरप्यापत्तेः, इति व्यक्तमनवस्थादौस्थ्यमस्वप्रकाशवादिनः स्यात्। यदि हि विनैव प्रमाणसत्तां प्रमाणसत्तां परोऽङ्गीकार्येत तदा घटसत्तामपि तथैवाङ्गीकार्यतामिति घटेऽपि वृथा प्रमाणोपन्यासायासः।

* घटेति *। प्रमाणमनुपन्यस्य सन् घट इति व्यवह्रियते त्वया यथा तद्वन्ममापि स्यादिति तत्राह *प्रामाणिकेनेति*। एतदेव व्यतिरेकमुखेनोपपादयति * यदीति *। ततश्च सत्त्वाभ्युपगमःप्रमाणमूलइतिव्याप्तिरस्खलितेत्याह * ततश्चेति *। प्रमाणसत्त्वं प्रमाणा-

१ यद्यपि कदाचित् सर्वप्रमाणनिवृत्त्या न प्रमेयनिवृत्तिः तथा ऽपि सार्वदिकसर्वप्रमाणनिवृत्त्यभिप्रायमेतत्। यद्यपि सर्वप्रमाणनिवृत्तिर्दुर्ग्रहा तथा ऽपि प्रमाणान्तरस्तथैवोपपादनीयमिति भावः ( शां )।

२ यदि प्रमाणनिवृत्तौ न प्रमेयनिवृत्तिरित्यर्थः।

न्तराधीनम्, सत्त्वशब्दवाच्यत्वात्, घटसत्त्ववदिति प्रयोगमाह * तथा चेति * । न च प्रमेयसत्त्वमुपाधिः, सत्त्वमात्रस्य प्रयोजकत्वे प्रमेयेति विशेषणस्य पक्षेत-रत्वापादकत्वेन वैयर्थ्यादिति भावः । प्रमाणसत्त्वस्य प्रमाणान्तरानिबन्धनत्वानङ्गीकारे विपक्षबाधकाभावाद-प्रयोजक इत्याशंक्याह *सर्वेति* । यन्न केनापि प्रमा-णेनोपलभ्यते तदसदिति गगनकुसुमादौ व्याप्तिरस्ति स्वपक्ष इति योजनीयम् । अन्यथा तत्र व्याप्तिप्रमित्य-प्रमित्योर्व्याघातादप्रमेयस्यापि ब्रह्मणः सत्त्वस्वीकारा-त्प्रमाणनिवृत्तिसत्त्वनिवृत्त्योर्नास्ति व्याप्तिरित्याशंक्याह *अन्यथेति*। असंदिग्धाविपरीतानवगतप्रतीतेरेव प्र-माणत्वेन विवक्षितत्वादागमगम्ये ब्रह्मणि न व्यभिचार इत्यर्थः । एतावता कथमनवस्थेत्याशंक्योपसंहारव्या-जेनाह *इति व्यक्तमिति* । प्रमाणसत्तामंतरेण कथा-रम्भस्वीकारवत्प्रमाणसत्तास्वीकारोऽपि किन्न स्या-दित्याशंक्याह * यदीति * । प्रमाणसत्तां विनैव परः प्रतिवादी प्रमाणसत्तामंगीकार्यतेति सम्बन्धः ।

ननु धारावाहिकप्रत्ययन्यायेन वित्तितद्वित्तिधारा विच्छिन्ना यद्यभ्युपगम्येत तर्हि स्यादनवस्था । तत्त-ज्जिज्ञासायां कदाचित्प्रमीयत इति स्वीकारात् नान-वस्थेत्याशंकते

६८ज्ञानानान्धारावाहिकत्वास्वीकारेऽप्यनवस्थाकुष्परिहरा, वि-षयधतापगाहिन्या वित्तेरस्मत्प्रत्यक्षागोचरत्वात् ]

अथ "नाव्यवधानलग्नवित्तितद्वित्तिधाराभ्युपगम्यते,

१ येन विषयान्तरसञ्चारो न स्यादित्याशयः ।

किन्नाम कदाचित् कुतश्चित् काचिद् वित्तिः प्रमीयते, इति सर्वा वित्तिः प्रमाणसिद्धैवेत्यभ्युपेयते''—इति चेन्न। स्यादप्येवं यदि घट इति घटं जानामीत्यतोऽधिका घटवित्तद्वित्तिधारया विषयभावेन प्रविष्टया तादृग्विषयशतभारमन्थरा वित्तिरस्मदादेरुत्पद्यमानाऽनुभूयेत।

* अथेति *। वित्तितद्वित्त्योर्धारा चासावव्यवधानेन लग्ना चेति विग्रहः। कथं तर्हि वित्तीनां सत्त्वसिद्धिरित्यत आह * कदा चिदिति *। जिज्ञासायां सत्यां व्यवहारदर्शनादेः का चिद्वित्तिः प्रमीयते। तस्यां प्रमीयमाणायां वित्तित्वसामान्यालिंगिततया सामान्यप्रत्यासत्त्या ऽनुमानतो वा सर्वा वित्तिः प्रमाणसिद्धेत्यर्थः। न तावदत्रानुमानादिकं मानम्, लिंगाद्यदर्शनात्। प्रत्यक्षमपि किमस्मदादेर्योगिनो वा। न तावदाद्यः उपलंभविरोधादिति परिहरति * नेति *। घट इति घटं जानामीति घटतज्ज्ञानविषयात् ज्ञानद्वयादतोऽधिकमस्मदादेरुत्पद्यमानमनुभूयेत यदि तर्ह्येवमपि स्यादिति सम्बन्धः। तामेव विशिनष्टि * तादृग्विषयस्येति *। तादृशां विच्छिद्य जायमानविषयाणां शतम्,

१ यद्यपि शतमपि वित्तयो वित्तित्वेन, घटश्च विषयो घटत्वेन, भासते इति 'घटञ्जानामि' 'घटज्ञानञ्जानामि' इत्यनेनैवाकारेण क्रमेणापि वित्तिशतवेदनं सम्भाव्यते इति न विषयशतभारमन्थरत्वम्,—नहि तावतीषु वित्तिषु प्रकारवैचित्र्यमस्ति येन तदुल्लेखध्रौव्येणानुभवविरोधः स्यात्,—तथाऽपि 'कालान्तरीयस्य घटज्ञानज्ञानस्याहमिति ज्ञानस्य कालान्तरीयचरमवित्तिरपि विषय.' इत्यत्र न प्रमाणमिति हृदयम्। ( शा )

था च तन्निष्ठासहावस्थाने विरोधावधारण एवार्थापत्तिविषयस्य बहिःसत्त्वस्य सिद्धेः सामान्यप्रमाणस्य तद्विरुद्धार्थविशेषप्रमाणदर्शनरूपार्थापत्तिरनुवादत्वेनाप्रमाणं स्यादित्यर्थः । एतेनानुपपद्यमानदर्शनादुपपादके बुद्धिरर्थापत्तिरिति निरस्तमनुपपत्तिविषयस्यानुपपद्यमानत्वादनुपपत्तेश्च दुर्निरूपत्वादिति ।

इत्यर्थापत्तिखण्डनम् ।

---

भट्टाभिमतषष्ठप्रमाणखण्डनमुपक्रमते ।

५७५ अनुपलब्धिप्रमाणखण्डनम् ।

योग्यानुपलम्भोऽभावप्रमाकरणमित्यप्ययुक्तम् । प्रमाणाभावस्य तथात्वे विभ्रमानुदयप्रसङ्गात् । उपलम्भाभावमात्रस्य तथात्वे शङ्खधवलिमप्रतिसन्धानवतः पीतभ्रमानुदयप्रसङ्गात् । कालभेदात्तत्राविरोध इति चेन्न । तथाऽपि संसृष्टयोरन्योन्याभावाग्रहणप्रसङ्गात् । तादात्म्यस्य स्वरूपमात्राऽनतिरेकात् । अभावस्फुरणे च तत्प्रतिभानस्य ध्रौव्यात् ।

* योग्येति * योग्यत्वे सत्यनुपलम्भोऽभावप्रमाकरणमित्याहुर्योग्यत्वं च प्रतियोगितदिन्द्रियसन्निकर्षातिरिक्तप्रतियोगिप्रमापकबाह्येन्द्रियमनःसमा-

१ प्रमाभावस्येति का० मु० पु० पा० ।
२ प्रमानुदयेति का० मु० पु० पा० ।

धानादिदृष्टसामग्रीसम्पत्तिस्तस्यां सत्यां प्रतियोग्यनुपलम्भः तदभावप्रमां कुर्वन्नभावप्रमाणमुच्यते यथा भूतले घटो नास्तीति । अयोग्यभूतलत्रसलिलानुपलम्भनिरासायाह * योग्येति * योग्यस्योपलम्भनिरासायानुपलम्भेति । किमनुपलम्भशब्देन प्रमाणाभावो विवक्षित उत ज्ञानमात्राभाव इति विकल्प्य प्रथमं पराचष्टे * प्रमेति * तथात्वे-अभावप्रमाकरणत्वे इत्यर्थः । शुक्तौ योग्यत्वे सति रजतविषयप्रमाणाभावस्य तदभावप्रमाकरणस्य सत्वेन नेदं रजतमिति तदभावप्रमैव स्यान्न त्विदं रजतमितिभ्रम इत्यर्थः । न च तदा गुणाभावेन करणस्य दोषप्रतिहतशक्तित्वेन वा प्रतियोगिप्रमापकसाकल्यं योग्यत्वमेव नास्तीति वाच्यम् । स्वतः प्रामाण्यपक्षे गुणस्य प्रमाऽकरणत्वाद्दोषस्य करणगतज्ञानजननशक्त्यभिघातकत्वे वा भ्रमज्ञानस्याप्यनुदयादत एव प्रामाण्यस्य स्वतस्त्वं ज्ञानहेतुमात्राधीनत्वमाहुः । अस्तु तर्हि द्वितीयस्तत्र रजतप्रामाण्याभावेऽपि तत्ज्ञानमात्रसम्भवेन भ्रमोपपत्तेरित्यत आह *उपेति* पूर्वानुभूतधवलिमानं स्मरतस्तद्विरोधात्पीतज्ञानमेव नास्ति युगपज्ज्ञानानुत्पत्तेर्मनसो लिङ्गत्वादतः पीतिमोपलम्भाभावस्य तदभावप्रमाकरणस्य विद्यमानतया तदभावप्रमैव स्यान्न तु पीतः शङ्ख इति विभ्रम उक्तदोषवत्ताऽपीत्यर्थः । शङ्खश्वैत्यस्मरणकाले पीतानुपलम्भेऽपि तदुत्तरकाले पीतोपलम्भसम्भवेन तद्भ्रमोत्पादाविरोध इति शङ्कते * कालेति * प्राक्काले तदभावप्रमाकरण-

पादकल्पे तदभावप्रमोत्पत्तेरेव तदुपलम्भो ऽसम्भवी-
ति परिहरति *नेति* अङ्गीकृत्यापि दूषयति *तथा-
पीति* संसृष्टयोर्गिरितर्वोर्नायं गिरिस्तरुरिति इतरेतरा-
भावग्रहणं तस्य तत्प्रतियोगितादात्म्यस्य तदोपलम्भेन
तदभावप्रमाकरणानुपलम्भाभावादिति भावः। गिरित-
रुस्वरूपप्रतिभानेऽपि तत्सम्बन्धस्तादात्म्यं न भातीति
तदभावप्रमा किन्न स्यादित्यत आह * तदेति * अ-
न्योन्याभावे तत्स्वरूपमेव प्रतियोगित्वन्न संसृष्टस्य सं-
सर्गस्य वा तथा सति संसर्गाभावादितरेतराभाव-
स्य भेदाभावप्रसङ्गादतस्तादात्म्यं प्रतियोगिस्वरूपमे-
वेत्यर्थः। तादात्म्यस्य स्वरूपमात्रं वा कथं तत्प्रतिभा-
सोऽभावग्रहणकाल इत्यत आह * अभावेति *

"गृहीत्वा वस्तु सद्भावं स्मृत्वा च प्रतियोगिनम्।
मानसं नास्तिताज्ञानं जायते ऽक्षानपेक्षया"
इति भाषितत्वादित्यर्थः।

एवं विशेष्यानुपलम्भांशप्रयुक्तदूषणमभिधाय वि-
शेषणांशयोग्यत्वप्रयुक्तं दूषणमभिधत्ते।

५७६ योग्यत्वप्रयुक्तदूषणम्।

किञ्च योग्यता हि तत्तदविनाभूतान्यप्रतियोगिप्रमा-
पकसाकल्यमिष्यते तथा सति च यत्र भावोपलम्भस्त-
त्राप्यभावप्रमा स्यात्। नहि तत्र हेतुव्यतिरेकेणैव
वा सत्येव वा तदभावप्रमोत्पद्यते। तत्तदविनाभूतवि-
रहसहितः स तथेति चेन्न। तदविनाभूतव्यतिरेक-
स्य तद्व्यतिरेकेणैवान्यथासिद्धसन्निधेरपि हेतुत्वाङ्गीकारे

प्रमाणाभावात् । अतएवालोकस्याध्यक्षणे नालोकान्तरवत्ताऽवयवेनावयविना वा, आलोकेनान्यथासिद्धसन्निधिरहेतुरित्यालोकाभावग्रहे सा नापेक्ष्यते ।

* किं चेति * तदिति प्रतियोग्युच्यते । तदविनाभूतेति तदिन्द्रियसन्निकर्षः सम्बन्धस्य सम्बन्ध्यविनाभूतत्वात् ताभ्यामन्यानि प्रतियोगिप्रमापकाणीन्द्रियाणि मनःसमाधानादीनि तेषां पौष्कल्यं योग्यता स्वस्वेतरातिरिक्तस्वप्रमापकसामग्रीयोग्यत्वमिति यावत्।उत्पादकसामग्रीव्यावृत्त्यर्थं प्रमापकेत्याह । अभावप्रमापकसाकल्यनिरासाय प्रतियोगीति । प्रतियोगितदविनाभूतयोरपि प्रतियोगिप्रमापकत्वमस्तीति योग्यत्वमसम्भवि स्यात्तन्निराकरणाय तत्तदविनाभूतान्येति । अस्त्विदं योग्यत्वमस्मिंश्चानुपलम्भोऽभावप्रमाकरणं एतावता को दोषस्तत्राह * तथेति * यत्र घट इति प्रमा भवति तत्र घटो नास्तीत्यपि प्रमा स्यात् कुत इत्यत आह * नहीति * प्रतियोगिप्रमापकसाकल्यव्यतिरेकेणाभावप्रमा न जायते कार्यस्य कारणसाकल्यपूर्वकत्वनियमात्तत्र प्रमापकसद्भावे भावोपलम्भादेव नाभावप्रमोत्पद्यते ऽनुपलम्भाभावादित्यत आह * सतीति * भावोपलम्भे सत्येव न भावप्रमा भवति वैयर्थ्यादनवस्थानाच्चाऽतः प्रमापकसाकल्ययोग्यत्वे सति प्रतियोगिप्रमोत्पत्तिक्षणे ऽनुपलम्भस्य सम्भवात् द्वितीयक्षणे तदभावप्रमा स्यादित्याशयः।उक्तातिव्या-

१ नेति सो० पु० नास्ति ।

भावप्रमाप्रसङ्गो विरोध इत्यत आह * नेति * भावादिति निश्चयः । प्रतियोगिविरहस्यापि तद्विरहप्रमायां कारणत्वमाशङ्कयति तदभावादित्यर्थः । एवं सति व्यर्थविशेषणत्वं लक्षणस्येति परिहरति * तर्हीति * प्रतियोग्यभावसहितोऽनुपलम्भोऽभावप्रमाकरणमित्युक्ते व्यभिचाराभावाद्योग्यतेति विशेषणं व्यर्थमित्यर्थः । योग्यताविशेषणस्यार्थवत्त्वार्थं तदनुपादाने लक्षणस्य व्यभिचारं दर्शयति पूर्ववादी * योग्यतेति * प्रतियोग्यभावसहितानुपलम्भे सति कुतोऽभावानिश्चय इत्यत आह * कदा चिदिति * वस्तुतोऽसत्यपि पिशाचे किं विद्यमानः पिशाचो न उपलभ्यते उताविद्यमान इत्यनुपलम्भात्संशयो जायतेऽतोऽस्मिन्सन्देहे तावनुपलम्भे योग्यताविशेषणानुपादानेऽतिव्याप्तिरित्यर्थः । तस्मात्तन्निवारणाय योग्यताविशेषणमुपादेयमित्युपसंहरति * तदिति * तथाऽभावप्रमाकरणमिति यावत् । एवं तर्ह्यसमर्थविशेषणत्वमिति परिहरति * तर्हीति * यत्र व्यवधानमस्ति तत्र वस्तुतो घटाभावे सत्यपि योग्यानुपलम्भे संशयो जायतेऽपवरके घटोऽस्ति वा न वेति संशयस्यानुभवसिद्धत्वादतो योग्यताविशेषणेऽपि तुल्यमतिव्यापकत्वमित्यर्थः ।

प्रतियोग्यभावस्य लक्षणविशेषणत्वमुपगम्य व्यर्थविशेषणत्वमुक्तमिदानीं तदपि न सम्भवत्यसिद्धिप्रसङ्गादित्याह ।

६७९. अभ्युपेत्यदूषणोक्तिः ।

अपि च मेयस्य वास्तवसत्त्वं प्रमाणकोटावनिवेशार्हमेव

मेयवस्तुसत्त्वनिर्द्धारणार्थमेव हि प्रमाणाप्रमाणविवेचनं विचारकाणाम् । अन्यथाऽनुमाने व्याप्त्यावुपाधिनिरासायासायासो व्यर्थः स्यात् व्याप्तपक्षधर्मताज्ञानमात्रस्यैव कारणत्वाङ्गीकारेण सौरथ्यात् । प्राङ्नास्तिताप्रमितौ च यद्यभावप्रमाणतां मन्यसे तर्हि सा न स्यात् । तत्रेदानीं जायमानाभावप्रमोत्पत्तावभाववास्तवसत्त्वाविहस्यापीदानीं क्वचित्सम्भवात् । फलविषयकालिकाभावोपलक्षिताश्रयादेः कारणकोटिनिवेशने विशेषाभावात् । तदुपलक्षितत्त्वस्यैव विशेषणस्य विशेषत्वेऽतिप्रसङ्गात् । तथापि सामान्यतो विशेषाभावोऽसिद्ध इति चेन्न । तस्य सत्त्वे निर्व्वचनापातात् ।

* अपि चेति * प्रमाणकोटौ-प्रमाणपक्षे । निवेशार्हं न भवति-प्रमाणस्य फलजनकतयोपसर्जनत्वात्प्रमेयस्य फलशालितया प्राधान्यादेकस्य विरोधे चोभयत्वायोगादित्यर्थः । इतश्च प्रमेयसत्त्वं प्रमाणकोटावनिवेशार्हमित्याह * मेयेति * मेयसत्त्वसिद्धये प्रमाणमिदमप्रमाणं वेति लक्षणतः प्रमाणाप्रमाणविवेकः-क्रियते ततो लक्षणतः प्रमाणसिद्धेः प्राक् प्रमेयस्यासिद्धस्य न लक्षणाविशेषणत्वमित्यर्थः । विचारका-निरूपकाः । प्रमाणविवेचनस्य प्रमेयतत्त्वनिर्द्धारणार्थत्वानङ्गीकारे दण्डमभिधत्ते * अन्यथेति * व्याप्यव्यापकयोः सम्बन्धे उपाधिर्निरस्यतेऽनुमानवादिभिः

भावप्रमाप्रसङ्गो विरोध इत्यत आह * नेति * तावदिति निश्चय। प्रतियोगिविरहस्यापि तद्विरहप्रमायां कारणत्वाद्भावव्रति तदभावादित्यर्थः। एवं सति व्यर्थविशेषणत्वं लक्षणस्येति परिहरति * तर्हीति * प्रतियोग्यभावसहितो ऽनुपलम्भो ऽभावप्रमाकरणमित्युक्त व्यभिचाराभावाद्योग्यतेति विशेषणं व्यर्थमित्यर्थः। योग्यताविशेषणस्यार्थवत्त्वार्थं तदनुपादाने लक्षणस्य व्यभिचारं दर्शयति पूर्ववादी *योग्यतेति* प्रतियोग्यभावसहितानुपलम्भे सति कुतोऽभावानिश्चय इत्यत आह *कदा चिदिति* वस्तुतोऽसत्यपि पिशाचे किं विद्यमानः पिशाचो न उपलभ्यत उताविद्यमान इत्यनुपलम्भात्संशयो जायतेऽतोऽस्मिन्सन्देहहेतावनुपलम्भे योग्यताविशेषणानुपादानेऽतिव्याप्तिरित्यर्थः॥ तस्मात्तन्निवारणाय योग्यताविशेषणमुपादेयमित्युपसंहरति *तदिति* तथाऽभावप्रमाकरणमिति यावत्। एवं तर्ह्यसमर्थविशेषणत्वमिति परिहरति *तर्हीति* यत्र व्यवधानमस्ति तत्र वस्तुतो घटाभावे सत्यपि योग्यानुपलम्भे संशयो जायते ऽपवरके घटोऽस्ति वा न वेति संशयस्यानुभवसिद्धत्वादतो योग्यताविशेषणेऽपि तुल्यमतिव्यापकत्वमित्यर्थः।

प्रतियोग्यभावस्य लक्षणविशेषणत्वमुपगम्य व्यर्थविशेषणत्वाद्युक्तमिदानीं तदपि न सम्भवत्यसिद्धिप्रसङ्गादित्याह।

५३२. मत्पुपेयदूषणानि।

अपि च मेयस्य वास्तवसत्त्वं प्रमाणकोटावनिवेशार्हमेव

मेयत्वस्तुसत्त्वनिर्द्धारणार्थमत्र हि प्रमाणाप्रमाणविवेचनं वि चारकाणाम् । अन्यथाऽनुमाने व्याप्तावुपाधिनिरासायासायासो व्यर्थः स्यात् व्याप्तपक्षधर्मताज्ञानमात्रस्यैव कारणत्वाङ्गीकारेण सौख्यात् । प्राङ्नास्तिताप्रमितौ च यद्यभावप्रमाणतां मन्यसे तर्हि सा न स्यात् । तत्रेदानीं जायमानाभावप्रमोत्पत्तावभावत्वास्तवसत्ताविहस्यापीदानीं क्वचित्सम्भवात् । फलविषयकालिकाभावोपलक्षिताश्रयादेः कारणकोटिनिवेशने विशेषाभावात् । तदुपलक्षितत्वस्यैव विशेषणस्य विशेषत्वेऽतिप्रसङ्गात् । तथापि सामान्यतो विशेषाभावोऽसिद्ध इति चेन्न । तस्य सत्त्वे निर्व्वचनापातात् ।

* अपि चेति * प्रमाणकोटौ-प्रमाणपक्षे । निवेशार्हं न भवति-प्रमाणस्य फलजनकतयोपसर्जनत्वात्प्रमेयस्य फलशालितया प्राधान्यादेकस्य विरोधे चोभयत्वायोगादित्यर्थः । इतश्च प्रमेयसत्त्वं प्रमाणकोटावनिवेशार्हमित्याह * मेयेति * मेयसत्त्वसिद्धये प्रमाणमिदमप्रमाणं वेति लक्षणतः प्रमाणाप्रमाणविवेकः-क्रियते ततो लक्षणतः प्रमाणसिद्धेः प्राक् प्रमेयस्यासिद्धस्य न लक्षणविशेषणत्वमित्यर्थः । विचारका-निरूपकाः । प्रमाणविवेचनस्य प्रमेयतत्त्वनिर्द्धारणार्थत्वानङ्गीकारे दण्डमभिधत्ते * अन्यथेति * व्याप्यव्यापकयोः सम्बन्धे उपाधिर्निरस्यतेऽनुमानवादिभिः .

सति तस्मिन्व्याप्यत्वासिद्ध्याऽऽभासत्वापातादित्या-
भासविवेकाय सोऽपि प्रयासो व्यर्थः स्यादित्यर्थः।
न तस्य वैयर्थ्यं साध्यसिद्ध्युपयोगित्वादित्यत आह
* व्याप्तेति * व्याप्तपक्षधर्मताज्ञानस्य प्रमेयसत्त्ववि-
शिष्टस्य पक्षसाध्यप्रमापकत्वसम्भवादित्यर्थः। मा-
त्रशब्देन निरुपाधिकत्वं व्यावर्त्यते। सौस्थ्यात्सुस्थ-
त्वादिति यावत्। खण्डनान्तरमाह * प्रागिति * प्रा-
गत्र घटो नासीदिति प्रागभावग्रहे ऽभावस्य प्रमाण-
ताऽङ्गीक्रियते न वा, यदि न सर्वत्रापि तर्हि तन्न
स्यादविशेषादतस्तत्राभावस्य प्रमाणता मन्तव्या
तां यदिमन्यस इत्यनुवादः। असम्भवेन दूषयति *
तर्हीति * प्रागभावप्रमितौ मेयाभावस्यापि प्रमा-
णाविशेषणतया प्रमाणता यदि तर्हि सा न स्यात्कुत
इत्यत आह * तत्रेति * प्रागत्र घटो नासीदिति
इदानीं याऽभावप्रमा तदुत्पत्तौ कश्चित्कारणभूताभा-
ववास्तवसत्ताभावस्य सम्भवात् ततः सघटेऽपि
भूतलेऽयं घटः प्राङ्नासीदिति कदाचिदुत्पत्तेरि-
त्यर्थः। नेयमव्याप्तिः फलकालिकाभावोपलक्षिता-
श्रयादेः करणे निवेशात्तस्य प्राङ्नास्तितामितौ स-
म्भवादित्यत आह * फलेति * प्रमेयाऽभावो न प्र-
माकारणकोटिनिविष्टः किं तु योग्यानुपलम्भरूपप्र-
माणस्य फलमभावप्रमायास्तस्या विषयः कालः का-
लस्य विषयशब्दवाच्यत्वात्तत्कालिकाभावः फलवि-
षयकालिकाभावस्तेनोपलक्षितस्याश्रयस्य धर्मिणः प्र-
तियोगिनः प्रमातुर्वा प्रमाणे निवेशात् इति। यद्वा फ-

लस्य विषयः प्रमेयोऽभावस्तत्कालिकश्चासावभावे-नोपलक्षितश्चेति फलविषयकालिकाभावोपलक्षितस्त-स्याश्रयादिरादिपदेन कालो गृह्यते अभावोपलक्षिताश्र-यादियोग्यतानुपलम्भो ऽभावप्रमाणमिति यावत् । वि-शेषाभावाद्भावचति परमार्थतश्चाभाववत्यप्यभावप्रमा-करणस्य विशेषाभावात्प्रसङ्गस्तदवस्थः भाववत्यपि कदा चित्तदभावसम्भवेन तदुपलक्षितेत्यादिविशेष-णसम्भवादित्यर्थः । विशेषाभावो ऽसिद्धस्तदुपल-क्षितत्वस्यैव विशेषत्वादित्यत आह * तदिति * त-त्कालाभावोपलक्षितत्वमिदानीमस्ति चेत्तत्कालस्या-पीदानीं प्रसङ्गो नाऽस्ति चेदुक्तातिव्याप्तिरित्यर्थः । यद्यप्ययमसौ विशेष इति वक्तुमशक्यस्तथापि वि-शेषाभावो ऽसिद्धः सामान्येन देशकालादेर्यस्य कस्य चित्सम्भवात्तद्खण्डनादिति शङ्कते * तथापीति * यदस्ति तद्वाच्यमिति नियमाङ्गीकारवादिभिरस्ति चे-दसौ निर्वक्तव्यो न च निर्वक्तुं शक्यत इति परिहरति * नेति * न च विशेष इत्येव तत्र दोष तन्निर्वचनं समाधाना सम्भवादिति भावः ।

इति प्रमाणखण्डनम् ।

---

एवं तावत् पद्प्रमाणी खण्डिता इदानीं तदा-भासखण्डनाय प्रक्रमते ।

५८० आभासखण्डनारम्भः ।

कश्चाऽयमसिद्धो नाम ? तथाहि व्याप्तिपक्षधर्मत्वा-

प्यामप्रमितोऽसिद्ध इत्यलक्षणं हेत्वाभासान्तराणामपि ह्यसिद्धप्रवेश एवं सति स्यात्। व्याप्तिं पक्षधर्मतां तत्प्रमितिं वा न विरुन्धतां हेतुदोषत्वासम्भवात्।

*क इति* ननु प्रत्यक्षाभासान्परित्यज्य कस्मादनुमानाभासा एव परास्यन्ते। अत्र ब्रूमः सूत्रकारेण प्रत्यक्षाभासानामप्रतिपादनात् ग्रन्थकारैस्तु तत्र प्रसङ्गात्प्रसाधितानामत्रापि प्रसङ्गादेव तत्र तत्र निराकरणाद्धेत्वाभासानां कथाङ्गतया सूत्रकारेण मुखत एव प्रतिपादनात्त एव प्राधान्येन निरस्यन्ते। संशयस्यान्यतमपदार्थत्वेन परिगणितत्वमिति चेत्सत्यं स प्रत्यभिज्ञाखण्डने खण्डित एव च तुरीयपरिच्छेदेऽपि खण्डयिष्यते तथा सामान्यतो विशेषाभावोऽसिद्ध इति तस्य प्रकृततया बुद्धिस्थत्वात्तत्खण्डनमादावुपपन्नम् * कश्चेति * न कोऽपीत्याक्षेपः। व्याप्तत्वपक्षधर्मत्वप्रमाविषयत्वात्यन्ताभाववानसिद्ध इति लक्षणसम्भवात् कुतो न कोऽप्यसिद्ध इत्यत आह * तथाहीति * व्याप्ततया पक्षधर्म्मत्वेन न प्रमितः सोऽसिद्धो, न प्रमितोऽसिद्ध इत्युक्तेऽसम्भवो व्याप्त्यादिविरहात्मना प्रमितत्वादत आह * पक्षधर्म्मत्वेनेति * पक्षधर्म्मत्वेन न प्रमितोऽसिद्ध इत्युक्ते स श्यामो मैत्रतनयत्वादित्यादिव्याप्यत्वासिद्धावव्याप्तिस्तन्निरासायोक्तं *व्याप्तेति* व्याप्तत्वेन न प्रमितोऽसिद्ध इत्युक्तेऽनित्यः शब्दः पटस्य कृतकत्वादित्यादिव्यधिकरणासिद्धावव्याप्तिस्तन्निरासायोक्तं *पक्षेति* कुतो न लक्षणमित्यत आह *हेत्विति* विरुद्धा-

दीनां व्याप्तत्वपक्षधर्मत्वाभ्यामप्रमितत्वमस्ति वा न वा, प्रथमे हेत्वाभासान्तराणामप्येवं सत्यसिद्धे प्रवेशः स्यादित्यतिव्याप्तिरित्यर्थः। यदि द्वितीयस्तत्राह * व्याप्तिमिति * व्याप्तिं पक्षधर्मतां प्रमितिं वा ये न विरुन्धन्ति तेषां धूमवत्त्वादिवद्धेत्वाभासत्वासम्भवादाभासानाभासविवेको न स्यादित्यर्थः।

विरुद्धादीनामसिद्धावन्तर्भावादित्युक्तमुपश्रुत्यासहमाना नैयायिकाः प्रत्यवतिष्ठन्ते।

५९१ नैय्यायिकशङ्का।

ननु नेदमीदृशं तथाहि–के चि द्दोषा व्याप्तिपक्षधर्मतातत्प्रमितीविरहात्मानः केचित्तु व्याप्त्यादिगङ्गे लिङ्गभूताः प्रतिबन्धकतयाऽनुमित्युत्पत्तिं निरुन्धानाश्च केचिद्दोषभूयं भजन्ते तत्र प्रथमे तावदसिद्धमध्यमध्यासते तद्यथा व्याप्यत्वासिद्धः सोपाधिरूपः अनौपाधिकसम्बन्धिता हि व्याप्तिः सहोपाधिता चानुपाधिताविरहरूपैव एवमधिकरणासिद्धिरप्यसिद्धावेवान्तर्भावष्णुः पक्षपदोपात्तस्याश्रयस्य व्यतिरेकरूपा हि सा।

* नन्विति * इदं–हेत्वाभासान्तराणामसिद्धान्तर्भावित्वमीदृशञ्च। विरुद्धादीनामसिद्धतः पृथक्त्वदर्शनाय हेत्वाभासानां त्रैविध्यं दर्शयति * तथाहीत्यादिना * सन्ति पञ्च हेत्वाभासा असिद्धविरुद्धानैकान्तिककालात्ययापदिष्टसव्यभिचाराख्या अनध्यवसितश्चानैकान्तिकान्तर्भूतस्तत्र के चिद्दोषा व्याप्ति-

पक्षधर्मतयोः प्रमितिविरहात्मानः यानसिद्धानाहुः ।
विधान्तरमाह * केचिदिति * व्याप्तिभङ्गस्य गमकतया लिङ्गभूता दोषा इत्यनुषङ्गः । विरुद्धानैकान्तिककालात्ययापदिष्टा इति कथ्यन्ते । प्रकारान्तरमाह * प्रतीति * केचित्सव्यभिचाराख्या न व्याप्तिपक्षधर्म्मताविरहात्मानो नापि तत्प्रमितिविरहरूपाः किंतु सम्यक् हेतुप्रतिबन्धकतया साध्यप्रमितिं निरुन्धानास्सम्यक् हेतौ सत्येवाऽगृह्यमाणविशेषदशायां संशयजनकतया दोषभूयं-दोषभावं भजन्त इत्यर्थः । सर्वत्र व्यक्तिबहुत्वाद्बहुवचनम् । तत्र केषां किंरूपत्वमित्यत आह * तत्रेति * असिद्धिमध्ये प्रविशन्तीत्यर्थेऽसिद्धिमध्यमध्यासत इत्युच्यते। स्फीतालोकमध्यमध्यासीनो घट इतिवत्। तदेव स्पष्टयति *तदिति* मैत्रः तनयत्वादिति * व्याप्यत्वासिद्धेः सोपाधिकमात्रेण कथमसिद्धत्वमित्यपेक्षायां तदुपपादनाय व्याप्तिस्वरूपमाह * अनौपेति * एतावता किमित्यत आह * सहेति * उपाधिकृत उपाधेयस्तेन सह वर्तमानः सहोपाधेयस्तद्भावः सहोपाधेयता साऽनौपाधिकसम्बन्धव्याप्त्यभावरूपा अभावाभावस्य भावत्वात् ।

"अभावेऽपोह्यमाने हि भाव एवावशिष्यत"

इतिन्यायादित्यर्थः।व्याप्यत्वासिद्धेर्व्याप्त्यभावरूपतामुक्त्वाऽधिकरणासिद्धेः पक्षधर्मताविरहरूपतामाह *एवमिति* अन्तर्भविष्णुरन्तर्भवनशीलः।गगनारविन्दं सुरभि अरविन्दत्वाद्भीमाराविन्दवदित्याश्रयासिद्धिरधिकरणासिद्धिरित्युच्यते। कुत इत्यत आह * पक्षेति *

पक्षधर्मत्वमिति पक्षपदोपात्तो य आश्रयो हेतो-स्तस्येहासत्वेन पक्षधर्मत्वासम्भवात्तद्व्यतिरेकरूपा सेत्यर्थः।

द्व्यणुकं स्वतोन्यूनपरिमाणारब्धं कार्य्यद्रव्यत्वात् घटवदिति सिद्धसाधनमप्यसिद्धेऽन्तर्भविष्यतीत्याह।

५८२ सिद्धसाधनस्यासिद्धेऽन्तर्भावः।

सिद्धसाधनमपि तथैव। सिषाधयिषितधर्मविशिष्टो हि पक्ष उच्यते यच्च सिद्धं न तत्र सिषाधयिषाऽस्ति ततो वि-शेषणाभावाद्यच्चो विशिष्टपक्षरूपस्य तत्राभावः। नच वा-च्यं यथा सव्यभिचारत्वाद्गमनव्याप्तिकमिति पृथगेव स-व्यभिचारस्य दोषत्वं तथासिद्धत्वात्तत्र सिषाधयिषा ना-स्तीति सिद्धत्वस्यापि पृथगेव दोषत्वं प्राप्नोति लिङ्गद्वा-रेणासिद्धिपर्य्यवसायित्वात्, अन्यथा व्याप्त्याद्विविर-हपर्य्यवसायितामात्रेण सव्यभिचारत्वादीनामप्यसिद्धा-वेवान्तर्भावः स्यादिति। यतः सिषाधयिषाभावो न प्रतिपत्ता सिद्धत्वाल्लिङ्गाद्गम्यते। किं नाम? इच्छाभावस्य तस्य यथादर्शनं प्रत्यक्षादेरेवाधिगमः, इच्छैव तु त-त्र यत्रास्ति तत्र सिद्धत्वं प्रयोजकमित्येतावन्मात्रेण सिद्धत्वमुपन्यस्यत सिद्धसाधने न त्विच्छाभावमनुमा-तुं लिङ्गतयेति। एवं स्वरूपासिद्धिरपि पक्षधर्मताविर-हरूपैव।

* सिद्धेति * तथैवासिद्धेऽन्तर्भविष्णु। तदुपपादनाय पक्षस्वरूपमाह * सिषाधयिषितेति * साधयितुमिष्टः सिषाधयिषितः सन्दिग्धसाध्यः पक्ष इत्युपगमात् एवंविधस्य पक्षस्य सिद्धसाधनेऽभावं वक्तुं तद्विशेषणाभावमाह * यत्रेति * प्रमाणान्तरामितं सिद्धं नच तत्रसाधनेच्छाऽस्ति फलसिद्धेरिच्छानिवर्तकत्वादित्याशयः। अस्तु प्रकृते किं स्यादित्यत आह * तत इति * साधनेच्छारूपविशेषणाभावात्तद्विशिष्टपक्षाभावेन तद्वृत्तित्वपक्षधर्मताविरहरूपैव सेत्यर्थः। व्याप्तिभङ्गलिङ्गतयाऽसिद्धिपर्यवसायिनः सव्यभिचारादेरिव सिषाधयिषाभावमनुमापयित्वा तद्द्वारेण पक्षधर्मताविरहगमकतया ऽसिद्धिपर्यवसायिसिद्धसाधनत्वस्याप्यसिद्धात् पृथगेव दोषत्वमित्याशङ्क्याह *न चेति* विमतं इदं भग्नव्याप्तिकं सव्यभिचारत्वात्सम्प्रतिपन्नवदिति सव्यभिचारत्वस्य व्याप्तिभङ्गलिङ्गतयाऽसिद्धात्पृथगेव दोषत्वं तथा विमतं न सिषाधयिषितं सिद्धत्वात्सम्प्रतिपन्नवदिति सिद्धत्वस्यापि सिषाधयिषाभावानुमानद्वारा पक्षधर्मत्वाभावगमकत्वादसिद्धात्पृथगेव दोषत्वं प्राप्नोतीति कृत्वा लिङ्गद्वारेण-हेतुद्वारेणासिद्धिपर्यवसायित्वं पृथगेव दूषणं सिद्धत्वमेवेत्यर्थः। विपर्यये दण्डमभिधत्ते * अन्यथेति * लिङ्गद्वारेणासिद्धिपर्यवसायिनः सिद्धसाधनत्वस्यासिद्धत्वात्पार्थक्यानङ्गीकारे सव्यभिचारत्वादीनामप्यसिद्धावन्तर्भावः स्यादविशेषादिति च न वाच्यमित्यत्र सम्बन्धः। असिद्धत्वव्य-

भिचारत्वयोरविशेषो न वक्तव्य इति किमियं राजाज्ञेत्यत आह * यत इति * सिषाधयिषाभावो यदि सिद्धत्वलिङ्गादुन्नीयेत व्याप्तिविरह इव व्यभिचारादिना भवेत्तर्हि सिद्धत्वं पृथक् दूषणं न तु तदेवेत्याशयः। प्रतिवादिनः सिषाधयिषाभावो वादिना यद्यपि लिङ्गादूगम्यस्तथापि न प्रतिवादिना तेनैव तदधिगमस्य प्रयोजकत्वादित्यभिप्रेत्य प्रतिपत्तेति विशेषणम्। तर्हि बाधकाभावादिच्छाभावासिद्धिरित्यत आह * किमिति * इच्छाया आत्मगुणस्य प्रत्यक्षपक्षे तदभावोऽपि मानसः साक्षिवेद्यत्वे तदभावोऽपि तथेति सर्ववादिनां स्वसमयानुसारेण मानान्तरसिद्ध इत्यर्थः। तर्हि मानान्तरसिद्धसिषाधयिषाभावेनानुमाने दुष्टे सिद्धत्वोपन्यासः सिद्धसाधने किमर्थ इत्यत आह * इच्छेति * तावतैव दुष्टे हेतौ कुत इति सुहृद्भावेन पृच्छति किं प्रति सिद्धत्वमुपन्यस्यते तस्येच्छाभावस्य प्रागभावरूपत्वे तदुत्पत्तिप्रतिबन्धकतया प्रध्वंसत्वे साक्षादेव प्रयोजकत्वादित्यर्थः। एतावन्मात्रेणेति मात्रचो व्युदस्यमाह * नास्तीति * अनित्यः शब्दश्चाक्षुषत्वादिति स्वरूपस्यासिद्धिः सोऽपि पक्षवृत्तित्वरूपपक्षधर्मताविरहरूपेत्याह * एवमिति * भागासिद्ध्यादेरन्तर्भावो यथासम्भवमूहनीय इत्याशयः।

व्याप्त्यादिभङ्गलिङ्गभूता अपि हेत्वाभासा असिद्धावन्तर्भवेयुरेव आभासत्वाविशेषादित्यत आह

५८३ विरुद्धस्यासिद्धतः पृथक्त्वम् ।

ये तु व्याप्तिपक्षधर्मताविरहलिङ्गभूतास्तेऽसिद्धतः पृथगेव हेत्वाभासाः । तद्यथा विरुद्धः साध्यविपरीतव्याप्तः तत्र साध्यव्यतिरेकव्याप्तता हेतोर्न साध्यव्याप्तताभावः । किन्नाम ? साध्यव्यतिरेकेण सहानौपाधिकः सम्बन्धोऽन्य एवासौ, इत्थमेव पक्षधर्मताविरहात्माऽपि नायम् । किन्नाम? ततः साध्यव्यतिरेकेण सह निरुपाधिसम्बन्धत्वात् तत्र साध्यव्याप्तिरस्य नास्तीत्यनुमीयते । तथासति च साध्यव्याप्तिव्यतिरेकलिङ्गं सद्विरुद्धः पृथगेव हेत्वाभासो भवति ।

*ये त्विति* तदेवोपपादयति *तदिति* क्रमप्राप्तविरुद्धस्य पृथक्त्वोपपादनाय तत्स्वरूपमाह *विरुद्ध इति* अनित्यः शब्दः कार्यत्वादिति हेतुरनित्यत्वसाध्याभावनित्यत्वेन व्याप्तो विरुद्ध इत्युच्यते साध्यव्याप्तसम्यक्हेतुनिवारणाय *विपरीतेति* विपरीतव्याप्त इत्युक्ते साकाङ्क्षतया कस्येत्यानर्थक्यपरिहाराय साध्येति विशेषणम् । विरुद्धस्यासिद्धान्तर्भाववादिना व्याप्तिभङ्गेऽन्तर्भाव उच्यते उत पक्षधर्मताभावे इति विकल्प्य प्रथमं प्रत्याह *तत्रेति* व्याप्तिभङ्गो विरुद्धेऽप्यस्तीति मन्वानः पृच्छति *किमिति* भावाभावयोरैक्यं मन्वानः प्रत्याह *साध्येति* असौ व्यतिरेकव्याप्तता । पक्षधर्मताभावान्तर्भाव इति वि-

तीयं दूषयति * इत्थमिति * व्यतिरेकव्याप्यत्वस्य निरुपाधिभावरूपसम्बन्धत्वात्पक्षधर्मताभावेनाभेदासम्भव इत्यनेन प्रकारेणेत्यर्थः । केन तर्हि प्रकारेण हेतुदोषत्वं विरुद्धस्येति पृच्छति * किमिति * हेतुदोषत्वं व्याप्त्यभावलिङ्गद्वारेणेति परिहरति * साध्येति * नायं साध्यव्याप्तस्तदभावेन व्याप्तत्वात्तदभावव्याप्तधर्मान्तरवदित्यनुमीयत इत्यर्थः । अस्तु तावता किमित्यत आह * तथेति * अनुमेयादनुमापकस्य भिन्नत्वादित्यर्थः ।

विरुद्धस्य पृथक्के ऽप्यनैकान्तिकस्य व्याप्तिव्यतिरेकरूपत्वमेवेत्यत आह ।

५८४ अनैकान्तिकस्य व्याप्तिव्यतिरेकरूपत्वाभाव ।

एवमनैकान्तिकोऽपि न व्याप्तिव्यतिरेकरूपः किन्तु तल्लिङ्गमेव । तथाहि-हेतोरन्वयस्य व्यतिरेकस्य वा व्यभिचारो न साध्यसाधनव्याप्तिविरहात्मा, किं नाम? व्यभिचारो हेतोः साध्यव्याप्तिविरहं विना न सम्भवतीति लिङ्गभावेन व्याप्तिभङ्गं बोधयति, यदि हि निरुपाधिः साध्येन सम्बन्धोऽस्य भवेत् कथं व्यभिचरितुं शक्नुयात्तस्माद्व्याप्तिविरहलिङ्गं व्यभिचारः नतु व्याप्तिविरहः । पक्षधर्मताविरहरूपता त्वनैकान्तिकस्यासम्भावितैव ।

* एवमिति * शब्दो नित्यः प्रमेयत्वादित्यनैकान्तिकः। किं तर्हि तद्रूपमित्यत आह * किं त्विति * तदेवोपपा-

दयति *तथा हीति* सव्यभिचारोऽनैकान्तो व्यभिचारश्चान्वयस्य व्यतिरेकस्य वा, अन्वयस्य व्यभिचारो विपक्षवृत्तिता व्यतिरेकव्यभिचारो विपक्षाद्व्यावृत्तिता सा च साध्यव्यतिरेकेणान्यत्र क्वचित्सत्त्वमिति यावत् स च व्यभिचारो न व्याप्त्यभाव इत्यर्थः। प्रश्नपूर्वकं तस्य व्याप्तिभङ्गलिङ्गत्वं दर्शयति *किमित्यादिना* नायं साध्यव्याप्तस्तदभावेऽपि सत्त्वात्तदभावभाविवस्त्वन्तरवदिति व्यभिचारो व्याप्तिभङ्गमनुमापयतीत्यर्थः। व्यभिचारे सत्येव साध्यव्यापकत्वमस्तु को दोषः तथा च विपक्षबाधकाभावान्नानुमापकत्वं व्यभिचारस्येत्यत आह * यदीति * तल्लिङ्गत्वात्ततो भेद इत्युपसंहरति * तस्मादिति * अस्तु तर्हि पक्षधर्म्मताभावोऽनैकान्तिकस्तत्राह * पक्षेति * पक्षत्रयवृत्तित्वादनैकान्तस्येत्यर्थः।

सत्प्रतिपक्षस्यासिद्धितः पृथक्त्वं स्पष्टमिति मत्वा तत्स्वरूपमाह।

९८९ सत्प्रतिपक्षस्यासिद्धित' पृथक्त्वं तत्स्वरूपं च।

सत्प्रतिपक्षनाम चानवगम्यमानविशेषप्रतिपक्षप्रतिरुद्धतया यत्साध्यानिश्चयाजनकत्वं हेतोः स प्रतिबन्धकसन्नाने कार्याजनकत्वमितरकारणसाधारणं न तु स्वभावः तस्य व्याप्तिपक्षधर्मताविरहरूपताऽसम्भावितैव।

* सदिति * सन् प्रतिपक्षो यस्यासौ सत्प्रतिपक्षः नित्यमाकाशं निरवयवद्रव्यत्वादात्मवदनित्यमाकाशं बाह्येन्द्रियग्राह्यविशेषगुणाधिकरणत्वात् घटवदिति

सत्प्रतिपक्षः सत्प्रतिपक्षतायां यत्साध्यनिश्चयाजनकत्वं तद्वस्तुस्वभाव इति सम्बन्धः। तदुपपादनमनवगम्येत्यादि। करतलानलसंयोगे सति मन्त्रादिप्रतिबन्धकसद्भावे स्फोटादिकार्याजनकत्वं वन्ह्यादिकारणानां साधारणं इत्याह लक्ष्यमाणोपयोगितया। प्रतीतिफलितमाह * तस्येति * भावस्वभावस्य अभावत्वासम्भवादित्यर्थः। दोषत्वं चास्यासिद्धत्ववत् साक्षादेव न त्वनैकान्तिकवद्व्याप्तिभङ्गलिङ्गतया।

बाधानासिद्धितः पृथक् साधनवति साध्याभावयोधात्मतत्त्वाद्व्याप्तिविरहावगमरूप एवेत्याशङ्क्याह।

५८६ बाधस्यासिद्धितः पृथक्त्वम्।

बाधस्तु साधनवति पक्षे साध्याभावबोधनात्मा भवन्नपि न व्याप्तिविरहावगमरूपः सामान्यतोऽनौपाधिकसम्बन्धरूपा हि व्याप्तिः साधनवति च पक्षे साध्यविरहो न सोपाधिता साध्याविरोधिस्वभावत्वात्तयोः। नाप्यसौ सामान्यतः साध्यसाधनसम्बन्धस्य विरहरूपः, बाधे सत्यपि सामान्येन साध्यसाधनयोः सम्बन्धस्य दृष्टान्तावगतस्यानपलापात् बाधस्य किञ्चिद्विशेषविषयत्वात् सामान्याकारपरिगृहीतस्य सम्बन्धस्य विशेषान्तरमादाय पर्यवसानाऽविरोधात्। तस्माद्विशेषबाधेन सामान्यतः सम्बन्धस्य सोपाधिता ऽनुमीयते निरुपाधित्वे बाधानुपपत्तेः। यथाह "बाधाद्दोपाधिरुन्नीयतेऽन्यथा वेति न क-

श्विद्विशेष" इति ।

* बाधस्त्विति * अग्निरनुष्णः पदार्थत्वादित्यत्र प्रत्यक्षबाधः साध्यानुष्णत्वाभाव उष्णत्वबोधात्मा भवन्नपि न व्याप्तिविरहावगमरूपः किं तु साध्याभाववानित्यर्थः। प्रत्यक्षगोचरे साधनवति पक्षे साध्यस्याभावात्कथन्न व्याप्त्यभावरूप इत्यत आह * सामान्येति * विशेषाऽननुगमात्साधनमात्रस्य साध्यमात्रेणानौपाधिकसम्बन्धो व्याप्तिरित्यर्थः । अनौपाधिकसम्बन्धस्य व्याप्तित्वे साध्यविरहबोधात्मकस्य बाधस्य कथन्न व्याप्तिविरहावगमरूपत्वमित्यत आह * साधनेति * व्याप्त्यभावः सोपाधिकताऽभावाभावस्य भावत्वादित्युक्तं। कुत इत्यत आह * साध्येति * सोपाधिकतायाः साध्येन सह वृत्तित्वात्तदविरोधिस्वरूपत्वात्साध्याभावस्य तद्विरोधित्वात्तदवगमयोरपि नैक्यमित्यर्थः। यद्यपि साधनवति पक्षे व्याप्तिविरहात्मा न भवति तथाऽपि पदार्थत्वमात्रस्यानुष्णत्वमात्रेण व्याप्त्यभावरूपो बाधो भविष्यतीत्याशङ्क्याह * नापीति * कुतो न तथात्वमित्यत आह * बाध इति * बाधे सत्यपि सामान्येन साध्यसाधनयोः सम्बन्धस्यानपलापादिति सम्बन्धः। अनपलापे हेतुर्दृष्टान्तेति। पदार्थत्वहेतोरनुष्णत्वसाध्येन घटादौ सम्बन्धस्यावगतत्वेन निराकरणत्वायोगादित्यर्थः । यद्यथा भाति तत्तथैवेत्युत्सर्गो बाधकोपनिपातादन्यथात्वं कस्मान्न भवेदित्यत आह * बाधेति * अग्नौ साध्यसाधनसम्बन्धाभावमात्रगोचरो बाधो बाधत इति

बाधस्य ज्ञानस्य विवक्षितत्वात् तथाऽपि कथन्न व्याप्त्यभाव इत्यत आह * सामान्येति * बाधस्य पक्षमात्रे साध्याभावविषयत्वात् व्याप्तिग्राहकस्य सामान्यसम्बन्धविषयत्वाद्व्यवस्थाया अविरोधोपपत्तिः सर्वभूताहिंसाविधिना विरोधे ततोऽन्यपशुहिंसाविषयत्वेनाविरोधवदित्यर्थः। केन तर्हि प्रकारेण बाधस्य हेतुदोषत्वमित्याशङ्क्य व्याप्तिविरहलिङ्गत्वेनेति दर्शयन्नुपसंहरति * तस्मादिति * पदार्थत्वानुष्णत्वसम्बन्धः सोपाधिकः विपक्षबाधकोपपन्नत्वात् हिंसात्वाधर्म्मत्वसम्बन्धवदित्यनुमीयत इत्यर्थः। विपक्षे बाधमेवाह * निरूपेति * पदार्थत्वानुष्णत्वयोः सम्बन्धस्य स्वाभाविकत्वे साधनवति पक्षे साध्याभावबोधात्मा बाधो न भवेदित्यर्थः। बाध उपाध्यनुमापक इत्यत्राभियुक्तसम्मतिमाह * यथेति * अन्यथेति * विपक्षबाधकतर्काभावेन चेत्यर्थः।

वाचस्पतेर्मतमाह।

५८७ वाचस्पतिमतम्।

अन्यस्तु सत्प्रतिपक्षवत् बाधस्यापि प्रतिबन्धकत्वमेव तेन बाधे सति प्रतिबद्धत्वान्निश्चयं न करोति हेतुरिति व्याप्तिपक्षधर्म्मतादोषमनालोच्य अन्यथैव बाधस्य दोषत्वमित्याह।

* अन्यस्त्विति * अन्यस्तु बाधस्यान्यथैव दोषत्वमाहेति सम्बन्धः। तदन्यथात्वमेव दर्शयति * सत्प-

त्तीत्यादिना * व्याप्तत्वपक्षधर्मत्वाभ्यां प्रमितं लिङ्गं तद् बाधे सति प्रतिपक्षत्वा निश्चयं न करोति बाधस्यापि सत्प्रतिपक्षवत्प्रतिबन्धकत्वमेव येनं, तेन कारणेन साध्याभावग्राहकप्रमाणाभावोऽपि साध्यप्रमितौ हेतुः साध्याभावप्रमाणसत्त्वं विसामग्रीप्रतिबन्ध इति यावत् । व्याप्तिः पक्षधर्मता चानुमितिकरणं तत्र बाधे सति निरुपाधिसम्बन्धत्वानुपपत्त्या सोपाधित्वं साध्याभावनिश्चयेन सन्दिग्धसाध्यपक्षाभावेन तद्धर्मताविरह इति व्याप्तिपक्षधर्मताविरहदोषत्वे सति बाधस्य कथं प्रतिबन्धकत्वमन्यथा ऽनैकान्तिकादीनामपि तथाभावापातादित्याशङ्क्याह * व्याप्तीति * अनालोच्येत्यनेन तन्मतं निरस्तप्रायम् ।

हेत्वाभासत्रैविध्यमुपपादितमुपसंहरति ।

५८८ त्रैविध्योपसंहारः ।

तस्माद्व्याप्तिपक्षधर्म्मताप्रमितत्वानां यत्र साक्षादेव विरहस्योद्भावनं तत्रासिद्धः । यत्र तु व्याप्त्यादिविरहलिङ्गोपन्यासः सत्प्रतिपक्षोपन्यासो वा तत्रान्यो हेत्वाभासः ।

* तस्मादित्यादिना * स्वार्थानुमित्याभासावरोधाय शक्योद्भावनत्वं विवक्षितं द्रष्टव्यम् । हेत्वाभासान्तरस्यासिद्धितः को विशेष इत्यत आह *यत्रेति* प्रतिपक्षोपन्यासः स्वमते अन्यमते तु कालात्ययापदे-

१ यद्यपीति अधिकं सो० पु० ।

शस्यापि।

उक्तहेत्वाभासनियमं प्रतिबन्दीग्रहेणाक्षिपति।

५८९ नियमाक्षेपपरिहारौ।

ननु सोपाधित्वादयोऽपि यतोऽवगम्यन्ते तत् कुतः पृथक् दूषणं न भवत्यनैकान्तिकत्वादिवत्। नैवम्। अनैकान्तिकत्वादेर्व्याप्त्यादिविरहबोधने लिङ्गभावनियमात् पृथगुपन्यासः। सोपाधित्वादेस्तु प्रत्यक्षादपि प्रतीतेः। न तु लिङ्गभावनियतं तत्र प्रतिपादकं किञ्चिदस्ति। नच वाच्यं यत्र लिङ्गात्सोपाधितादेः प्रतीतिरतीन्द्रियप्रभृतिविषये तत्र तत् लिङ्गं पृथगेव दूषणतयाऽभिधीयतां, न ह्यनैकान्तिकत्वादिकमपि सार्व्वत्रिकं व्याप्तिविरहलिङ्गमिति हेत्वाभासाधिक्यमापन्नमिति। अनैकान्तिकत्वादिवत्तेषां लिङ्गानामैकरूप्येण निर्देष्टुमशक्यत्वात् पृथक् पृथगेव वाऽभिधानमशक्यमपरिसङ्ख्येयत्वादिति। वक्ष्यामश्चाग्रे हेतुं तदनभिधानस्य।

* नन्विति * सोपाधित्वं व्याप्तिविरह आदिपदेन स्वरूपासिद्ध्यादिसङ्ग्रहः। सोपाधित्वादिकमपि हेतुः पृथक् दूषणं भवितुमर्हति हेतुदोषज्ञापकत्वादनैकान्तिकत्वादिवदन्यथाऽनैकान्तादेरपि पृथक् दोषत्वं न स्यादित्यर्थः। पृथक् दूषणत्वे व्याप्याद्यभङ्गलिङ्गत्वसत्प्रतिपक्षत्वयोरन्यतरत्वं प्रयोजकमिति परिहरति *नैवमिति* सोपाधिकत्वादिग्राहक-

प्रमाणं व्याप्त्यादिविरहलिङ्गं हेतुदोषग्राहकत्वादनैकान्तिकत्वादिवदिति साधनव्यापकतामाशङ्क्याह * सोपाधीति * आपो गन्धवत्यः कठिनत्वादित्यत्र प्रत्यक्षेण स्वरूपासिद्धिर्गम्यते जलं धूमवदनग्नित्वादित्यत्र व्याप्त्यभावः प्रत्यक्षेण गम्यते तथाऽऽगमादेरपि तदधिगमोदाहरणं द्रष्टव्यम् । तर्हि यत्र सोपाधित्वादि लिङ्गादूगम्यते तत्र तदनैकान्त्यादिवदसिद्धितः पृथक् दूपणमिति हेत्वाभासाधिक्यमापन्नमिति चोदयति * नचेति * पृथग्ग्रहणेनैन्द्रियकसङ्ग्रहः । अध्वरे हिंसा ऽधर्म्मसाधनं हिंसात्वात् ब्राह्मणहिंसावदित्यत्र निषिद्धत्वं उपाधिर्निन्दितत्वाल्लिङ्गादूगम्यते अस्ति प्रधानं विश्वपरिणामित्वादित्यत्र पक्षधर्म्मताविरहोऽप्रामाणिकत्वलिङ्गाद् गम्यते स श्यामो मैत्रतनयत्वादित्यत्र श्यामत्वमैत्रतनयत्वयोरैन्द्रियकयोरपि शाकाद्याहारपरिणतिपरम्पराजन्यत्वमन्वयव्यतिरेकवत्वात् लिङ्गादूगम्यते तत्र तल्लिङ्गं दूषणान्तरं स्यादित्यर्थः । यत्र सोपाधित्वाद्यवगमस्तत्र सर्वत्र तल्लिङ्गमेव हेतुरिति नियतन्न भवति प्रत्यक्षादितोऽपि तदवगमादतोऽसार्वत्रिकव्याप्तिविरहलिङ्गत्वादपृथग्दोषत्वमित्यत आह * नहीति * अनैकान्त्यमपि न सार्वत्रिकं व्याप्तिविरहलिङ्गं क्वचिद्विरुद्धादिना तदवगमादिति तदपि पृथक् दूपणं न स्यादित्यर्थः। फलितमाह *इतीति* यानि पृथग्दूपणाभिमतानि लिङ्गानि तेषामुपसङ्ग्राहकमेकं रूपमस्ति किं वा पृथक् पृथगेव तदुद्भाव्यमिति विकल्प्य प्रथमं प्रत्याचष्टे * मैवमिति * सव्यभि-

षारत्वसाध्यविपरीतव्याप्तत्वादिवदनुगतरूपाभावा-देकरूपशब्दाप्रवृत्तेरित्यर्थः। द्वितीयं दूषयति *पृथगिति* प्रतिव्यक्ति सङ्केतग्रहायोगादित्यर्थः। अशक्यत्वे हेतुमाह * अपरिसङ्ख्येयेति * सोपाधित्वादिगमकलिङ्गानां पृथग्दूषणत्वाभावे हेत्वन्तरमपि वक्ष्यत इत्याह *वक्ष्यामश्चेति *

व्याप्त्यादिविरहलिङ्गानामनैकान्तादीनां पृथग्दूषणत्वमङ्गीकृत्यातिप्रसङ्गश्चोदित इदानीं पृथग्दूषणत्वमेव न सम्भवतीति चोदयति।

५९० पृथग्दूषणत्वाभावशङ्का।

नन्वनुचितमुच्यते व्याप्त्यादिविरहलिङ्गतयाऽनैकान्तिकत्वादीनां पृथग्दूषणत्वमिति यतो व्याप्तिपक्षधर्म्मतोपेतालिङ्गप्रमितिसाध्यानुमितिस्तद्वैकल्यान्न भवेत्। यतश्च सा न भवति तदेव तस्यां दूषणं वक्तुं युक्तमिदमनुमित्युत्पत्तिकारणमिह नास्तीति। नच व्याप्तिपक्षधर्म्मते तत्प्रमितिश्च विहायान्यत्तदुत्पत्तिकारणमस्ति व्यतिरेकोपदर्शनयोग्यं तस्मादनुमितिदोषप्रतीतिकारणत्वमनैकान्तिकत्वादीनां न तु साक्षाद्दोषत्वं दोषप्रतिपादकतयापि च दोषत्वं साक्षाद्दोषत्वमनुपजीव्याशक्याभिधानमिति प्रधानदोषस्यैव दोषतयोद्भावनं युक्तं न सव्यभिचारत्वादीनामिति विभागसूत्रमनर्थकमिति।

* नन्विति * व्याप्त्यादिभङ्गलिङ्गभूतानामनै-

कान्तिकादीनां अनुमित्यनुत्पत्तिप्रयोजकत्वात्कथमनुचितं तद्दूषणत्वमित्यत आह * यत इति * व्याप्तिपक्षधर्म्मतोपेतलिङ्गप्रमितेरनुमितिसाधकत्वात्तदभावादेवानुमितिर्न्न भवतीति यावत् । अस्तु लिङ्गप्रमित्यभावस्यैवानुमित्यनुत्पत्तिप्रयोजकत्वमेतावता किं स्यादित्यत आह * यतश्चेति * चदनप्रकारमभिनयेन दर्शयति * इदमिति * व्याप्तिपक्षधर्म्मतावदनैकान्त्याद्यभावोऽपि कारणमनुमितेरतो व्याप्त्याद्यभाववदनैकान्त्याद्यभावाभावोऽनैकान्त्यादिरपि दूषणमित्यत आह * नचेति * अनैकान्त्याद्यभावस्यान्वयेऽपि व्यतिरेको न दर्शयितुं शक्यते व्याप्तत्वपक्षधर्मत्वप्रमितौ सत्यामनुमित्यनुत्पत्त्यदर्शनाव्यतिरेकात्कारणमवसेयमित्यर्थः । व्याप्त्यादिविरहस्यासिद्धदोषत्वेऽनैकान्त्याद्युद्भावनमनुचितमिति प्रतिपादयितुमनुमितिदोषप्रत्यायकत्वमेवेति फलितमुपसंहरति * तस्मादिति * दोषप्रतिपादकतयैव दोषत्वमनैकान्तिकादीनां भवतु को दोष इत्यत आह * दोषेति * व्याप्त्यादिविरहस्य दोषत्वमुपजीव्य तत्प्रतिपादकतया दोषत्वं वाच्यमन्यथा तदसिद्धेरित्यर्थः । तथा चोपजीव्यस्य दोषत्वोद्भावनं युक्तं प्राधान्यात्तस्येति फलं निगमयति * प्रधानेति *

अर्द्धाङ्गीकारेण परिहरति ।

१९१ शङ्कापरिहारः ।

सत्यमेतत् । साक्षाद्दोषत्वे प्रतिबन्धकस्य व्याप्त्यादिविरहस्य वा, निरुद्धत्वादीनान्तु तत्प्रमापकतया य-

यपि दोषपक्षानिक्षेपरस्तथापि विरुद्धत्वादयो यद्दोषप्रति-पादकतयोक्ता स्तदुद्भावनलाघवानुरोधात् व्याप्त्यादि-विरहे तत्रोद्भाव्यमाने न हेतुर्गन्तुं शक्यते। अनैका-न्तिकत्वादौ तूद्भाविते व्याप्त्यादिविरहोऽर्थाद् गम्यते। व्याप्त्यादिविरहव्यतिरेकेणानैकान्तिकत्वादेरनुपपन्नत्वा-त्। यथा तस्माद्दीर्घोऽयमित्युक्ते अस्मात् ह्रस्वः स इ-त्यर्थाद्गम्यते न तु तत्र प्रतिपाद्यान्तरापेक्षा तथेहापि निरग्नौ धूमोऽस्तीति प्रतिपादिते अग्निनाऽसौ न व्या-प्त इत्यर्थादृगम्यते। न हि सम्भवत्यग्निना च व्याप्तो-ऽनग्नौ चास्तीति। अतएवाऽऽनन्त्यादतीन्द्रियोपाध्यादि-लिङ्गानां येषां पूर्व्वमनभिधानं समर्थितं तेषामनभिधा-नेऽयमपि हेतुः। तानि ह्युपाधिलिङ्गानि नार्थवशादु-पाधिमनपेक्षाणि गमयन्ति येन तेषां व्याप्तिर्नावधारिता तं प्रति तत्प्रतिपादनमन्तरेणाप्रतिपादकत्वस्यापि सम्भ-वात्। अनैकान्तिकत्वाद्यवगतौ च व्याप्त्यादिविरह-बोधाय न प्रतिपादनीयान्तरापेक्षा कस्य चित्सचेतसः स-म्भवतीति पूर्व्वपक्षसङ्क्षेपः।

*सत्यामिति* अङ्गीकृतमंशमनुवदति * साध्यादि-स्यादि निक्षेप इत्यन्तम् * अनङ्गीकृतमंशमाह * त-थाऽपीति * यस्य दोषस्य व्याप्त्यादिविरहस्य प्रति-पादकतयोक्तास्तदुद्भावने लाघवानुरोधात्पृथग्दूषण-

तयोपन्यस्यन्त इति शेषः। लाघवं चानन्यापेक्षतया तत्प्रतीत्युत्पत्तिः। लाघवानुरोधादनैकान्त्यादेर्दोषस्योपन्यासो यदि तर्हि व्याप्त्यादिविरह एवोपन्यस्यतां तस्य प्राधान्याल्लाघवस्य च तुल्यत्वादित्यत आह *व्याप्तीति* अनयोर्न व्याप्तिरित्युक्तौ कुत इति हेत्वाकाङ्क्षायां सत्यामप्यसाववगन्तुं न शक्यते व्याप्त्यादिविरहस्यानैकान्त्यादिहेतुदोषविशेषव्याप्तत्वादिति सोऽपि वक्तव्य इति गौरवमित्यर्थः। अनैकान्ताद्युद्भावनेऽपि व्याप्त्यादिविरहो नाधिगन्तुं शक्य इति तुल्यं गौरवमित्यत आह *अनैकेति* व्याप्त्यादिविरहव्यतिरेकेणानैकान्त्यादेरनुपपत्त्यभावान्नार्थात्तदधिगम इत्यत आह * व्याप्त्यादीति * यदि हि निरुपाधिः साध्येन सम्बन्धोऽस्य भवेत्कथं व्यभिचरितुं शक्नुयादित्युक्ते चानुपपत्तिरित्यर्थः। येन विनाऽनुपपन्नं तदभिधाने तदुपपादके बुद्धिरर्थाद्भवतीत्यत्र दृष्टान्तमाह * तस्मादिति * दृष्टान्तप्रतिपादितमर्थं दार्ष्टान्तिकेऽर्पयिष्यन्नाह * तथेति * निरग्नौ जले यद्यपि वस्तुतो धूमो नास्ति तथाऽप्युदाहरणमात्रतयोक्तमिति न दोषः। कया ऽनुपपत्त्या गम्यत इत्यत आह * न हीति * वक्ष्यमाणश्चाग्रे हेतुं तदनभिधानस्येति यदुक्तं तदिदानीं दर्शयति * अत इति * अनभिधानेऽयमपि हेतुरिति योजना। अत एव-सापेक्षतया गौरवादेव। अत इति परामृष्टं हेतुं स्पष्टयति * तानीति * कुत इत्यत आह * येनेति * लिङ्गानामुपाधिना सह व्याप्तिर्न

गृहीता येन तं प्रति व्याप्तिप्रतिपादनमन्तरेण सत्प्रतिपादकत्वासम्भवात् व्याप्तिपक्षधर्मोपेततया प्रमितस्य लिङ्गत्वादित्यर्थः। अनैकान्तिकत्वादीनामपि लिङ्गत्वाद्याप्तिप्रतीत्यपेक्षा तुल्या इत्यगृहीतव्याप्तिकं प्रति तत्प्रतिपादनापेक्षेत्यत आह * अनैकान्तिकेति * पदार्थानभिज्ञस्य कथायामनधिकारादनैकान्तविरुद्धादिपदादेव व्याप्त्याद्यभावो गम्यते तथाऽनैकान्तिकत्वाद्युद्भावने स्वयमेव विपक्षबाधकतर्काद्याप्त्यादिविरहो गम्यते न तथोपाधिलिङ्गोपन्यासे विपक्षबाधकतर्काभावादित्याशयः। एवमाभासत्रैविध्योपपादनेन व्याप्तत्वपक्षधर्मत्वाभ्यान्न प्रमितोऽसिद्ध इति लक्षणस्यातिव्याप्तिं परिहृत्य पूर्वपक्षमुपसंहरति * इति पूर्वेति *

सिद्धान्तोपक्रमज्ञापनायाह।

५९२ सिद्धान्तोपक्रमेऽसिद्धलक्षणनिरासः।

एवमसिद्धलक्षणे व्यवस्थिते वाधोऽयमभिधीयते। एतेन कीदृशमसिद्धलक्षणं व्यवस्थापितमायुष्मता भवति। व्याप्तत्वपक्षधर्म्मत्वाभ्यामप्रमितोऽसिद्ध इति तावत् विरुद्धादिषु लक्षणं किन्नास्ति किं वाऽस्ति। यदि नास्ति तदा व्याप्तिपक्षधर्म्मताभ्यां प्रमिता विरुद्धादयः प्राप्नुवन्ति। अथास्ति तदा तेऽप्यसिद्धभेदाः प्राप्ताः। अथैतस्मिँल्लक्षणे सत्यपि ते नासिद्धान्तर्भूताः तर्हि लक्षणमिदमतिव्यापकमापन्नम्। अथ यत्र व्याप्तिपक्षधर्म्म-

त्वाप्रमितत्वं साक्षादुद्भाव्यते तदसिद्धमित्युच्यते तर्हि लक्षणान्तरमिदमुक्तं स्यात् । नचैतदपि युक्तं यत्र व्याप्यत्वासिद्धेर्व्याप्तिविरहमात्रं प्रतिपाद्यते तत्र व्याप्तिपक्षधर्म्मताप्रमितत्वानां हानं मिलितं नोद्भाव्यत इति नासावसिद्धः स्यात् । एवं सर्व्वासिद्धाविशेषमुदाहृत्य प्रसङ्गो विधातव्यः ।

* एवमिति * एतावता प्रबन्धेन किं व्याप्तत्वपक्षधर्मत्वाभ्यामप्रमितत्वमसिद्धिलक्षणं व्यवस्थापितं भवति किं वा व्याप्त्यादिविरहो यत्र साक्षादुद्भाव्यते सोऽसिद्ध इति विकल्पाभिप्रायेणाह * एतेनेति * प्रथमकल्पमपाकर्तुं द्वेधा विकल्पयति * व्याप्तेति * प्रथममपाकरोति * यदीति * भावाभावयोरन्यतरनिषेधेऽन्यतरविधिध्रौव्यात् व्याप्तत्वपक्षधर्मत्वाभ्यां प्रमितत्वा सम्यग्हेतवः स्युरित्यर्थः । द्वितीयं शङ्कते *अथेति* आभासत्रैविध्यभङ्गप्रसञ्जनेन परिहरति * तेऽपीति * विरुद्धादयो ऽसिद्धान्तर्भूतास्तल्लक्षणवत्वात्स्वरूपासिद्धिवदित्यर्थः । विपक्षबाधकाभावेनाप्रयोजकतां शङ्कते * अथेति * लक्षणस्यातिव्यापकत्वप्रसङ्गो बाध इति परिहरति * तर्हीति * अनसिद्धे विरुद्धादावसिद्धलक्षणगमनादतिव्याप्तिरित्यर्थः। उक्तातिव्याप्तिपरिहाराय द्वितीयं शङ्कते * अथेति * यत्र व्याप्त्यादिविरहः साक्षादुद्भाव्यते सोऽसिद्धो यत्र तल्लिङ्गोपन्यासः स विरुद्धादिरित्यर्थः । निर्विशेषणं लक्षणम-

भिधापातिव्याप्त्या दूषिते तस्मिन्विशेषणप्रक्षेपे हेत्वन्तरनिग्रहः स्यादिति परिहरति * तर्हीति * लक्षणत्वमुपगम्य निग्रहो ऽस्त्वादि, तदपि न युक्तमित्याह * न चेति * तथा हि व्याप्यत्वपक्षधर्म्मताप्रमितत्वानां ज्ञानं मिलितमसिद्धिलक्षणमुत प्रत्येकमिति विकल्प्य प्रथमेऽव्याप्तिरित्याह * यत्रेति * स श्यामो मैत्रतनयत्वादित्यादावुपाध्युद्भावनेन व्याप्तिविरहमात्रं प्रतिपाद्यते नासावसिद्धः स्यादिति सम्बन्धः । तदुपपादनं तत्रेत्यादि मिलितलक्षणाभावादित्यर्थः । उक्तामव्याप्तिं स्वरूपासिद्धावतिदिशति * एवमिति * गगनारविन्दं सुरभि अरविन्दत्वादित्याश्रयासिद्धे पक्षधर्मताविरहमात्रमुद्भाव्यते शब्दो नित्यश्चाक्षुषत्वादिति स्वरूपासिद्धे च तथा धूमस्याग्निना व्याप्यत्वं पक्षनिष्ठत्वं वा येन न प्रमितं तेन प्रमित्यभावमात्रमुद्भाव्यत इति प्रत्येकमिलितलक्षणाव्याप्तिरित्यर्थः ।

प्रत्येकपक्षं शङ्कते ।

५९३ प्रत्येकपक्षशङ्का तत्परिहारौ ।

अथ प्रत्येकमिदं लक्षणं व्याप्त्यप्रमिततया साक्षादुद्भाव्योऽसिद्धः पक्षधर्म्मत्वाप्रमिततया चेति । तर्हि अन्योन्योदाहरणाव्याप्तेरव्यापकत्वमुभयोः । अथोभयोरप्यसिद्धविशेषलक्षणत्वादन्योन्यविषयाव्यापकता न दोषायेति मन्यसे । न । सामान्यलक्षणे निर्वक्तुमशक्य

कथमिदं विशेषलक्षणमपि घटते । अथानुमितेरसाधारण-हेतुव्यतिरेकोद्भावनं सामान्यलक्षणमस्तु । मैवम् । सत्प्रतिपक्षोद्भावनं तथेत्यतिव्याप्तेः । भावरूपतया हेतुविशेषणे च निरुपाधित्वव्यतिरेकोद्भावनाव्याप्तेः स्वरूपासिद्धिः सर्वप्रमाणसाधारणो दोष इत्यत्र तदुद्भावनाव्याप्तेश्च । अथोच्यते व्याप्तत्वपक्षधर्म्मताभ्यां प्रमितत्वस्य व्यतिरेको यत्र साक्षादुपन्यस्यते सोऽसिद्ध इति इदमप्यलक्षणमव्यापकत्वात् । यत्र व्याप्त्यादिव्यतिरेक उपन्यस्यते तत्र वस्तुगत्या व्याप्तत्वप्रमितेर्व्यतिरेकोऽस्तु नाम नतूपन्यस्यतेऽपि, प्रयोजनाभावात् । व्याप्तिव्यतिरेकदर्शनादेवानुमानाङ्गवैकल्यात्मनो दोषस्योद्भावनपर्य्यवसानात् । तस्मात्तत्र प्रमितत्वव्यतिरेकोद्भावनं नास्तीत्यव्यापकत्वं दोषः ।

* अथेति * कथं प्रत्येकमिदं लक्षणमभिधानीयमिति तत्प्रकारं दर्शयति * व्याप्तीत्यादिना * किमिदमसिद्धिमात्रलक्षणमुत विशेषस्येति विकल्प्य प्रथमं प्रत्याह * तर्हीति * असिद्धविशेषलक्षणमिदमिति द्वितीयं शङ्कते * अथेति * असिद्धसामान्यलक्षणान्तरं किन्नास्त्युतास्ति प्रथमेऽसम्भव इत्याह * नेति * सामान्यतो ज्ञाते विशेषजिज्ञासनात्सर्वत्र प्रमाणादौ सामान्यलक्षणकरणपूर्वकं विशेषलक्षणप्रणयनादन्यथा सोऽपि प्रयासो व्यर्थः स्यादित्याशयः ।

असिद्धेः सामान्यलक्षणान्तरमस्तीति द्वितीयं शङ्कते * अथेति * व्याप्तिविरहः पक्षधर्मताविरहो वाऽसिद्धिरिति विशेषं नब्रूमोऽपि त्वनुमितेः साधारणकारणविरह इति नैवमव्याप्तिरुभयोरपि साधारणकारणव्यतिरेकत्वादित्यर्थः। यथाश्रुतमिदं लक्षणमुत भावत्वविशेषितमाद्येऽ तिव्याप्तिरित्याह * मैवमिति * तार्किकपक्षे प्रतिबन्धाभावस्य कारणत्वात्सत्प्रतिपक्षे तदभावस्वरूपप्रतिबन्धहेतूद्भावनमनुमितिसाधारणहेतुव्यतिरेको भवतीत्यतिव्याप्तिरित्यर्थः। द्वितीयं प्रत्याह * भावेति * सत्प्रतिपक्षनिवृत्तये तु भावरूपहेतुव्यतिरेक इति विशेषणं यद्युपादीयते तर्हि व्याप्तेर्निरुपाधित्वेन तद्व्यतिरेकसोपाधित्वोद्भावनाव्याप्तिः व्याप्तेर्भावरूपत्वाभावादित्यर्थः। अव्याप्त्यन्तरमाह * स्वरूपेति * अनित्यः शब्दश्चाक्षुषत्वादित्यत्र स्वरूपासिद्धिरुद्भाव्यते न च तत्रानुमितिसाधारणहेतुव्यतिरेकत्वमस्ति स्वरूपासिद्धेः सर्वप्रमाणसाधारणकारणत्वादित्यर्थः। न चान्यसाधारण्येऽप्यनुमितिसाधारण्याविरोध इति वाच्यम्। अदृष्टादिव्यतिरेकोद्भावनस्याप्येवमसिद्धत्वप्रसङ्गादिति। प्रत्येकमिलितपक्षोक्ताव्याप्तिपरिहाराय विशेषं शङ्कते * अथेति * व्याप्तत्वपक्षधर्मत्वप्रमितत्वानां त्रयाणां व्यतिरेकस्य प्रत्येकस्य मिलितस्य वा यद्यप्यव्याप्तिस्तथापि व्याप्तत्वपक्षधर्मत्वाभ्यां पद्विशिष्टं प्रमितत्वं तद्व्यतिरेकस्य लक्षणत्वे नाव्याप्तिरित्याशयः। अव्याप्त्यैव दूषयति * इदमिति * अव्याप्तिमेवोपपादयति * यत्रेति * स श्यामो मैत्रतनयत्वादित्यत्र व्याप्तिविरहः

आकाशारविन्दं सुरभि अरविन्दत्वादित्यत्र पक्षधर्मताविरहः। यत्र व्याप्त्यादिव्यतिरेक उपन्यस्यते तत्राव्यापकत्वं दोष इति सम्बन्धः । न तत्राव्याप्तिर्वस्तुनो व्याप्तत्वप्रमितिव्यतिरेकस्य सत्त्वादित्यत आह * तत्रेति * अनुपन्यासे हेतुः * प्रयोजनेति * प्रमितत्वव्यतिरेकोपन्यासे ऽस्ति प्रयोजनमनुमानाङ्गवैकल्यमित्यत आह * व्याप्तीति * तावता ऽनुमानाङ्गवैकल्ये सम्भवति न प्रमितत्वव्यतिरेक उपन्यसनीय आधिक्यापातादतोऽव्याप्तिरिति निगमयति * तस्मादिति *

विशिष्टस्य विशेषणविशेष्याधीनत्वात् विशेषणादिव्याप्त्यादिमात्रविरहोद्भावनं व्याप्तिपक्षधर्मताविशिष्टप्रमितत्वव्यतिरेकोद्भावनपर्यवसाय्येवेति मन्वानो ऽव्याप्तिपरिहारं चोदयति ।

५९४ शङ्कापरिहारौ ।

ननु विशेषणाद्यभावोऽपि वस्तुतो विशिष्टाभाव एवेति नोक्तदोषः । न । यदि विशेषणाद्यधिकोविशिष्टस्तदा तदभावभेदोऽपि स्यात् । अथ नाधिक स्तदा विशेषणाभावत्वान्नान्या सा विशिष्टाभावतेति विशेष्याभावस्यापि तथात्वे पृथगेव विशिष्टाभावत्वार्थ स्तयोरित्यननुगम एव । स्वार्थानुमित्यसिद्ध्यव्याप्त्यनुद्भावनादिति ।

* नन्विति * विशेषणविशेष्यतत्संसर्गेभ्योऽन्यो विशिष्ट उत तन्मात्र इति विकल्प्य प्रथमं प्रत्याह * ने-

ति * प्रतियोगिभेदस्याभावभेदकत्वाद्विशिष्टाभावो विशेषणाद्यभावादन्य एवेत्यव्याप्तिस्तदवस्थेत्यर्थः। पदार्थनियमवादिपक्षे विशिष्ट औपाधिको वा पदार्थान्तरमिति द्वितीयं शङ्कते *अथेति * प्रतियोग्यैक्ये तदभावैक्यमपि स्यादिति परिहरति * तदेति * अस्य-विशिष्टाभावस्य विशेषणाभावत्वान्नान्या विशिष्टाभावतेति सम्बन्धः। न च प्रतियोग्यैक्येऽपि प्रागभावप्रध्वंसवदत्राभावभेदः स्यादिति वाच्यम् । तत्रापि कालभेदेन तद्विशिष्टप्रतियोगिभेदस्यावश्योपगन्तव्यत्वात् । विशिष्टाभावो विशेषणाभाव एव भवतु तावता तव को लाभ इत्यत आह * इति विशेष्येति * विशिष्टस्य विशेषणाभेदात्तदभावाभेदवद्विशेष्यविशिष्टयोरभेदात्तदभावाभेदोऽपि स्यादेवं च व्याप्तत्वपक्षधर्मत्वविशिष्टप्रमितत्वव्यतिरेको विशेषणाभावो विशेष्याभावश्चेति तयोः प्रत्येकं मिलिततया वा लक्षणत्वेऽव्याप्तिरित्यर्थः। परोपदेशनिरपेक्षतया यत्र प्रयुज्यते तत्स्वार्थानुमानं तत्र व्याप्त्यादिविरहसम्भवात्तत्राव्याप्तिरित्याह * स्वेति * उपन्यासस्य वाक्यप्रयोगात्मकस्य परप्रतिपत्त्यर्थतया तदनपेक्षस्वार्थानुमित्याभास उद्भाव्यत इति विशेषणांशाभावादित्यर्थः ।

स्वार्थानुमित्यसिद्धावरोधाय व्याप्तत्वपक्षधर्मत्वविशिष्टप्रमितत्वव्यतिरेको यत्र साक्षादुपन्यसितुं योग्यः सोऽसिद्ध इति शङ्कते ।

५९५ पुन. शङ्कापरिहारौ।

अथ ब्रूषे यत्र व्याप्तत्वपक्षधर्म्मत्वप्रमितेर्व्यतिरेकः साक्षाच्छक्योपन्यासस्तदासिद्धं शक्योपन्यासत्वस्यानुपन्यस्तेऽपि सम्भवान्नास्त्यव्यापकतेति। नैतदपि युक्तम्। तथाहि शक्योपन्यासत्वं किं शक्यस्वरूपनिर्देशत्वमात्रं, उत शक्यप्रमापणत्वम्। आद्येऽनैकान्तिकादावपि व्याप्तिशून्यत्वं शक्यप्रतिज्ञम्भवत्येव। द्वितीयेऽपि यदि साक्षादिति प्रत्यक्षेणेत्यर्थः तदा प्रत्यक्षेण प्रमापणीयत्वं व्याप्तिपक्षधर्म्मताप्रमितिविरहस्य प्रत्यक्षप्रतियोगिकाभावप्रत्यक्षतावादिमते विरुद्धादावप्यस्तीत्यतिव्याप्तिः। अन्यमते न क्वचिदपीति सर्व्वाव्याप्तिः।

* अथेति * योग्यत्वस्य कार्यगम्यत्वात् तदनुपन्यासे तद्योग्यत्वमेव कुतस्तवाह * शक्येति * यागादेः स्वर्गसाधनत्वयोग्यत्वं न कार्यादवगम्यत इतरेतराश्रयत्वप्रसङ्गान्मानान्तराचदधिगमोऽत्रापि न दण्डवारित इत्यर्थः। विशेषान्तरोपादाने हेत्वन्तरं निग्रहः स्यादिति दूषयति * नेति * दोषान्तरं वक्तुं विकल्पयति * तथाहीत्यादिना * शक्य उपन्यासः स्वरूपनिर्देशो यस्यस तथोक्तः। मात्रमिति प्रमापणव्यावृत्तिः। शक्यं परं प्रति प्रमाणं यस्य तत्तथोक्तं तद्भावस्तत्त्वम्। प्रथमेऽतिव्याप्तिरित्याह * आद्य इति * अनैकान्तादौ व्याप्तिशून्यत्वमस्ति तच निर्देष्टुं शक्यमे-

येति तत्रातिव्याप्तिरित्यर्थः। द्वितीयेऽपि साक्षादि-ति प्रत्यक्षेणेत्यर्थः किं वा लिङ्गाद्यनपेक्षत्वं साक्षा-दर्थ इति विकल्प्य प्रथममनुवदति * द्वितीयेऽपीति * किमिदं प्रत्यक्षाभाववादिनोच्यते किं वा षष्ठप्रमाण-वादिनेति विकल्प्य प्रथमं प्रत्याह * तदेति * प्रत्यक्ष-प्रतियोगिधर्म्मिकोऽभावः प्रत्यक्ष इति यो मन्यते तन्मते व्याप्त्यादिप्रमितिविरहस्य विरुद्धादावपि प्रमापणी-यत्वमस्तीत्यतिव्याप्तिः स्याद्द्वितीये लक्षणासम्भव इति द्वितीयं प्रत्याह * अन्येति * षष्ठप्रमाणवादि-मतेऽसिद्धेऽपि व्याप्त्यादिप्रमितिव्यतिरेकस्य प्र-त्यक्षता नास्त्यनुपलब्धिगम्यत्वनियमादतः सर्वाऽव्या-प्तिरसम्भव इत्यर्थः।

उक्तातिव्याप्त्यसम्भवपरिहाराय विशेषणं शङ्कते

५९६ विशेषणेऽपि दोषाऽपरिहारः।

अथ व्याप्तिपक्षधर्म्मताविरहस्यापि प्रत्यक्षप्रमापणी-यता विवक्षिता सा न युक्ता उक्तलक्षणवाक्यस्य व्या-प्तिपक्षधर्म्मताविरहानभिधायित्वात्। तद्विरहेऽपि तात्प-र्य्याभ्युपगमे प्रत्येकसमुदितलक्षणताविकल्पेनाव्यापक-त्वापातात्। अतीन्द्रियपक्षादिविरहे च विषये तदभावाद-व्यापकत्वापत्तेः।

* अथेति * व्याप्तिपक्षधर्मतयोर्विरहस्य तत्प्रमि-तिविरहस्य च यत्र साक्षाच्छब्दोपन्यासस्तं तदासि-द्धमिति नैयायिकेनोच्यते नातोऽसम्भवो नाप्यतिव्या-

प्तिरनैकान्तादौ तत्प्रमितिविरहस्य मानसत्वेऽपि व्याप्तिविरहस्य प्रत्यक्षत्वाभावादित्यर्थः । लक्षणवाक्यासामर्थ्येन दूषयति *सेति* कुत इत्यत आह *उक्तेति* व्याप्तत्वपक्षधर्मत्वप्रमितेर्व्यतिरेक इति वाक्यस्य व्याप्त्यादिविरहाभिधाने ऽसामर्थ्यादित्यर्थः । व्यतिरेकपदस्य व्याप्तत्वपक्षधर्मत्वप्रमितत्वैः प्रत्येकं सम्बन्धो विवक्षित इत्यत आह * तदिति * त्रयाणामभावस्य प्रत्येकं लक्षणत्वेऽव्याप्तिर्मिलितस्य तथात्वेऽसम्भव इत्यर्थः।अव्याप्त्यन्तरमाह *अतीन्द्रियेति* अनित्याः परमाणवः सर्वगतत्वादिति मीमांसकेन यदा प्रयुज्यते तदा ऽतीन्द्रियपक्षधर्मत्वविरहस्तथा वन्ध्यासुतश्चतुर्वेदाभिज्ञः ब्राह्मणीप्रसूतत्वादित्यतीन्द्रियव्याप्तिविरहः । एतदुक्तं भवति । अतीन्द्रियपक्षहेत्वोः प्रत्यक्षप्रमापणीयत्वाभावात्तद्धर्मत्वादिविरहपक्षधर्मत्वव्याप्तिव्यतिरेकस्य प्रत्यक्षप्रमापणीयत्वाभावात्त्र व्याप्तत्वपक्षधर्मत्वप्रमितेर्व्यतिरेकः प्रत्यक्षेणाशक्योपन्यास इति लक्षणाव्याप्तिरिति ।

उक्तं दूषणं द्वितीयकल्पेऽप्यतिदिशति ।

१९७ दूषणातिदेशः ।

एतेन यदि लिङ्गानपेक्षत्वं साक्षादर्थः सोऽपि निरस्तः । अथोच्यते यत्र व्याप्तत्वपक्षधर्मत्वप्रमितेर्व्यतिरेकः प्रतिवादनीयान्तरानपेक्षतया तत्प्रमापकस्य लिङ्गस्योपन्यासव्यतिरेकेण शक्योद्भावनः तदासिद्धमिति। नैतदप्युपपन्नम् । अनिव्यापकत्वात् । तथा हि-विरुद्धादौ सा-

क्यते तात्रद्विपक्षवृत्तिदण्डभूततर्काभावात् सोपाधिताऽत्र-गन्तुम् । यदाह "यत्रानुकूलस्तर्को नास्ति सोऽप्रयोजक" इति । तस्मात्तेषामप्येवं लक्षणयोगित्वादसिद्धत्वप्रसङ्गः । नच तादृशतर्काविषयत्वमपि प्रतिपादनीयान्तरानपेक्षव्याप्तिपक्षधर्म्मताप्रमितिविरहप्रमापकलिङ्गभूतमेवेति वाच्यम् । तथा सति विरुद्धत्वादिवृत्तस्य हेत्वाभासान्तरत्वप्रसङ्गात् ।

* एतेनेति * अतीन्द्रियपक्षधर्म्मत्वादिविरहस्य लिङ्गापेक्षतया तत्राव्याप्तिरित्येतेनैवेत्यर्थः । उक्ताति-व्याप्तिपरिहाराय विशेषणान्तरं शङ्कते * अथेति * यत्र व्याप्तत्वपक्षधर्म्मत्वप्रमितेर्व्यतिरेको लिङ्गस्योपन्यासव्यतिरेकेण शक्योद्भावनस्तत्र हेतुस्तत्प्रमापकत्वस्य प्रतिपादनीयान्तरानपेक्षयेति । न चैवमतिव्याप्तिर्विरुद्धादौ विरुद्धत्वसव्यभिचारत्वादिलिङ्गोपन्यासाभावाव्याप्तिरतीन्द्रियपक्षधर्मत्वादिविरहे तत्र पक्षादिविरहस्यैव लिङ्गान्तरापेक्षतया तदवगमे सति व्याप्त्यादिव्यतिरेकावगमकलिङ्गानुपन्यासादित्यर्थः । यद्वा यत्र व्याप्तत्वपक्षधर्मत्वप्रमितेर्व्यतिरेकः प्रतिपादनीयान्तरानपेक्षतया यत्प्रमापकं लिङ्गं तदुपन्यासव्यतिरेकेणेति सम्बन्धः । विरुद्धादौ प्रतिपाद्यान्तरापेक्षविरुद्धत्वाद्युपन्यासान्नातिव्याप्तिर्न वा ऽतीन्द्रियपक्षधर्मताविरहादावव्याप्तिस्तल्लिङ्गस्य प्रतिपाद्यान्तरापेक्षत्वाभावेन तस्य व्याप्तिर्नावधारिता तं प्रति तस्याः

प्रतिपादनीयत्वादित्यर्थः । नेदं लक्षणमतिव्याप्तत्वादिति परिहरति * नेति * विरुद्धादौ प्रतिपादनीयान्तरानपेक्षविरुद्धत्वादिलिङ्गोपन्यासेन व्याप्तत्वादिप्रमितिव्यतिरेकस्य शक्योद्भावनत्वे कथमतिव्याप्तिरित्यत आह * तथा हीति * अनित्यः शब्दोऽकृतकत्वादनित्यः शब्दः प्रमेयत्वादित्यादिविरुद्धादौ विपक्षबाधकतर्काभावादपि व्याप्तिविरहस्य शक्यावगमत्वादतिव्याप्तिरित्यर्थः । विपक्षबाधकतर्काभावो विरुद्धत्वादिवद्व्याप्तिव्यतिरेकगमक इत्यत्रोदयनसंवादमाह * यत्रेति * अनुकूलतर्कः पक्षे स एव प्रतिकूलो विपक्षे स यत्र हेतुत्वाभिमते नास्ति सो ऽप्रयोजको व्याप्तिरहित इत्यर्थः । उक्तलक्षणसङ्गृहीतत्वाद्विरुद्धादेरसिद्धान्तर्भावः स्यादित्युपसंहरति * तस्मादिति * विपक्षबाधकतर्कागोचरत्वं प्रतिपादनीयान्तरानपेक्षव्याप्तिपक्षधर्म्मताप्रमितिव्यतिरेकालिङ्गमुपन्यस्यत इति नातिव्याप्तिरित्यत आह * न चेति * कुतो न वाच्यमित्यत आह * तथेति *

व्याप्त्यादिभङ्गलिङ्गत्वाद्विरुद्धादिवत्तर्काभावोऽपि हेत्वाभासान्तरं स्यात् न च तस्य विरुद्धादावन्तर्भाव एवं सति विरुद्धेऽनैकान्तादेरन्तर्भावापाताद्भावमतिप्रसङ्गो दोषाय विरुद्धादेरसिद्धलक्षणोपपन्नत्वेनासिद्धत्वस्यापि सम्भवादिति शङ्कते ।

५९८ तर्काभावस्यहेत्वाभासान्तरत्वशङ्कापरिहारः ।

अथोच्यते तथोपन्यस्यमानं तदसिद्धम्भवतु साध्य-

विपरीतव्याप्तित्वादिना तु दूष्यमाणं विरुद्धाद्येव तत्, उपन्यासप्रकारभेदाच्च भेदव्यवस्था हेत्वाभासानाम्। नह्यत्र गोत्वाश्वत्वादिवदत्यन्तासङ्कर इष्यते। किं नाम? प्रमाणप्रमेयभाववत् प्रकारासङ्करमात्रमिति। तदप्ययुक्ताभिधानम्। वक्तव्यं हि केन प्रकारेणासिद्धत्वम्भवति न तावदुक्तलक्षणेन, तथाशक्योद्भावनत्वस्य विरुद्धोचितप्रकारेणोपन्यस्यमानस्य सम्भवात्। सर्वथा निष्प्रकारकस्यासिद्धधर्म्मिणस्तदुद्भावनाशक्यत्वात्। नच तथाशक्योद्भावनत्वमप्युद्भाव्यते असिद्धेः येन प्रकारभेदव्यवस्थितिरनेन भवेत्। नच शक्योद्भावनपदस्थाने उद्भाव्यमानत्वमिति कृते निस्तारः सोपाधित्वाद्युद्भावने प्रमित्यभावोद्भावनं व्यर्थत्वान्न क्रियत इति तदव्यापकत्वं प्रसज्येतेति प्रागेवोक्तत्वादिति।

*अथेति* तुल्यतया प्रमाणप्रमेयव्यवहारवद्विरुद्धादावसिद्धत्वविरुद्धत्वादिव्यवहारोऽस्ति प्रवृत्तिनिमित्तभेदादेव हेत्वाभासभेदव्यवस्थेत्यर्थः *तथेति* प्रागुक्तप्रकारपरामर्शः। तर्हि विरुद्धादित्यादिलयमियादित्यत आह *साध्येति* यत्र साधकतर्काभावेन सोपाधिता गम्यते तदसिद्धं तदेव पुनः साध्यविरुद्धत्वादिना दूष्यमाणं विरुद्धादि भवतीत्यर्थः। उपन्यासभेदेऽपि वस्तुत एकत्वात्कथं हेत्वाभासव्यवस्थेत्यत आह * उपन्यासेति * उपन्यासभेदौपाधिक एव हेत्वाभासे भेद

इत्यर्थः । अनौपाधिक एव भेदः कस्मान्नेष्यते हेत्वाभासानामित्यत आह * न हीति * जलमनग्नि धूमवत्त्वादित्यत्र व्याप्त्यादिविरहस्य साध्यविपरीतव्याप्तत्वेन सङ्करात्तथा नित्यः शब्दश्चाक्षुषत्वादित्यादावप्यसिद्धसाङ्कर्यादित्यर्थः । उक्तमर्थं सदृष्टान्तमुपपादयितुं परमुखेन पृच्छति *किमिति* स्वरहस्यमाह *प्रमाणेति* इन्द्रियादौ प्रमाकरणत्वेन प्रमाणत्वं तद्विषयत्वेन प्रमेयत्वं च व्यवह्रियते यद्वदित्यर्थः । खण्डनवादिनं प्रति प्रमाणप्रमेयवदिति कथं सिद्धवद्दृष्टान्तमुदाहरसीति दूषयति * तदिति * किं च प्रकारासङ्करमात्रमिति ब्रुवता ऽसिद्धव्यवहारोचितप्रकारो वक्तव्यः स च वक्तुमशक्य इत्यभिप्रेत्याह * वक्तव्यं हीति * यत्र व्याप्तत्वपक्षधर्मत्वप्रमितेर्व्यतिरेको लिङ्गस्योपन्यासव्यतिरेकेण शक्योद्भावनः सोऽसिद्ध इत्याशङ्क्याह * न तावदिति * कुत इत्यत आह * तथेति* साध्यविरुद्धव्याप्तत्वादिप्रकारेणोपन्यस्यमानस्यापि तथानुद्भावनेऽपि तथा शक्योद्भावनत्वमस्तीत्यतिव्याप्तेरेवेत्यर्थः । यत्र साध्यविपरीतव्याप्तत्वादिप्रकारो नास्ति व्याप्तत्वपक्षधर्मत्वप्रमितेर्व्यतिरेकश्च लिङ्गोपन्यासव्यतिरेकेण शक्योद्भावनः सो ऽसिद्धप्रकार इत्यत आह * सर्वेति * सर्वथा विरुद्धादिप्रकारहीनस्यासिद्धधर्मिणस्तदुद्भावनस्य व्याप्त्यादिप्रमितिव्यतिरेकोद्भावनस्याशक्यत्वात्क्वचिदसङ्करेऽपि सर्वत्रासाङ्कर्याभावादित्यर्थः । यद्यपि विरुद्धव्यवहारोचितप्रकारादावपि तथा शक्योद्भावनत्व-

मस्ति तथाऽपि तन्नोद्भाव्यते यत्र च तदुद्भाव्यते सोऽसिद्धप्रकार इति व्यवस्थेत्यत आह * न चेति * स्वार्थानुमानासिद्धाव्याप्तिरित्यर्थः । तर्हि व्याप्तत्वपक्षधर्मत्वप्रमितेर्व्यतिरेको यत्र लिङ्गापन्यासव्यतिरेकेणोद्भाव्यमानः सोऽसिद्ध इति कृते निस्तारो विरुद्धादावनुद्भाव्यमानत्वादिति समनन्तरोक्ताव्याप्तिमपश्यन् केवलातिव्याप्तिपरिहारमाशङ्कते यस्तं प्रत्याह * न चेति * कुतो न निस्तार इत्यत आह *सोपाधीति * सोपाधित्वं व्याप्त्यभावः व्याप्तिविरहपक्षधर्म्मताविरहदर्शनेनैवानुमानाङ्गवैकल्यात्मनो दोषस्योद्भावनपर्यवसानाद्वैयर्थ्यात् प्रमित्यभावो नोद्भाव्यत इति कृत्वा तस्य लक्षणस्याव्यापकत्वं व्याप्त्यादिविरहमात्रतयोद्भाव्यमानासिद्धम्प्रत्यव्यापकत्वं स्यादिति प्रागुक्तमित्यर्थः ।

इदानीं सूत्रनिःसृतलक्षणाक्षिरस्यति ।

९९९ सूत्रोक्तासिद्धलक्षणानिरासः ।

एतेनासिद्धः साध्यसम इति प्रत्युक्तम् । यथा कथञ्चित्साध्यसाम्यस्य सर्वसाधारणत्वात् । साम्यविशेषस्य चोक्तप्रकारपर्य्यवसानव्यतिरेकेणान्यस्यासम्भवात् लक्षणान्तरेषु चोक्तदूषणप्रकारा यथासम्भवमिह योजनीया इत्यलं विस्तरेणेति ।

* एतेनेति * साध्येन हेतोः साम्यं येन केन चिदाकारेण किं वा साम्यविशेष इति विकल्प्य प्रथमं प्रत्याह * यथेति * अस्तित्वज्ञेयत्वादिना साध्यसाम्यं

विरुद्धादावपि तुल्यमित्यर्थः। यथा साध्यं साध्येन व्याप्ततया न प्रमितं एकत्वाद्यथा च पक्षधर्मतया न प्रमितं सन्दिग्धत्वादेवंरूपत्वमिह साम्यं विवक्षितमिति द्वितीयमाशङ्क्याह * साम्येनि * एवंविधसाम्यविशेषस्य व्याप्तत्वपक्षधर्मत्वाभ्यान्न प्रमित इत्युक्तप्रकारः पर्यवसायित्वात्तस्य च खण्डितत्वादित्यर्थः। अनिश्चितपक्षवृत्तिरसिद्ध इत्यादिलक्षणान्तरे को दोपस्तत्राह * लक्षणेति * व्याप्तत्वपक्षधर्मताप्रमितिव्यतिरेकस्य तत्राप्यवश्यं वक्तव्यत्वादुक्तदोपाः प्रादुष्युरेवेति यावत्। किं चेदमनिश्चितत्वमप्रमितत्वमुत अज्ञातत्वं उत सन्दिग्धत्वमाद्ये दत्तमेवोत्तरं द्वितीये भ्रान्त्याऽपि पक्षधर्मतया विदिते सोपाधिकादावव्याप्तिस्तृतीये पक्षधर्मत्वादिविरहात्मनानिश्चितचाक्षुपत्वादावव्याप्तिः व्यर्थविशेषणविशेष्यासिद्धादौ चेत्यादि बहुवक्तुं शक्यमपि नोच्यते ग्रन्थगौरवभयादित्युपसंहरति * इत्यलमिति *

विरुद्धखण्डनानि प्रस्तावयति।

१०० विरुद्धखण्डनारम्भः।

अपि च। सिद्धलक्षणविशेषणेषु प्रमाणव्यवच्छेदकव्यतिरिक्तेन यद्व्यवच्छेद्यं तत् किं केनचिद्विरुद्धं केनचिदन्यदिति चेत्। विरुद्धमेव किमुच्यते। तथा हि—साध्यविपरीतव्याप्तो विरुद्ध इत्याहुः। तन्न। साध्यव्यतिरेकेण हि व्याप्तिः कार्त्स्न्येन वा अनौपाधिको वा स्वाभाविको वा सम्बन्ध इत्याद्युक्तिभिः सविशेषेण सहभाव एव निरु-

ष्यते। तथा सति च साध्यव्यतिरेकेण सामानाधिकरण्यमेव विशेषणविशेषयुक्तं विरुद्धत्वमित्युक्तं स्यात्। यदा चैवं तदा साध्यव्यतिरेकसामानाधिकरण्यमेव हेतोरगमकत्वे समर्थमिति तन्मात्रमुच्चार्यं वृथा विशेषणप्रक्षेपः। तथा चानैकान्तिक एवायं स्यात्।

* अपि चेति * व्याप्तत्वपक्षधर्म्मत्वप्रमितिव्यतिरेको यत्र लिङ्गस्योपन्यासव्यतिरेकेण शक्योद्भावनस्तदासिद्धमित्यादिलक्षणेषु व्यतिरेक इत्यन्तं विशेषणं प्रमाणव्यवच्छेदकं तदतिरिक्तं विशेषणद्वयमस्ति तेन किं व्यावर्त्यं न किं चिद्विरुद्धादेरप्यसिद्धत्वात् व्यावर्त्तयितुमशक्यत्वादितरेतराश्रयश्च विरुद्धादौ सिद्धे तद्व्यावर्तनेनासिद्धसिद्धिरसिद्धसिद्धौ च तद्व्यावृत्तविरुद्धादिसिद्धिरित्याक्षेपाभिप्रायः। क्षिप्तमपि पृष्टं मत्वोत्तरमाह इतरः * केन चिदिति * लिङ्गस्योपन्यासव्यतिरेकेणेति विशेषणे न विरुद्धं व्यवच्छेद्यमनैकान्त्यादि च तुल्यत्वात्केन चिच्छक्योद्भावन इत्यनेनान्यद्व्यापकत्वं स्वार्थानुमानासिद्ध इत्याशयः। विरुद्धस्यैव निरूपणसरणिमधिरोढुमनर्हतया परास्तत्वमित्यभिप्रेत्याह * विरुद्धमिति * विरुद्धानिरुक्तिमेव मति पादयति * तथा हीति * साध्यस्य विपरीतो ऽभावस्तद्विरुद्धो वा धर्म्मस्तेन व्याप्तो विरुद्ध इत्याहुरुदयनादयः। विपर्ययव्याप्तत्वेन निश्चितो विरुद्धो हेत्वाभास इति वचनात्पक्षविपक्षयोरेव वर्त्तमानो विरुद्ध इति भूषणकृतां पक्षस्याप्यर्थतो न भेदः।

विपर्ययसाहचर्यमात्रमनैकान्तेऽप्यस्तीति तत्परासाय व्याप्त्यविशेषणं भङ्क्ते भणति * तत्रेति * लक्षणस्य व्यर्थविशेषणतां वक्तुं व्याप्तिपदार्थं कथयति * साध्येति * साध्यव्यतिरेकेण हि हेतोर्व्याप्तिरित्याद्युक्तिभिः सविशेषणः सहभाव एव निरुच्यते इति सम्बन्धः। *कार्त्स्न्येनेति* सार्वत्रिक इत्यर्थः।सर्व एते प्रकारा अनुमानप्रस्तावे दर्शिताः। आदिपदेन यत्र विपक्षे हेतोर्वृत्तौ बाधकमस्ति तयोः सहभावो गृह्यते । सहभाव एव व्याप्तिपदार्थो निरुच्यतां का नाम वस्तुक्षतिरित्यत आह * तथेति * साध्याभावेन हेतोः सामानाधिकरण्यं साहचर्यं सम्बन्धो विशेषणकार्त्स्न्यादिना युक्ता व्याप्तिः स्यादित्यर्थः । यदर्थमुपोद्घातः कृतस्तदिदानीं दर्शयति * यदीति * हेतोः साध्याभावसम्बन्धमात्रस्यैवानुमानाङ्गवैकल्यदोषप्रतिपादनसामर्थ्यात्तन्मात्रमुद्भाव्यं, न हि भवति साध्याभावसहचरितः साध्याविनाभूतश्चेति ततः कार्त्स्न्येत्यादिविशेषणप्रक्षेपो मुधा। यद्यपि व्याप्तिरित्युक्तं निर्विशेषणं तथापि दण्डीतिवत्तदर्थनिषेधनेन सविशेषणत्वं तर्हि साध्यस्य व्यतिरेकसहचरितो विरुद्ध इत्येतावन्मात्रं ब्रूमस्तत्राह * तथा चेति * पक्षत्रयवृत्तेरनैकान्तिकस्यापि साध्यव्यतिरेकसामानाधिकरण्यमस्तीति ततो भेदो न स्यादित्यर्थः।

अनैकान्तिके व्यतिरेकसामानाधिकरण्यं तन्मात्रस्य वा गमकत्वे प्रयोजकत्वमुक्तमङ्गीकृत्य चोदयति।

६०१ अनैकान्तविरुद्धयोर्भेदशङ्कानिरासः ।

ननु साध्यव्यतिरेकसम्बन्धो यद्यपि विरुद्धानैकान्तिकयो र्द्वयोरप्यस्ति तथापि वस्तुगत्या स्वाभाविकोऽसौ विरुद्ध एवेत्येतावन्मात्रविशेषविवक्षया विरुद्धस्यानैकान्तिकाद्भेदोपन्यासः । मैवम् । दत्तोत्तरत्वात् । वस्तुगत्या सन्नप्ययं विशेषो नोद्भावनार्ह इत्युपेक्षणीय इत्युक्तम् । तथा हि नेदमस्य साधकमेतत्साध्यं प्रति विरुद्धत्वादित्यभिधीयमाने विरुद्धशब्दार्थनिरुक्तौ विशेषणाधिक्यस्योक्तन्यायेन दुष्परिहत्वात् । अत एवानैकान्तिके सन्देहेन प्रत्यवस्थानं विरुद्धे तु व्यतिरेकनिश्चयेनेति विशेषादनयोर्भेदेनोपन्यास इत्यप्यनवकाशम् । अनुमितिहेतुव्यतिरेको हि हेतुदोषोऽनुमितिहेतुश्चैको व्याप्तिस्ततस्तदभावस्य दोषत्वात्तावन्मात्रं ज्ञाप्यं तच्च हेतुविपक्षसम्बन्धोद्भावनमात्रादेव गम्यते तस्मादनुमितिहेतुव्याप्तिप्रमितिव्यतिरेकबोधनाय संशये व्यतिरेकनिश्चये चोद्भाव्यमानेऽपि कुतस्तावेवेत्यत्र विपक्षसम्बन्धमात्रानियततत्सम्बन्धावश्योपन्यास्याविति तत्सम्बन्धमात्रमेवास्तु व्याप्तेस्तत्प्रमितेश्च व्यतिरेकस्य लिङ्गत्वादुद्भाव्यं कृतमितराभ्यामिति ।

*नन्विति*तर्हि विशेषणवैयर्थ्यमित्यपि न वचनीयं विरुद्धस्यानैकान्ताद्भेदज्ञापकतयाऽन्तर्वर्तिन्या व्याप्तेरप-

न्यासादित्याह *तथाऽपीति* फलितमाह * इत्येताव- दिति* अनुपयुक्तांशसन्निध्यधिको न वक्तव्यो ज्ञेयत्वा- दिवन्निग्रहापातादिति परिहरति *मैवमिति* इक्तो- तरत्वादिति हेतुरसिद्ध इत्यत आह * वस्त्विति * व्यतिरेकसामानाधिकरण्यमेव हेतोरगमकत्वे समर्थ- मिति विशेषणप्रक्षेपो मुधेत्युक्तमित्यर्थः। नित्यः शब्दः कृतकत्वादात्मवदित्युक्ते कृतकत्वं न नित्यत्वस्य सा- धकं विरुद्धत्वादित्युपन्यासे कथं विशेषणवैयर्थ्यमि- त्यत आह * तथाहीति * साध्यनिश्चयं विरुणद्धीति विरुद्ध इति वक्तव्यं व्याप्तिरपि सार्वत्रिकत्वादिविशिष्टं साहचर्यमित्युक्तन्यायेन साहचर्यमात्रस्यागमकत्वस- मर्थत्वेन विशेषणाधिक्यं दुष्परिहरमित्यर्थः। उक्तामेव नीतिं भङ्ग्यन्तरेऽप्यतिदिशति * अत इति * अनैका- न्तिके साध्यव्यतिरेकेण व्याप्तिसन्देहेन प्रत्यवस्थानं विरुद्धे तु साध्यव्यतिरेकव्याप्तित्वनिश्चयेन प्रत्यवस्थान- मित्येवंरूपविशेषादनैकान्तविरुद्धयोर्भेदकथनमत एव विशेषणवैयर्थ्यादेव निरवकाशमित्यर्थः। अनैकान्ति- को हि साधारणोऽसाधारणश्चेति द्विधा, तत्र साधा- रणः साध्याभाववति विपक्षे पक्षे च साधारणत्वात्स- मानधर्मतया पक्षे साध्यसन्देहं करोति, असाधारणस्तु पक्षसपक्षाभ्यां साध्यतदभाववद्भ्यां व्यावृत्ततया- ऽनेकधर्मतया पक्षे साध्यसन्देहं करोति, विरुद्धस्तु व्य- तिरेकव्याप्ततया पक्षे साध्याभावनिश्चयं करोतीति तयोर्भेद इति शङ्काकृतोऽभिप्रायः। अत इति परामृ- ष्टं विशेषणवैयर्थ्यं दर्शयति *अनुमितीति* अनुमितेर्य-

रकारणं तदभावो हेतुदोष इत्यर्थः। कस्तर्ह्यनुमितिहेतुर्य- ज्ञातिरेको हेतुदोष इत्यत आह * अनुमितीति * एको व्याप्तिपरो हेतुः पक्षधर्मतेति यावत् । ततः कि- मित्यत आह * तत इति * व्याप्तिव्यतिरेकस्य हे- तुदोषत्वात्तन्मात्रमुद्भाव्यं हेतुं दूषयतीत्यर्थः। व्याप्ति- व्यतिरेकोद्भावनमेव हेतोर्विपक्षसम्बन्धनियमानियमा- भ्यामिति तदुपन्यास इत्यत आह *तच्चेति* साध्याभा- वसहचरितः साध्यव्याप्तश्चेत्यसम्भवाद्विपक्षवृत्तित्वद- र्शनेनैव व्याप्तिव्यतिरेको गम्यत इत्यर्थः । विपक्ष- सम्बन्धनियमानियमाभ्यामपि व्याप्तिव्यतिरेको ग- म्यत इति तावेवोपन्यस्याविति विपरीतं किं न स्यादित्याशङ्कोपसंहरति * तस्मादिति * तत्स- म्बन्धमात्रमेवोद्भाव्यमस्तु कृतमलमिताभ्यां व्यतिरे- कसंशयनिश्चयाभ्यामिति सम्बन्धः । तदुपपादयति *अनुमितीति* अनुमितिहेतुव्याप्तेस्तत्प्रमितेश्च व्यति- रेकबोधनाय व्यतिरेकसंशयेऽनैकान्तिके व्यतिरेकनि- श्चये विरुद्धे चोद्भाव्यमाने तावेव संशयनिश्चयौ कुत इति जिज्ञासायां विपक्षसम्बन्धमात्रं विपक्षनियतस- म्बन्धश्चायश्योपन्यस्य इति कृत्वा विपक्षसम्बन्धमात्रस्य व्याप्तेस्तत्प्रमितेश्च व्यतिरेकस्य लिङ्गत्वात्तन्मात्रमुद्भा- व्यमुपजीव्यत्वाल्लाघवाच्चेत्यर्थः ।

अभूद्भवति भविष्यतीति लुङादिलकारभेदप्रयोगे विवक्षितोऽपि भूतादिकालः प्रतीयते देवदत्तो ग्रामं गतः इत्यादौ पुंल्लिङ्गत्वादिरविवक्षितः प्रतीयते यथा वाग्निमान्पर्वत इत्यादावविवक्षितधर्मिदृष्टान्तादि

प्रतीयते तदविपक्षसम्बन्धमात्रोऽङ्गाधने ऽविवक्षितौ नियमानियमौ प्रतीयेते इत्यत आह ।

६०२ अविवक्षितनियमाऽनियमप्रतीतिनिरासः ।

लकारभेदप्रयोगे तैस्तैर्लकारैः कालविषयविशेषप्रतिपादनवद्विभक्तिभिर्लिङ्गसङ्ख्याज्ञापनवत् पर्वतोऽग्निमानित्यादौ धर्म्यादिप्रतिपादनवच्च नेदं घटते तत्र तेषामतात्पर्यविषाणामपि पदप्रयोगे विशिष्टबोधने वा अन्यथासिद्धानां यथा बोधनं तथा यद्यत्रापि व्याप्तेरतात्पर्यविषयत्वं तदनैकान्तिकसाधारण्यादेव, अन्यथोक्तदोषापरिहारादेवेति ।

* लकारेति * कालविशेषस्याविवक्षितत्वं कालसम्बन्धमात्रस्य विवक्षितत्वात्प्रथमादिविभक्तेः कर्त्रादिकारकमात्रपरत्वाल्लिङ्गादेरविवक्षितत्वमग्निपर्वतसम्बन्धस्यैव विवक्षिततया प्रत्यक्षसिद्धतया च धर्म्यादेरविवक्षितत्वमित्यर्थः कुतो न घटत इत्यत आह *तत्रेति* तत्र तेषामतात्पर्यविषयाणामन्यथासिद्धानां बोधनं यथेति सम्बन्धः । अन्यथा सिद्धिं दर्शयति * पदेत्यादिना * पदानां लिङ्गादिबोधकत्वस्वाभाव्याल्लिङ्गादेरन्यथासिद्धिः कालादिविशिष्टबोधने विशेषणतया कालादिविशेषस्यान्यथासिद्धिरित्यर्थः । तथा व्याप्तेरतात्पर्यविषयत्वमुत तात्पर्यविषयत्वमिति विकल्प्य प्रत्याह * तथेति * साधारण्यादेव न घटत इति सम्बन्धः । व्यतिरेकनियमस्यातात्पर्यविषय-

तथा लक्ष्यत्वाभावाद्व्यतिरेकसामानाधिकरण्यमावं लक्षणं स्यात्तदनैकान्तेऽप्यस्तीत्यतिव्याप्तिरित्यर्थः । द्वितीयमपवदति * अन्यथेति * सम्बन्धनियमस्य विवक्षितत्वे व्यतिरेकसम्बन्धमात्रस्यागमकत्वप्रयोजकत्वे सति विशेषणवैयर्थ्यादित्यर्थः ।

खण्डनान्तरमाह ।

६०३ खण्डनान्तरम् ।

अनैकान्तिकत्वस्यानुद्भावयता अनभिगच्छता वा विरुद्धमशक्योद्भावनमशक्याधिगमञ्चेति तदुपजीवित्वान्न पृथक् दूषणं विशेष्यप्रतिपादनं विशेष्यावगमञ्च विना विशिष्टप्रतिपादनस्य विशिष्टावगमस्य चाशक्यत्वात् । एवमन्यत्रापि विशेषणस्याप्रयोजकता विशेष्यस्य सामर्थ्यं स्वयमूहनीया । तद्यथा–इदमसाधकं साधारणानैकान्तिकत्वादित्यत्र साधारणेति विशेषणे सपक्षविपक्षगतत्वादित्यत्र सपक्षगतत्वेऽप्युद्भाव्यमाने एवमसाधारणेऽपीति इदमसाधकं जातित्वादिति जातित्वविवेचनं स्वव्याघातकमुत्तरं जातिरिति स्वव्याघातकत्वस्यैव सर्व्वमसत् ज्ञेयत्वादित्याद्यजातिजातिसाधारणस्य दूषणसमर्थत्वेनोत्तरत्वाभिधान इति ।

*अनैकान्तिकत्वामिति* विरुद्धोऽनैकान्तिकान्न पृथक् दूषणमिति सम्बन्धः । तत्र हेतुः *तदिति* तस्याप्युपपादनाय *अनैकान्तिकमित्यादि* विरुद्धस्यानैकान्ति-

कोपजीवित्वे भवदुक्तं भवेत्तदेवासिद्धं व्याप्तिभङ्गलि-
ङ्गत्वाविशेषादित्यत आह * विशेष्येति * विपक्ष-
सम्बन्धस्य विशेषणं कार्त्स्न्यादि कृत्स्नत्वादिविशि-
ष्टविपक्षसम्बन्धप्रतिपादनादिविशेष्यभूतविपक्षसम्ब-
न्धमात्रप्रतिपादनादिव्यतिरेकेण नोपपद्यते विशेष-
णविशेष्यप्रतिपादनाद्यधीनत्वाद्विपक्षसम्बन्धमात्रं चा-
नैकान्तिकमित्यर्थः । विशेष्यांशस्य हेतोरगमकत्वं
समर्थत्वे सति विशेषणवैयर्थ्यमन्यत्राप्यतिदिशति-
*एवमिति* तदुदाहरणेन विशदयति *तदिति* श-
ब्दो नित्यः प्रमेयत्वात् घटवदित्यत्र प्रमेयत्वमसाधकं
साधारणानैकान्त्यादित्युक्ते साधारणेति विशेषणे
सति सपक्षे सपक्षविपक्षव्यावृत्तत्वादित्यत्र विपक्षे-
ति विशेषणेऽप्रयोजकता द्रष्टव्येत्याह * एवमिति *
विशेषणांशस्यैव समर्थत्वे विशेष्याप्रयोजकताऽपि
द्रष्टव्येत्यभिप्रेत्याह * इदमिति * सर्वं सत् ज्ञेयत्वा-
दिति प्रथमप्रयोगे दृष्टान्ताभावेनासाधकत्वेऽपि न
जातिता सर्वमसत् ज्ञेयत्वादिति द्वितीयप्रयोगे हेतो-
रपि ज्ञेयतया ऽसत्त्वप्रसङ्गेन स्वव्याघतकत्वादादिपदेन
नेदं साधकं हेतुत्वादित्यादिपरिग्रहः।किमिदं जातिरुत्तरं वाति
जिज्ञासायां स्वव्याघातकमुत्तरं जातिरिति विवेचनीयं
तथा च जात्यजातिसाधारणस्यव्याघातकत्वस्यैव
दूषणसमर्थत्वादुत्तरमिति विशेष्यस्याप्रयोजकताऽनु-
त्तररूपे व्याघाते जातित्वानङ्गीकारादुत्तरमित्यपि व-
क्तव्यम् ।

एवं प्रसङ्गाद्व्यर्थविशेषणत्वायन्यत्रातिदिश्य विरु-

त्वलक्षणखण्डनं प्रकृतमनुसरति।

६०३ विरुद्धलक्षणखण्डनम्।

किञ्च साध्यविपरीतेति साध्याभावेत्यर्थे, यदा अभावात्मैव साध्यः क्वचिद्भवति तत्र तद्विपरीतस्य भावत्वात्तदव्यापकत्वं लक्षणस्य। नच विपरीतशब्दस्य विरोधिमात्रार्थत्वे भावाभावोभयव्याप्तिरिति वाच्यम्। सहानवस्थानं हि भावाभावयोर्विरोधोऽभ्युपेयते अनवस्थानञ्च संसर्गनिषेधः स च भावाभावयोरन्योन्यस्यानवस्थानमेव परस्परप्रतिषेधरूपत्वात्तयोः, तथा च सति भावाभावयोः स्वरूपस्यानुपसङ्ग्रहे प्रत्येकमव्याप्तिर्मिलितस्यासम्भव एवेति। वक्ष्यामश्च भावाभावयोर्विरोधनिरुक्तिनिराकरणमुपरिष्टादिति।

* किञ्चेति * साध्यविपरीतव्याप्त इत्यत्र विपरीतपदेनाभावो विवक्षित उत विरोधमात्रमिति विकल्प्य प्रथमं प्रत्याह * साध्येति * अभाव इत्यर्थे भादुगुण इति गुण एकारे कृते अभावेत्यर्थे इति रूपे विवक्षित इति शेषः। न नित्यः शब्दः भावत्वे सत्यनादित्वादित्यत्र नित्यत्वाभावे साध्ये तद्विपरीतेन नित्यत्वेन भावरूपेण व्याप्तोऽयं विरुद्धो लक्षणेन न व्याप्यत इत्यव्याप्तिरिति यावत्। द्वितीयमपवदति * नचेति * यत्र भावः साध्यस्तत्र तद्विपरीतोऽभावो यत्राभावस्तत्र तद्विपरीतो भाव इति कुतो नोभ-

यव्याप्तिर्विरुद्धमात्रार्थत्व इत्यत आह * सहेति * भा-
वाभावस्यैव विरोधत्वे ऽन्यतरलयप्रसङ्गादित्यर्थः। अ-
स्तु ततः किमित्यत आह * अनवस्थेति * एकस्मिन्
काले देशे च भावाभावयोरवस्थानं संसर्गस्तन्नि-
षेधोऽनवस्थानमित्यर्थः। संसर्गनिषेधः कीदृश इत्यत
आह * स चेति * यत्र भावस्तत्र नाभावो यत्राभा-
वस्तत्र न भाव इत्यन्योन्यस्यानवस्थानमेव संसर्ग-
निषेध इत्यर्थः। कुत इत्यत आह * परस्परेति * तथा
लक्षणस्य को दोष इत्यत आह * तथेति * भावा-
भावयोः स्वरूपास्वीकारे तयोरनवस्थानस्यैव लक्षण-
त्वस्वीकारे किं प्रत्येकं लक्षणमुत मिलितमाद्येऽन्योन्यो-
दाहरणाव्याप्तिः द्वितीयेऽसम्भव इत्यर्थः। भावाभाव-
योरनवस्थानं च यद्यपि तदुभयव्यतिरेकेण नास्ति
तथाऽप्यङ्गीकृत्यैतदुक्तम्। भावाभावयोर्विरोधनिर्वच-
नस्य खण्ड्यमानत्वादपि लक्षणासिद्धिरित्याह * व-
क्ष्यामश्चेति।

उत्तरवादपातनिकां रचयति

६०४ अनैकान्तिकखण्डनारम्भः।

किञ्च व्याप्तिपदेन लक्षणप्रविष्टेन किं व्यवच्छेद्य-
म्। अनैकान्तिकमिति चेत्। किं तदनैकान्तिकम्। तथा
हि—अनैकान्तिकः सव्यभिचार इत्यलक्षणम्। सव्य-
भिचारत्वं हि यदि विपक्षवर्तिता तदानीं विरुद्धेऽपि प्रस-
ङ्गः असाधारणानैकान्तिकाव्याप्तिश्च। अथ सपक्षवि-

पक्षगताभावता तदा साधारणोदाहरणाव्यापकत्वम् ।

*किंचेति* विरुद्धलक्षणप्रविष्टेन व्याप्तिपदेन किं व्यवच्छेद्यं न किंचिदिति क्षेपः प्रश्नो वा उभयत्र परिहारं शङ्कते *अनैकान्तिकमिति* असिद्धस्य सप्तमरसादिवद्व्यवच्छेद्यत्वादनैकान्तस्य सिद्धिर्वक्तव्या सा च लक्षणायत्तेति लक्षणं पृच्छति *किमिति* आक्षेपाभिप्रायमाविष्करोति *तथा हीति* एकस्मिन्नेव साध्ये नियत एकान्तः न एकान्तोऽनैकान्तः व्यभिचारश्च सम्बन्धानियमः अनियतसाध्यसम्बन्धोऽनैकान्त इत्येतदलक्षणमिति यावत् । किमिदं सव्यभिचारत्वं विपक्षवृत्तित्वमुत सपक्षविपक्षगताभावता किंस्वित्सपक्षविपक्षसाधारणतेति विकल्प्य प्रथममनुवदति *सेति* दूषयति * तदेति * शब्दोऽनित्यः अकार्यत्वादित्यस्मिन्विरुद्धेऽपि विपक्षवृत्तित्वं लक्षणगतमित्यतिव्याप्तिरित्यर्थः। दोषान्तरमाह * असाधारणेति * शब्दो नित्यः आकाशविशेषगुणत्वादित्यसाधारणानैकान्तिकाऽव्याप्तिस्तस्य विपक्षवृत्तित्वाभावात् । ननु अनध्यवसितोऽयं हेत्वाभासो नानैकान्तः साध्यासाधकः पक्ष एव वर्तमानो हेतुरनध्यवसित इति तल्लक्षणादिति । मैवम् । असाधकत्वमनुमित्यजनकत्वं तच्चाप्तिपक्षधर्मत्वनिश्चये सत्येव तत्र तद्विरहे वा नाद्यो ऽसम्भवान्न हि सम्भवति व्याप्तपक्षधर्मतानिश्चये सत्यसाधक इत्यतिप्रसङ्गात् । द्वितीयेऽसिद्धान्तर्भावः व्याप्तिविरहाद्वे दसाधकत्वं तदा न एकान्तोऽनैका-

न्तिक इत्यन्वर्थसंज्ञासम्भवे ऽपूर्वसंज्ञान्तरकरणमनुपपन्नं प्रमाणाभावाद्गौरवाच्च। अस्यानैकान्तिकान्तर्भाव्यनुपसंहार्यस्यानैकान्तिकान्तर्भावाभावादनैकान्तिकादनध्यवसितः पृथक् स्वीकर्त्तव्य इति चेन्न। समनन्तरमेव तस्याप्यन्तर्भावाभिधानात्तस्माद्भूषणोक्तमप्यनादृत्याचार्योद्द्योतकरवाचस्पतिप्रभृतिभिरुक्तमेव स्वीकार्यमिति द्वितीयं शङ्कते *अथेति* सपक्षविपक्षयोर्गतोऽभावो यस्य स तथोक्तस्तद्भावस्तत्ता सव्यभिचारत्वमिति सम्बन्धः। निराकरोति *तदेति* शब्दो नित्यः प्रमेयत्वादिति साधारणानैकान्तिकोदाहरणाव्यापकत्वं लक्षणस्य पक्षत्रयवृत्तित्वात्तस्येत्यर्थः।

तृतीयं शङ्कते।

६०५ विकल्पनिरासः।

अथोच्यते सव्यभिचारत्वं सपक्षविपक्षसाधारणता अभिप्रेता सा चान्वयेन साधारणस्य व्यतिरेकेणासाधारणस्यानैकान्तिकस्य सङ्ग्राहिका, सपक्षविपक्षसाधारणतामात्रं त्वन्वयेन व्यतिरेकेण वेति विशेषणवत्तया न विवक्षिता अतः साधारणासाधारणानैकान्तिकयोरुभयोरपि सङ्ग्रहः। विवादाध्यासितं क्षणिकं सत्त्वादित्यादेरनुपसंहार्य्यस्यापि सपक्षविपक्षशून्यत्वादेव सपक्षविपक्षगतत्वाभावेन साम्यमिति। विचार्यमेतद्व्याख्यानं परमस्तु तावदापाततः, तथापि व्यतिरेकेण सपक्षविपक्षसाधारण-

तायाः सपक्षाव्यापके सद्धेतौ धूमविशेषादौ गतत्वेनाति-व्यापकत्वात्। यदि त्वस्य दोषस्य परिहारार्थं सर्वविपक्ष-सपक्षसाधारणमनैकान्तिकामिति ब्रूषे । तदा व्य-तिरेकमात्रेण सर्वसपक्षाविपक्षापक्षसाधारणता धूमा-नुमानादिगामिनी न भवतु नाम। अन्वयेन तु सर्व-सपक्षविपक्षसाधारणता विपक्षसपक्षैकदेशगामिनं साधा-रणानैकान्तिकं शब्दो न नित्यः प्रत्यक्षग्राह्यत्वादित्या-दिकं न सङ्गृह्णातीत्यव्याप्तिरित्येकं सन्धित्सतोऽपरं प्रच्यवते।

* अथेति * एवमपि कथमुभयसङ्ग्रह इत्यत आह * सेति * अन्वयः सत्त्वं, व्यतिरेकोऽसत्त्वं साधारणस्यो भयत्र सत्त्वं समानमसाधारणस्यासत्त्वमिति अ न्वयेन व्यतिरेकेण च सपक्षविपक्षसाधारणतोभय-सङ्ग्राहिका व्यापिकेत्यर्थः। अन्वयेन साधारण्यं चाब्रि-यच्छिन्नमसाधारणाव्याप्तिर्व्यतिरेकेण चेत्साधारणाऽ-व्याप्तिरुभयेन चेदुभयाव्याप्तिरित्यत आह * सपक्षे-ति * लक्षणं व्यापकमिति शेषः। हेतुं व्याचष्टे * अन्व-येनेति * विवादाध्यासितं सर्वं क्षणिकं सत्त्वादित्यादे-रनुपसंहार्यस्य कथं सङ्ग्रहः तत्रान्वयव्यतिरेकयोर-भावादित्यत आह * विवादेति * उपसंहारो व्याप्तिस-न्धिपय उपसंहार्यो दृष्टान्तः स न विद्यते यस्य सोऽ-नुपसंहार्यः तस्यापि सपक्षविपक्षगतत्वाभावेन व्यति-रेकेण साम्यमिति तदुपसङ्ग्रहस्तत्र हेतुः * सपक्षेति * न

हि सम्भवति सपक्षादिर्नास्ति तत्र गतो हेतुरित्यादिपदेन सर्वं शून्यज्ञेयत्वादित्यादिसङ्ग्रहः । न च खपुष्पादिर्दृष्टान्त इति वाच्यम् । निरुपाख्यस्य सोपाख्यसाध्यहेत्वनाश्रयत्वादन्यथाऽऽश्रयासिद्धिविलोपप्रसङ्गादिति सपक्षविपक्षसाधारण्यं केवलव्यतिरेकिहेतोरप्यस्तीत्यतिव्याप्तिः साध्यासाधकत्वविशेषणे तदेव दूषणं समर्थमुद्भाव्यं व्यर्थं सपक्षेत्यादिविशेषणमित्यभिप्रेत्याह * विचार्यमिति * अङ्गीकृत्याप्याह * परमिति * परं केवलमापाततोऽस्त्विति अङ्गीकृतं चेल्लक्षणसौस्थ्यमित्याशङ्क्य किं सपक्षविपक्षसाधारण्यमात्रं लक्षणमुत सर्वसपक्षविपक्षसाधारण्यमिति विकल्प्य प्रथमं प्रत्याह *तथा ऽपीति * गोपालघटिकोद्भासितधूमव्यावृत्त्यर्थं विशेषपदम्। धूमवत्त्वादिति सद्धेतुर्विपक्षसपक्षयोर्व्यतिरेकद्वारा साधारण इत्यतिव्यापकत्वं । तत्र हेतुः * सपक्षेति * सपक्षैकदेशेऽङ्गारावस्थाग्निमति तदप्रवृत्तेरित्यर्थः । आदिपदेन शब्दो नित्यः सामान्यवत्त्वे सत्यस्मदादिबाहिरिन्द्रियग्राह्यत्वात् घटवदित्यादिसङ्ग्रहः । द्वितीयकल्पं शङ्कते * यदीति * सर्वसपक्षविपक्षसाधारणो ऽनैकान्तः सद्धेतौ सपक्षैकदेशावृत्तौ तदभाव इति तन्निवृत्तिरित्यर्थः । उक्तातिव्याप्तिपरिहारमङ्गीकृत्य दूषयति * तदेति * व्यतिरेकमात्रेण सपक्षविपक्षसाधारणता धूमानुमानगामिनी न भवतीति कृत्वा ऽतिव्याप्तिर्माभून्नामेत्यर्थः । न चैतावता लक्षणं निरवद्यमव्यापकत्वादित्याह * अन्वयेनेति * शब्दो

नित्यः प्रत्यक्षत्वात् घटवदिति साधारणानैकान्तं न सङ्गृह्णाति—न व्याप्नोति सपक्षैकदेशे गुरुत्वादौ आकाशादौ वा प्रवृत्तेरित्यर्थः। शब्दोनित्यो ऽचलनात्मत्वे सति सामान्यवत्त्वादित्यादिरादिपदार्थः। उपसंहरति * इत्येकमिति * अतिव्याप्तिपरिहारमिच्छतस्ते-ऽपरं—सर्वलक्षणव्याप्तिः प्रच्यवत इत्यर्थः।

सङ्केतावतिव्याप्तिपरिहारमङ्गीकृत्याव्यापकत्वमुक्तमिदानीमतिव्याप्तिरपि तदवस्थेत्याह।

६०६ अङ्गीकृत्याऽपिदोषतादवस्थ्यम्।

अपिचान्वयव्यतिरेकाभ्यां सर्वसपक्षविपक्षगतत्वाद्धूमानुमानादौ स एव प्रसङ्गः विशेषरूपेण तयोरविवक्षितत्वात्।

* अपि चेति * धूमादौ स एव लक्षणातिव्यापकत्वप्रसङ्गस्तत्र हेतुः * सर्वेति * तत्रापि हेतुरन्वयेति। धूमवत्त्वं हेतुर्विपक्षं व्यतिरेकेण सपक्षैकदेशं च तेनैव सपक्षैकदेशं पुनरन्वयेनेत्यन्वयव्यतिरेकाभ्यां सर्वसपक्षादिव्यापकत्वमित्यर्थः। व्यतिरेकेणैवान्वयेनैव वा सर्वसपक्षविपक्षसाधारणोऽनैकान्तिक इति विवक्षितत्वान्नातिव्याप्तिरित्यत आह * विशेषेति * विवक्षितत्वं चाव्याप्तिरित्यर्थः।

सर्वसपक्षेत्यादिलक्षणवाक्ये सर्वपदं विपक्षस्यापि विशेषणं, मुत सपक्षस्यैकस्यैवेति विकल्प्य प्रथममनुवदति।

६०७ लक्षणविकल्पनिरासः।

किञ्च सर्व्वसपक्षविपक्षसाधारणमनैकान्तिकमिति वाक्ये यदि सर्वेति विपक्षस्यापि विशेषणं तदा विपक्षैकदेशवृत्तेः सपक्षव्यापिनः साधारणानैकान्तिकस्य त्रसरेणुः कार्य्यावयवको महत्त्वात् घटवदित्यादेरव्यापकं लक्षणमिदम्। अथ सर्व्वेति न विपक्षस्य विशेषणं तदा व्यतिरेकमादाय विपक्षसर्व्वसपक्षसाधारणमनैकान्तिकमिति एतद्विपक्षैकदेशमात्रवृत्तौ विरुद्धे क्षिति नित्या सावयवत्वादित्यादौ गतत्वादतिव्यापकमिति।

* किञ्चेति * दूषयति * तदेति * तदा साधारणस्यानैकान्तिकस्याव्यापकमिदं लक्षणमिति सम्बन्धः। सर्वेति विशेषणाभावादिति दर्शयति * विपक्षेत्यादि * उदाहरणमाह * त्रसरेणुरिति * त्र्यणुकमित्यर्थः। कार्यमवयवो यस्य स तथोक्तः कार्यारब्ध इत्यर्थः। महत्त्वं हेतुः सपक्षे घटादौ सर्वत्र वर्तते विपक्षे परमाण्वादौ न वर्तते दिक्कालादौ वर्तत इति विपक्षैकदेशवृत्तिः परमाणुः स्वतो न्यूनपरिमाणारब्धः द्रव्यत्वात् घटवदित्यादिरादिपदार्थः। द्वितीयं शङ्कते *अथेति* अतिव्याप्तिं दर्शयितुं लक्षणवाक्यस्य पर्यवसितमर्थं दर्शयति * तदेति * व्यतिरेकमादाय विरुद्धे गतत्वादित्युपरि सम्बन्धनीयम्। इदमनैकान्तिकमित्युक्तं स्यादिति शेषः। अस्तु को दोष इत्यत आह *एतदिति* उदाहरति *क्षितिरिति* सावयवत्वादि-

ति हेतुर्विपक्षे घटादौ वर्तते शुक्लादौ च न वर्तते सपक्षे परमाण्वादौ सर्वत्र न वर्तत इति सर्वसपक्षविपक्षसाधारणत्वं विपक्षैकदेशवृत्तिविरुद्धेऽस्तीत्यतिव्याप्तिरित्यर्थः। क्षितिर्नित्या कार्यद्रव्योपादानत्वादित्याद्युदाहार्यमिति दर्शयत्यादिपदेन।

सपक्षविपक्षसाधारणमिति लक्षणस्यासाधारणादिसकलानैकान्तिकव्यापकत्वमङ्गीकृत्यातिव्यापकत्वमुक्तमिदानीं सा वाक्भङ्गिरेवानुपपन्नेत्याह।

६०८ वाचोयुक्तिनिरास।

का चेयं वाचोयुक्तिः सपक्षविपक्षसाधारणमनैकान्तिकमित्युक्ते सर्वं सङ्गृह्यते अन्वयेन व्यतिरेकेण चेति। कथमनुपसंहार्यस्यासत्सपक्षविपक्षस्य सपक्षे विपक्षे वा अन्वयेन व्यतिरेकेण वा साधारण्यं स्यात् तयोरेवाभावात्। यदि च सपक्षे च विपक्षे च साधारणत्वमुभयत्र स्वरूपानुगमो विवक्षित स्तदानीमसाधारणानैकान्तिकाव्याप्तिः। अथोभयस्मिंस्तस्मिन्नसत्त्वं तद्विवक्षितं तदा सर्वाव्याप्तिः तदसत्त्वस्यातद्धर्मत्वात्। अथ तदुभयवर्त्यभावप्रतियोगित्वं तदुभयसम्बन्धस्य योऽभावस्तदाश्रयत्वं वाऽभिप्रेतं तदापि साधारणोदाहरणाव्याप्तिः। अथ मन्यसे तदुभयसाधारण्यं नाम एकस्मिन् यादृप्यं हेतोः सत्त्वमसत्त्वं वा तादृप्यमपरस्मिन्नपि यत्तदुच्यते, तथा सति नाव्यापकतादोष इति। मै-

षम् । मुख्यस्तावद्वचनार्थो नोपपद्यते हेतोरैकरूप्यस्य-सपक्षविपक्षावाश्रय इति । किं नाम? ऐकरूप्यवतोर्हेतोस्ता-वाश्रयाविति स्यात्तदा चासाधारणाऽव्याप्तिः तत्र सपक्षे विपक्षे च हेतोरसत्त्वेन तदाश्रयत्वासम्भवात् । तस्मात् सपक्षे विपक्षे च साधारणत्वं हेतोरनैकान्तिकत्वमि-त्यनुपपन्नमेव ।

* का चेति * साधारणासाधारणानुपसंहार्य-मित्यर्थः । काऽनुपपत्तिरित्यत आह * कथमिति * सपक्षविपक्षयोरन्वयव्यतिरेकाभ्यां साधारण्यमनु-पसंहार्यस्यासम्भवीति दर्शयितुं तत्स्वरूपमाह * असदिति * कथं वा न स्यादित्यत आह * तयो-रिति * सपक्षविपक्षयोरेवाभावे तन्निष्ठो हेतुभावोऽ-भावो वा न हि प्रमातुं शक्यते भावाभावयोर्भा-वाधिकरणतया प्रमानियमादित्यर्थः । किं च सप-क्षविपक्षसाधारणत्वं हेतोः सपक्षविपक्षयोरनुगम उत तदुभयत्रासत्त्वं किं वा तदुभयनिष्ठाभावप्रतियोगि-त्वमाहो स्वित्सपक्षविपक्षसम्बन्धाभाववत्त्वमिति वि-कल्प्य प्रथममनुवदति * यदीति * अव्याप्त्या दूष-यति * तदेति * असाधारणानैकान्तस्य सपक्षविप-क्षानुगतत्वाभावादव्याप्तिरित्यर्थः । द्वितीयं शङ्कते * अथेति * तत्सपक्षविपक्षसाधारण्यमित्यर्थः । अ-सम्भवेनैतद्दूषयति * तदेति * कुतः सर्वाऽव्याप्ति-रित्यत आह * तदिति * सपक्षविपक्षगतहेत्वभाव-

स्य हेतुधर्म्मत्वाभावात्तस्यासाधारण्यवश्वासम्भवादसिद्धिरित्यर्थः । तृतीयचतुर्थौ कल्पावुद्भावयति * अथेति * सपक्षविपक्षाभ्यां हेतोः सम्बन्धस्तदुभयनिष्ठ इति तदभावोऽपि तदुभयाश्रय इत्यभावप्रतियोगित्वं सपक्षविपक्षाभ्यां हेतुसम्बन्धस्य योऽभावस्तदाश्रयत्वं वा सपक्षविपक्षसाधारण्यं विवक्षितमित्यनुषङ्गः । इदमव्यापकमित्याह * तदेति * साधारणानैकान्तस्य सपक्षविपक्षगतत्वादेव तदुभयनिष्ठाभावप्रतियोगित्वं तत्सम्बन्धाभाववत्त्वं वा नास्तीत्यर्थः । उक्तदोषपरिजिहीर्षया पक्षान्तरं शङ्कते * अथेति * हेतोरेकस्मिन्सपक्षे विपक्षे वा यादृप्यं-यद्रूपत्वं सत्त्वमसत्त्वं वा तादृप्यमपरस्मिन्सपक्षादौ यन्नाम तत्सपक्षविपक्षसाधारण्यमुच्यत इत्यर्थः । एवं लक्षणशिक्षायां फलमाह * तथेति * सपक्षविपक्षयोरैकरूप्यं प्रति यदधिकरणत्वं सप्तम्या प्रतीयते तद्विवक्षितमुत लक्षणया तादृप्यवतो हेतोस्तदाश्रयत्वं विवक्षितमिति विकल्प्य प्रथमं दूषयति * नैवमिति * हेतोरैकरूप्यं हेतुधर्म्मत्वान्न तदन्यनिष्ठमित्यर्थः । तस्माद् द्वितीयः परिशिष्यत इति प्रश्नपूर्वकमाह * किमिति * अस्तु तथा वा को दोष इत्यत आह * तदेति * कुत इत्यत आह * तत्रेति * तत्रासाधारणोदाहरण इति यावत् । सपक्षविपक्षयोरैकरूप्यं नाम असाधारणस्यासत्त्वं तद्वतो हेतोः सपक्षादिनिष्ठत्वमित्यर्थः । सपक्षविपक्षसाधारणोऽनैकान्त इति लक्षणखण्डनं निगमयति * तस्मादिति *

सङ्क्षेपविस्ताराभ्यामुच्यमानं वस्तु मदबुद्धिबुद्ध्यारूढं भवतीति कथितमेव हेतुं सङ्क्षिप्याह।

१०९ पूर्वोक्तहेत्वनुवादः।

असत्त्वपक्षे हेतोस्तदाश्रयकत्वानुपपत्त्या सपक्षे विपक्षे चेति सप्तमीनिर्देशस्यासङ्गतत्वात्। तदभावापेक्षयाचाश्रयत्वस्योपपत्तौ हेतोस्तदाश्रयत्वे किमायातम्। आयातु वा किञ्चित् तथापि साधारणोदाहरणेषु हेत्वभावापेक्षया सपक्षविपक्षयो नाश्रयता सप्तम्यर्थः किन्तु हेत्वपेक्षयैवेति एकार्थापर्य्यवसायित्वे वाक्यस्य लक्षणाव्यापकतापत्तिरेव।

* असत्त्व इति * यद्यपि सपक्षादिसाधारण्यं तद्गतासत्वं हेतोरित्यसाधारणानैकान्तस्थले हेतोः सपक्षादिनिष्ठत्वन्नास्ति तथाऽपि तदभावस्य सपक्षाद्याश्रयत्वमस्तीत्यत आह * तादिति * तदाश्रयत्वस्य सपक्षादेः सप्तम्यर्थस्य सम्भवेऽपि हेतोः सपक्षादिनिष्ठत्वे लक्षणप्रविष्टे न किं विलम्ब्यत इत्यर्थः। सपक्षादिनिष्ठाभावं प्रति प्रतियोगित्वं हेतोर्लाभ इत्यत आह * आयात्विति * यद्यपि सपक्षविपक्षगतासत्वप्रतियोगित्वं हेतोर्विशेषस्तथाऽपि साधारणानैकान्तिकस्थलेषु सपक्षविपक्षयोर्हेत्वभावापेक्षया सप्तम्यर्थोऽधिकरणत्वं न भवति सपक्षविपक्षगामित्वादेव तस्येत्यर्थः। कस्तर्हि सप्तम्यर्थोऽधिकरणत्वं तत्रेत्यत आह *

१ वेत्यनेकार्थपर्यवसायित्वे इति का० मु० पु० पा०।

किं त्विति * सपक्षविपक्षयोरैकरूप्यं हेतोरनैकान्त्य मिति वाक्ये साधारणोदाहरणविवक्षायां सपक्षादौ सत्वमैकरूप्यमितरत्र तदसत्वमेतावता प्रकृतलक्षणस्य को दोषस्तत्राह * इत्यनेकेति *

सपक्षविपक्षयोः साधारणो हेतुरनैकान्तिक इत्येतावन्मात्रं लक्षणमुतान्वयादिना विशेषित इति विकल्प्य प्रथमकल्पमनुवदति।

६१० सामान्यविशेषलक्षणयोर्निरासः।

किञ्च सपक्षविपक्षसाधारणत्वं यदि सामान्यतोलक्षणं साधारणासाधारणानैकान्तिकभेदद्वयसङ्ग्रहार्थमुच्यते तदा सपक्षविपक्षयोरन्यत्वादिभिर्हेतोः साधारण्यमस्त्यन्यत्रापीत्यतिव्याप्तिः। अथातिव्याप्तिपरिजिहीर्षयाऽन्वयव्यतिरेकाभ्यां सपक्षविपक्षसाधारणमनैकान्तिकमित्युच्यते तदा अन्वयव्यतिरेकयोः प्रत्यकमिलितविकल्पानुपपत्त्या अव्यापकत्वापातः।

*किं चेति* अतिव्याप्त्यैतदपवदति *तदेति* धूमवत्त्वादिहेतोः सपक्षाद्यपेक्षया ऽन्यत्वसत्त्वज्ञेयत्वादिभी रूपैः सपक्षविपक्षयोःसाधारण्यमस्तीत्यतिव्याप्तिरित्यर्थः। द्वितीयं कल्पमुत्थापयति *अथेति* अन्वयेन सपक्षादिसाधारण्ये ऽसाधारणाव्याप्तिर्व्यतिरेकेण साधारण्यलक्षणस्य साधारणाव्यापकता मिलिताभ्यामुभाभ्यां साधारण्यस्य सर्वाव्याप्तिरित्यभिसन्धाय दूषयति *तदेति*

उक्ताव्याप्त्यसम्भवपरिहाराय प्रकारान्तरं शङ्कते।

६११ प्रकारान्तरेणानैकान्तिकनिरासः ।

स्यादेतत् स्वस्वाभावविरोधाश्रयाश्रितसपक्षविपक्षत्त्वं सपक्षविपक्षसाधारण्यं विवक्षितमेवं नाव्याप्त्यतिव्याप्ती इति। तदप्यसत् । तथाह्यस्तु तावत्सर्वपदविशेषणोपादानानुपादानपक्षोक्तदोषापातः सर्वशब्दोपादाने धूमानुमानादौ प्रसङ्गश्च । स्वस्वाभावविरोधशब्दार्थस्याप्येकस्यानुगतस्यासम्भवेन लक्षणानुगमाभावो दोषः तत्तदभावयोर्हि विरोधः सहानवस्थानं अनवस्थानञ्चावस्थानप्रतिषेधो नच तञ्चावस्याभावस्वरूपादन्यत्, नचाभावस्याप्यनवस्थानं भावस्वरूपादन्यत्, किन्तु तदेव भावस्य स्वरूपं तत्र स्वस्वाभावविरोधाश्रय इत्यस्य नार्थैक्यं किञ्चिन्मृग्यमाणमवाप्यते । स्वस्वाभावविरोधाश्रय इति वचनं विचारमर्हति । स्वस्वाभावयोर्विरोधविशेषणतया आधेयकोटिनिवेशात् विशेषणघटितमूर्त्तित्वाद्विशिष्टपदार्थस्य तदाधारत्वानुपपत्तेः । अतिव्यापकता च स्यात् । अन्वयमादाय सपक्षे व्यतिरेकमादाय विपक्षे वर्त्तमानस्याप्युक्तलक्षणोपेतत्वात् । स्वस्वाभावाविशेषिनस्य तु विरोधस्याश्रयेऽभिधीयमाने सर्वानुमानव्यापकत्वमनैकान्तिकलक्षणस्यापतेत् ।

*स्यादिति* स्वशब्देनानैकान्तिकाभिमतहेतुरुच्य-

ते स्वं च स्वाभावश्च स्वस्वाभावौ तयोर्विरोधः स्वस्वाभावविरोधस्तस्याश्रयौ स्वस्वाभावविरोधाश्रयौ ताभ्यामाश्रितौ सपक्षविपक्षौ यस्य हेतोः स तथोक्तस्तस्य भावस्तत्त्वं अनैकान्त्यमिति शेषः। अभेदविरोधाऽऽश्रयभेदाश्रितसपक्षविपक्षत्वं सर्वानुमानसाधारणमिति तद्व्यावृत्त्यर्थं स्वेत्यादिविशेषणम्। सपक्षविपक्षसारणोऽनैकान्त इत्युक्तलक्षणपरित्यागाद्वेत्वन्तरलेत्यत आह *सपक्षेति* लक्षणवाक्ये कुटिलिकास्वीकारफलमाह *एवमिति* भावाभावविरोधस्योभयनिष्ठत्वाद्भावाभावद्वयमपि विरोधाश्रयत्वेनैकं भवति तेन प्रत्येकमिलितविकल्पाऽनुपपत्तिर्नाप्यतिव्याप्तिः सद्धेत्वादौ सपक्षविपक्षयोरुक्तविरोधाश्रयाश्रितत्वाभावादित्यर्थः। स्वशब्देन व्यक्तिपरामर्शेऽव्याप्तिः सामान्यपरामर्शे ऽतिव्याप्तिः धूमादेः सपक्षविपक्षाभ्यामन्यत्वेन स्वस्वाभावविरोधाश्रयाश्रितसपक्षविपक्षत्वादिति दूषयति * तदिति * असत्त्वमेव प्रकारान्तरेणोपपादयति * तथा हीति * सपक्षविपक्षयोर्विशेषणत्वेन सर्वपदमुपादीयते न वाऽऽद्ये विपक्षैकदेशगामिनं साधारणानैकान्तिकं न व्याप्नोति द्वितीये व्यतिरेकेण सपक्षविपक्षसाधारणतायाः सपक्षाव्यापके सद्धेतौ धूमविशेषादौ गतत्वेनातिव्यापकमित्यर्थः। भङ्गान्तरमाह * सर्वेति * अन्वयव्यतिरेकाभ्यां सपक्षविपक्षगतत्वात् धूमादौ स एव प्रसङ्गः विशेषरूपेण तयोरविवक्षितत्वादित्यर्थः। प्रागुक्तमेव दोषं स्मारयित्वा दोषान्तरं दर्शयति * स्वेति * असम्भवेनापी-

ति सम्बन्धः। कथं विरोधशब्दार्थस्यैक्यासम्भव इत्यत आह * तदिति * हेतुतदभावयोर्विरोधः सहानवस्थानं भावाभावविरोधस्य सहानवस्थानस्याङ्गीकारादित्यर्थः। एवं च विरोध एको न सम्भवतीति दर्शनाय तत्स्वरूपं दर्शयति * अनवस्थेति * एकस्मिन्देशे काले च भावाभावयोः संसर्गोऽवस्थानं तदभावोऽनवस्थानमित्यर्थः। अस्तु ततः किमित्यत आह * न चेति * भावस्य तदभावेन सहानवस्थानमभावस्वरूपादन्यन्न सम्भवति यत्राभावस्तत्र भावो नास्तीत्येकार्थत्वादित्यर्थः। एवमभावस्यापीत्याह * न चेति* अभावस्याऽप्यनवस्थानं भावस्वरूपान्नान्यत्। किं तु भावस्वरूपमभावाभावस्य भावत्वादित्यर्थः। उपसंहरति * तत्रेति * स्वस्वाभावविरोधः स्वस्वाभावावेव तथा च प्रत्येकामिलितविकल्पदोष इत्यर्थः। स्वस्वाभावविरोधाश्रयत्वं स्वस्वाभावयोरभ्युपगम्यैतदुक्तन्न च तत्सम्भवतीत्याह * स्वेति * स्वस्वाभावविशिष्टो विरोध उत विरोधाश्रयाश्रितसपक्षत्वादिलक्षणमुत स्वस्वाभावाभ्यामुपलक्षितत्वं विरोधस्येति विकल्प्य प्रथमे दूषणमाह *स्वेति* स्वस्वाभावयोस्तदाधारत्वानुपपत्तेरसम्भव इति सम्बन्धः। तदुपपादनं * विरोधेत्यादि * तत्रापि हेतुविशेषणेति। विशिष्टपदार्थस्य विशेषणघटितमूर्त्तित्वात्स्वस्वाभावविशिष्टविरोधस्य स्वस्वाभावाश्रयत्वे स्वस्वाभावयोरंशतः स्ववृत्तिः स्यादित्यर्थः। न केवलमसम्भवोऽतिव्याप्तिरपीत्याह *अस्तीति* अतिव्याप्तिमुपपा-

दयति * अन्वयमिति * अनित्यः शब्दः कृतकत्वादित्यादेः सपक्षव्यापकस्यान्वयव्यतिरेकाभ्यां स्वस्वाभावविरोधाश्रयाश्रितसपक्षविपक्षत्वादित्यर्थः। द्वितीयं दर्शयति * स्वेति * अभेदविरोधाश्रयभेदाश्रितसपक्षविपक्षत्वं सर्वानुमानसाधारणमित्यतिव्याप्तिरित्यर्थः। स्वस्वाभावाविशेषितस्य विरोधस्य सर्वानुमानव्यापकत्वमिति सम्बन्धः।

स्वस्वाभावाभ्यामुपलक्षितत्वं विरोधस्याऽभिप्रेयते तेन विशेषणपक्षोक्तस्ववृत्तिदोषो नेति तृतीयकल्पमाशङ्क्याह।

६१२ तृतीयकल्पनिरासः।

न च वाच्यं स्वस्वाभावोपलक्षितो विरोधोऽभिमतः तेन विशेषणपक्षोक्तदोषस्य नावकाश इति, यतः स्वस्वाभावाभ्यां विरोधमात्रं वा लक्ष्यते तद्व्यक्तिर्वा काचित्। आद्ये यदेव स्वस्वाभावाभ्यां लक्षितं विरोधमात्रं तदेवान्यदपीत्युक्ताऽतिव्याप्तिः तदवस्थैव। स्वस्वाभावपदोपादानवैयर्थ्यञ्च। अथ द्वितीयस्तदा लक्षणस्याननुगमः एकस्य विरोधव्यक्तिविशेषस्यात्र परिगृहीतत्वायापरविरोधव्यक्त्यनात्मत्वात्। अथ यावत्योऽपेक्षिता विरोधव्यक्तयस्ता उपलक्ष्यन्त इत्युच्यते, किन्नोपलक्ष्यन्ते, किन्तु किं केन चिदनुगतेन रूपेण, उत प्रतिस्वं व्यावृत्तेनात्मना।

१ व्यक्तेरन्यत्वात् इति का० मु० पु० पा०।

प्रथमे तदेवोच्यतां किमुपलक्षणोपन्यासप्रयासेन । न च तत्सम्भवति विरोधमात्रस्यातिप्रसञ्जकत्वात् । प्रतिस्वं व्यावृत्तेन व्यक्तीनामात्मनोपलक्ष्यत्वे तथैव तासां लक्षणप्रवेश इति मिलितानां लक्षणत्वे सर्व्वाव्याप्तिः प्रत्येकं लक्षणत्वे परस्परोदाहरणाव्याप्तिः ।

* न चेति * कुत इत्यत आह * यत इति * यत इत्यस्य विरोधव्यस्यनात्मत्वादित्यनेनोपरि सम्बन्धः । हेतूपपादनाय विकल्पयति * स्वेति * अविवक्षितविशेषं विरोधसामान्यमुपलक्ष्यते किं वाविरोधव्यक्तिरेव का चिदित्यर्थः । कस्मिन्सति किं स्यादित्यत आह * आद्य इति * विरोधमात्रस्योपलक्षितस्य लक्षणनिविष्टत्वात्तस्य चैक्यादन्यत्र धूमानुमानादावपि विरोधाश्रयभेदाश्रितसपक्षविपक्षगतत्वेनोक्तातिव्याप्तिरित्यर्थः । अव्याप्त्यतिव्याप्तिपरिहारफलत्वाभावात्स्वेत्यादिविशेषणस्य विशेषणासिद्धं च लक्षणमित्याह * स्वेति * द्वितीयं दूषयति * अथेति * अननुगमे हेतुमाह * एकेति * एकैव तावद्विरोधव्यक्ति लक्ष्यते तस्याः साधारणगतत्वेऽसाधारणानैकान्तिकाव्याप्तिस्तद्गतत्वे चेतराव्याप्तिरित्यर्थः । विरोधमात्रं नोपलक्ष्यते नाप्येकैव विरोधव्यक्तिः किं तु साधारणासाधारणकृत्स्नानैकान्तिकोदाहरणेषु यावत्यो विरोधव्यक्तयोऽपेक्ष्यन्ते तावत्यः स्वत्वाभावाभ्यामुपलक्ष्यन्ते ऽतो नोक्तदोष इति शङ्कते * अथेति * अङ्गीकरोति * किमिति *

उपलक्ष्यन्ते एवेति शेषः । विवक्षितं दोषं दर्शयितुं विकल्पयति * किं त्वित्यादिना * अपेक्षिता व्यक्तयः केनचिदनुगतरूपेण सङ्गृहीता लक्ष्यन्त इति प्रथममपाकरोति * प्रथमे इति * तस्यैवापसङ्ग्राहकरूपस्याऽव्याप्त्यादिपरिहारेणानैकान्तिकव्यवस्थापकत्वसम्भवादुपजीव्यत्वाल्लाघवाच्च तदेव लक्षणमास्तामुपलक्षणादिप्रयासो व्यर्थ इत्यर्थः । अस्तु तर्हि तदेव लक्षणमिष्यत आह * न चेति * असम्भवे हेतुमाह * विरोधेति * विरोधमात्रस्यातिप्रसञ्जकत्वात्स्वस्वाभावविरोधाभिधाने ऽप्यभिहितदोषानिस्तार इत्यर्थः । द्वितीयमपवदति * प्रतीति * व्यक्तीनां प्रतिस्वं व्यावृत्तत्वेनाऽऽत्मनोपलक्ष्यत्वे–तेनैवाकारेण लक्षणप्रवेशे स्वीकार्ये सति मिलितानां लक्षणत्वं प्रत्येकं वा ऽऽद्ये सम्भवो द्वितीयेऽव्याप्तिरित्यर्थः ।

अनैकान्तिकस्य लक्षणान्तरं शङ्कते ।

११२ अनैकान्तिकस्य लक्षणान्तरनिरासः ।

स्यादेतत् सपक्ष एव विपक्ष एव वर्त्तते न यः सोऽनैकान्तिकइति लक्षणमस्तु तेन साधारणासाधारणानैकान्तिकोदाहरणव्याप्तिर्भवतीति । एतदप्यलक्षणम् । सद्धेतौ धूमादावपि गतत्वात् । नह्यसौ विपक्ष एव वर्त्तते, सर्वथा तत्रा-

(१) ८३५ पृष्ठस्य ९ पङ्क्तौ "उक्तार्ति व्याप्तिपरिहारायेत्यादि एतावत्पर्यन्तं शाङ्करीविद्यासागर्यौ रेकविध एव पाठ उपलभ्यते लेखनशैली तु शाङ्करीत्वं नाऽऽमापयति विद्यासागरीस्य पर्यांशः प्रमादाच्छाङ्कर्यां मिश्रित इत्यनुमीयते ।

वृत्तेः। नापि सपक्ष एव, पक्षेऽपि वर्त्तमानत्वात्। अथ पक्षवृत्तिरिति विशेषयासि तथापि सद्धेतोरपरित्यागः पक्षवृत्तित्वादेव सपक्ष एव वृत्तेरभावात्। असिद्धानैकान्तिकसङ्कराव्याप्तिश्च। अथ पक्षव्यतिरिक्त इति विशेषणं प्रक्षिपसि तदानीमप्रसक्तव्यावर्त्तनमनुपपन्नं। न हि पक्षाव्यतिरिक्तः सपक्षो विपक्षो वा सम्भवतीति सपक्षस्य विपक्षस्य च कुतश्चिद्व्यावर्त्तकं विशेषणमेवेदं तयोः कथं घटेत। अथ पक्षव्यतिरिक्ते वर्त्तमान इति विशेषयसि तदानीमसाधारणाव्याप्तिः नासौ पक्षव्यतिरिक्ते वर्तमानः। अथ पक्षव्यतिरेकेणेति विशेषणमुपादत्से तदाऽपि पक्षव्यतिरेकस्य पक्षविरहरूपस्योपलक्षणत्वं हेतुत्वं वा द्वयमपि पक्षमात्रवृत्तावसाधारणानैकान्तिके न सम्भवति पक्षविरहस्य तत्राऽसम्भवादेव। निषेध्यविशेषणत्वे त्वस्य सद्धेतौ गमनं स्यात्।

* स्यादेतदिति * साधारणाऽनैकान्तिकः सपक्ष एव न वर्तते विपक्षेऽपि वर्तमानत्वाद्विपक्ष एव च न वर्त्तते सपक्षेऽपि वर्तमानत्वादसाधारणस्य सर्वथा सपक्षविपक्षवृत्त्यभावादेव सपक्ष एव न वर्त्तते इति लक्षणं तुल्यं लक्ष्यावान्तरवैजात्यमात्रम्। सपक्षे यो न वर्त्तते सोऽनैकान्त इत्युक्ते सपक्षैकदेशवृत्तौ सद्धेतावतिव्याप्तिस्तन्निरासाय विशेषणमेवेति। सपक्ष एव

न वर्त्तते योऽसावनैकान्तिक इत्युक्ते विरुद्धेऽतिव्याप्ति-स्तन्निरासाय विपक्ष इत्युक्तम् । तथाऽपि विपक्षै-कदेशवृत्तिविरुद्धे ऽतिव्याप्तिपरिहारार्थमेवेति विशे-षणम् । तेन लक्षणेन किं लभ्यत इत्यत आह * ते-नेति * सपक्ष एव विपक्ष एव वर्त्तते न य इति वा-क्यस्योभयत्रापि योजयितुं शक्यत्वादित्यर्थः । केवल-व्यतिरेकिहेतावतिव्यापकमित्यभिसन्धाय दूषयति * एतदिति * अतिव्याप्त्यन्तरमाह * सादिति * अ-न्वयव्यतिरेकिणि धूमादिहेतावतिव्याप्तिमुपपादयति * * न हीति * सद्धेतोर्विपक्षमात्रावच्छिन्नवृत्त्यभावे हे-तुमाह * सर्वथेति * लक्षणांशान्तरं सम्भावयति * *नापीति* वर्त्तते इत्यनुषङ्गः । तत्रापि हेतुः पक्ष इति । सद्धेतावतिव्याप्तिपरिहाराय लक्षणं विशिनष्टि * अ-थेति * सपक्षविपक्षवृत्तिमात्रशून्योऽनैकान्त इति ल-क्षणस्य न सद्धेतावतिव्याप्तिः पक्षवृत्तेः सतः सपक्ष एव वर्त्तते नेत्यादिनिषेधे विपक्षवृत्त्यादिकमादाय यो-जनीयत्वादित्यर्थः । असमर्थमिदं विशेषणमिति परि-हरति *तथाऽपीति* पक्षवृत्तित्वविशिष्टस्य सद्धेतोः सपक्ष एव न वर्त्तते इति लक्षणांशो नास्ति पक्षवृत्तित्व-विशिष्टस्य पक्षे न वर्त्तनादित्यत आह * पक्षेति * पक्षे न वर्ततेऽथच पक्षवृत्तित्वविशिष्ट इति व्याघातात्पक्षे वृत्ति-राश्रयणीया तथा चातिव्याप्तितादवस्थ्यम् । न चैवमं-शतः स्ववृत्त्यापात इति वचनीयं, वृत्तिभेदोपादानेन तत्प-रिहारात्पक्षवृत्तित्वधर्मवतः पक्षवृत्तिधर्मिसम्बन्धोपगमे विरोधान्नेति भावः । न केवलमतिव्याप्तिरव्याप्तिरपी-

त्याह * असिद्धेति * रूपरसावनित्यौ चाक्षुषत्वादित्याद्यसिद्धानैकान्तिकसङ्करस्तद्व्याप्तिस्तस्य पक्षैकदेशे वृत्त्यभावादेवं स्वरूपासिद्धावनैकान्तिकसङ्कीर्णोदाहरणं द्रष्टव्यम् । कथितातिव्याप्त्यव्याप्तिपरिजिहीर्षया लक्षणं विशिनष्टि *अथेति* पक्षव्यतिरिक्ते सपक्ष एव विपक्ष एव वर्तते न यः सोऽनैकान्तिक इति लक्षणं, न चैवं सद्धेतावतिव्याप्तिः पक्षव्यतिरिक्ते सपक्ष एव वृत्तिनिषेधे विपक्षवृत्तिमादाय तथात्वात्तदभावाच्च नापि विरुद्धे, पक्षव्यतिरिक्तविपक्षमात्रवृत्तिनिषेधस्य सपक्षवृत्तिपर्यवसायित्वान्न चाऽसिद्धानैकान्तसङ्कराव्याप्तिः पक्षव्यतिरिक्ते सपक्ष एवेत्यादिलक्षणभावादिति भावः । पक्षव्यतिरिक्त इत्येतत्सपक्षविपक्षयोर्विशेषणमुत हेतोरिति विकल्प्य प्रथममपाकरोति * तदानीमिति * विशेषणं विशेष्यं कुतश्चिद्व्यावर्त्तयदेव भवति व्यावृत्तिश्चान्यप्रसक्तौ तथा च पक्षव्यतिरिक्तत्वविशेषणं पक्षव्यतिरिक्तसपक्षादि व्यावर्तयदप्रसक्तव्यावर्तकं स्यादित्यर्थः । पक्षव्यतिरिक्तत्वविशेषणस्याप्रसक्तव्यावर्तकत्वे हेतुमाह * न हीति * साध्यसमानधर्मत्वतद्विपरीतधर्मत्वयोस्तल्लक्षणत्वादित्यर्थः । मा भूत्पक्षाद्व्यतिरिक्तसपक्षादिव्यावर्तकमथ च विशेषण म्भवत्येवेत्यत आह * सपक्षेति *

"सम्भवे व्यभिचारे च स्यात् विशेषणमर्थव"दिति न्यायादित्यर्थः । हेतुविशेषणमिदमिति द्वितीयकल्पं शङ्कते * अथेति * पक्षव्यतिरेके वर्तमानः सपक्ष एव विपक्ष एव वर्तते न यः सोऽनैका-

न्त इति लक्षणं न चैवमप्रसक्तव्यावर्तनं सद्धेतौ त-थाभूतवृत्तेः प्राप्तायाः प्रतिषेधादित्यर्थः । अतिव्याप्त्य-भावे ऽप्यव्याप्तिरिति दूषयति * तदेति * अव्याप्तिमे-वोपपादयति * नासाविति * नित्या भूर्गन्धवत्त्वादि-त्यसाधारणः स पक्षमात्रवृत्तित्वात्पक्षव्यतिरेके न वर्त इत्यतिव्याप्तिरिति यावत् । उक्तदोषपरिहाराय विशे-षणान्तरं शङ्कते * अथेति * सपक्ष एव विपक्ष एव वर्तते न च इति लक्षणं सद्धेतौ यद्यप्यस्ति तथाऽपि पक्षव्यतिरेकेणावच्छिन्नविशेषणाभावा न्नातिव्या-प्तिर्न वा ऽव्याप्तिः पक्षमात्रवृत्तेरसाधारणस्य प-क्षव्यतिरेकेणान्यत्रावर्तनादेवोक्तलक्षणसम्भवादित्या-शङ्काकृतोऽभिमानः । पक्षव्यतिरेको हेतुविशेषण-मुत निषेध्यवृत्तिविशेषणमिति विकल्प्य यद्यायस्त-दाऽपि व्यतिरेकेणेति तृतीया किमित्थम्भूतलक्षणो,त हेताविति विकल्पयति * तदेति * किञ्चात इत्यत आ-ह * द्वयमिति * असम्भवे हेतुमाह * पक्षेति * यदा तृतीयेत्थम्भावलक्षणा तदा पक्षव्यतिरेकेण लक्षि-त इत्यर्थः स्याद्यदा हेतौ तदा पक्षव्यतिरेकेण नि-ष्पन्न इति तदुभयमपि न सम्भवति पक्षमात्रवृत्तावसा-धारणे पक्षव्यतिरेकस्यैवासम्भवादिति भावः । द्विती-यं कल्पं शङ्कते * निषेध्येति * सपक्ष एव विपक्ष एव या वृत्तिर्हेतोर्निषेध्या सा पक्षव्यतिरेकेण विशिष्टैव नि-षिध्यते ऽतोविशिष्टनिषेधे विशेषणपक्षव्यतिरेक-स्यापि निषेधात्पक्षे वृत्तिः सिध्यतीति ना ऽसाधा-रणा ऽव्याप्तिरित्याशयः । निषेध्यविशेषणत्वे तस्य को

दोष इत्यध्याहारः। दोषं भावते * सदिति * सद्धेतौ धूमादौ पचाविरहावच्छिन्नसपक्षमात्रवृत्तिर्नास्ति पक्षेऽपि वर्त्तनाद्विपक्षमात्रे च न सर्वथा तत्रावृत्तेरित्यतिव्याप्तिः केवलव्यतिरेकिणि चेति द्रष्टव्यम् ।

सुक्तन्यायमन्यत्रादिशति ।

६१४ अन्यत्र दूषणातिदेशः शङ्कान्तरनिरासश्च ।

एतेन पक्षं विना पक्षमन्तरेणेत्याद्यक्षरैर्विशेषाभिधानमपास्तम् । अथ यदि पक्षव्यतिरिक्ते वर्त्तते तदा सपक्ष एव विपक्ष एव न वर्त्तते यः सोऽनैकान्तिकः तथा सत्यसाधारणस्यापि व्याप्तिः सद्धेतौ चाप्रसक्तिरिति मन्यसे ? तदा भ्रान्तोऽसि तराम् । एवं सति नोभयस्यापि सङ्ग्रहः । असाधारणे तावद्यदि पक्षव्यतिरिक्ते वर्त्तेत, इत्येतन्न सम्भवति तस्य पक्षमात्रवृत्तेः कदाचिदपि पक्षव्यतिरिक्तवृत्तिसम्भावनानुपपत्तेः । साधारणेऽपि निश्चितसपक्षविपक्षवृत्तौ यदर्थं न पश्यामो यदि पक्षव्यतिरिक्तं वर्त्तेत इति, न हि निश्चितवृक्षभावायां शिंशपायां प्रयुज्यते यदि शिंशपा वृक्षः स्यादिति, तत्कस्य हेतोः संशयोपस्थापितात् कोटिद्वयादेकस्यां कोटौ तदाश्रये किञ्चिद्धर्मोपदर्शनार्थमारोप्यमाणायां यदीति प्रयुज्यते नतु निश्चित एव वस्तुनि तस्मादसाधारणानैकान्तिकसङ्ग्रहाय यदीत्याद्युपात्तं तन्न साधारणमपि समग्रहीत् ।

* एतेनेति * विनाऽन्तरेण विहायेत्यादिपदानां व्यतिरेकेणेत्यस्मादनर्थान्तरत्वादित्यर्थः । पक्षव्यतिरेके वर्त्तमानः सपक्ष एव विपक्ष एव वर्त्तते न यः सोऽनैकान्त इति लक्षणस्यासाधारणेऽव्याप्तिमुक्तां परिहर्तुं विशेषणान्तरं शङ्कते * अथेति * यदीति विशेषणेन किं लभ्यत इत्यत आह * तथा सतीति * यदि-शब्दः पाक्षिकत्वं द्योतयति तेन यदि पक्षातिरिक्ते सपक्ष एव विपक्ष एव वर्त्तते न यः सोऽनैकान्तिक इति लक्षणं नाव्यापकं पक्षस्य साधारणस्य सपक्षे विपक्षे च वर्त्तनाभावेऽपि यदि पक्षातिरिक्ते वर्त्तते इति पक्षातिरिक्तवृत्तित्वस्य पाक्षिकत्वकथनात्तदभावेऽपि व्याप्त्युपपत्तेरित्याशयः । एवमव्याप्तिं परिहृत्यातिव्याप्तिं परिहरति * सदिति * यदि पक्षातिरिक्ते वर्तते सद्धेतुस्तदा सपक्षमात्रे न वर्तते पक्षेऽपि वर्त्तनादिति नातिव्याप्तिरित्यर्थः । वृद्धिमिष्टवतो मूलमपि नष्टमिति कष्टां दशामाविष्ट इत्युपहसन्परिहरति * तदेति * अतस्मिंस्तदिति प्रत्ययाभावात्कथं भ्रान्तत्वमित्यत आह * एवं हीति * उभयाव्यापकस्योभयव्यापकत्वाभिमानादित्यर्थः। प्रतिज्ञामात्रे नेष्टसिद्धिर्विपरीतस्यापि सुप्रतिज्ञत्वादित्यतस्तदुपपादयति * असाधारणेति*.तदेव वा कुत इत्यत आह *तस्येति* यदिशब्देन पक्षव्यतिरिक्ते पाक्षिकी वृत्तिरुच्यते साऽसाधारणे न सम्भवति पक्षव्यतिरिक्ते वृत्यभावस्य निश्चितत्वादित्यर्थः । असाधारणाव्याप्तावपि सा-

१ विपक्षेतिसो० पु० पा० २ मभ्रान्तत्वमिति सो० पु० पा० ।

धारणानैकान्तं व्याप्नोत्येवेत्यत आह * साधारणेऽपीति * यद्यर्थे-यदि शब्दार्थे । पाक्षिकत्ववृत्तेरित्यर्थः । निश्चिततथाभावे यद्यर्थासम्भवं दृष्टान्तेनोपपादयति *न हि इति * निश्चितो वृक्षभावो वृक्षत्वं यस्यास्तस्यामित्यर्थः । तत्रापि यदिशब्दाप्रयोगस्तथाभावनिश्चयादुत कारणान्तरादिति कथं निर्णेतुं शक्यं येन दृष्टान्तत्वेन तदुपन्यास इति पृच्छति * तादिति * तथाभावनिश्चये सति यदि-शब्दप्रवृत्तिनिमित्तासम्भवादेव तदप्रयोग इति निर्णेतुं शक्यमिति परिहरति * संशयेति. * संशयोपस्थापितकोटिद्वयादेकस्यां कोटावारोप्यमाणायां यदीति प्रयुज्यते न तु निश्चित एव वस्तुनि, तस्यां कोटौ यदि-शब्दप्रयोगः किमित्यत आह * तादिति * यद्ययं पुरुषः स्यात्तर्हि शिरःपाण्यादि स्याद्यदि स्थाणुस्तदा वक्रकोटरादि भवेदिति तदाश्रितधर्मप्रदर्शनार्थमिति यावत् । निश्चितासाधारणाकारे वस्तुनि संशयोपस्थापितानेककोटिभ्यो निर्द्धार्यमाणैककोट्यभावेन तदाश्रयकिञ्चिद्धर्मोपदर्शनाभावेन प्रयोगासम्भवादित्यर्थः। तस्माद्यदीतिविशेषणमुपाददानो भ्रान्तोऽसि तरामित्युपसंहरति * तस्मादिति * न समग्रहीत्-न व्याप्तवदित्यर्थः ।

सङ्केतावतिव्याप्तिपरिहारमात्रप्रयोजनतया प्रकारान्तरेण लक्षणमुत्थापयति ।

११९ प्रकारान्तरेणानैकान्तलक्षणनिरासः ।

अथ विपक्ष एव सपक्ष एव यो हेत्वाभासः सोऽनैकान्तिक इति मन्यसे । तदप्यनुपपन्नम् । अनैका-

न्तिकत्वमनिश्चित्याग्रत एव हेत्वाभासत्वावधारणे तत एव हेतोरसाधकत्वं सिद्धमिति कृतं तदुपजीविनाऽनैकान्तिकत्वोपन्यासेन । अथाग्रे हेत्वाभासत्वं नावधार्य्यते तदा लक्षणस्य दुरवधारणत्वं विशेषणस्य हेत्वाभासत्वस्यानवधारणात् ।

* अथेति * सोऽयं चक्रबन्ध इवेति परिहरति * तदिति * एतल्लक्षणबलादनैकान्तिकत्वसिद्धेरग्रे हेत्वाभासत्वं निरधारि न वेति विकल्प्य प्रथमं प्रत्याह *अनैकान्तिकेति* द्वितीयं शङ्कते * अथेति * असम्भवेन तदपाकरोति * तदेति * अनैकान्तिकत्वानिश्चयादग्रे हेत्वाभासत्वानवधारणे कुतो लक्षणानवधारणमित्यत आह * विशेषणेति *विशिष्टसिद्धेर्विशेषणसिद्ध्यधीनत्वाद्धेत्वाभासत्वस्य च लक्षणविशेषणत्वादित्यर्थः ।

सजातीयविजातीयाभासानाभासव्यावृत्त्यर्थं लक्षणान्तरमनैकान्तस्य शङ्कते ।

६१६ अनैकान्तिकस्य प्रकारान्तरेण लक्षणनिरासः ।

अथ ब्रूषे असिद्धविरुद्धप्रकरणसमकालात्ययापदिष्टादन्यो हेत्वाभासोऽनैकान्तिक इति । तदप्युक्तन्यायेनैव निरस्तम् । किञ्चैवमसिद्धादिसङ्कीर्णस्यानैकान्तिकस्य न सङ्ग्रहः स्यात् । न च तदसिद्धादित्वादेवाहेतुर्भविष्यतीति वाच्यम् । इतरानैकान्तिकवद्विप-

क्षगतत्वादिनाऽप्युद्भावने दोषत्वसम्भवात् ।

*अथेति*कृत्यं स्पष्टम् । अनैकान्तिकत्वनिश्चयाद्ग्रे हेत्वाभासत्वनिर्णये तत एवासाधकत्वसिद्धेरनैकान्तोपन्यासो व्यर्थो ऽनवधारणे विशिष्टलक्षणासिद्धिरित्युक्तन्यायेन निरस्तमित्याह * तदिति * अव्यापकं चेदं लक्षणमित्याह * किं चेति * अनित्यः शब्दश्चाक्षुषत्वादित्यसिद्धसङ्कीर्णो ऽनैकान्तो न सम्भवति, पृथिवी न रूपवती भूतत्वादिति कालात्ययापदिष्टसङ्कीर्णः साधरणोऽनैकान्तः, पृथिवी न रूपवती गन्धवत्वादिति तत्सङ्कीर्णोऽसाधारणः, आकाशमनित्यं प्रमेयत्वादित्येतदाकाशं नित्यं विभुत्वादात्मवदित्यनेन सत्प्रतिपक्षसङ्कीर्णानैकान्तं, तदेतदनेकान्तकुलं नैतल्लक्षणं व्याप्नोत्यसिद्धादिसङ्कीर्णमसिद्धादित्वादेव हेत्वाभासो नानैकान्तिकत्वादतो नाव्याप्तिरित्यत आह * न चेति * पक्षधर्मत्वव्याप्तत्वप्रमितिविरहात्मनोद्भाव्यमानस्य दोषत्वसम्भवे कस्मान्नासिद्धतादिरित्यत आह * इतरेति * असङ्कीर्णानैकान्तेषु विपक्षगतत्वेन पक्षमात्रवृत्तित्वेन चोद्भावने यथा दोषत्वं तथा सङ्कीर्णेष्वपि विपक्षगतत्वादिनोद्भावने दोषत्वसम्भवादनैकान्तत्वमन्यथेतरत्रापि तन्न स्यादित्यव्याप्तिरित्यर्थः ।

साधारणत्वासाधारणत्वात्यन्ताभावानधिकरणत्वमस्तु तर्हि लक्षणमिति शङ्कते ।

१ अदोषत्वप्रसङ्गात् इति का० मु० पु० पा० ।

६१७ प्रकारान्तरेणानैकान्तलक्षणनिरासः।

अथ मन्यसे साधारणत्वासाधारणत्वयोर्व्यतिरेकाभ्यां मिलिताभ्यां विशिष्टादन्यत्वं साधारणासाधारणानैकान्तिकव्यापि सामान्यलक्षणमस्तु। मैवम्। यदि व्यतिरेकद्वयविशिष्टादन्यत्वं तर्हि तस्य विशिष्टस्य विशेष्ये विशेषणे च इदमस्तीत्यतिव्याप्तिः। यदि व्यतिरेकद्वयत्वेनोपलक्षणं तदोपलक्ष्यस्वरूपाणां यदि भेदेनैवोपलक्ष्यता तदा व्यतिरेकोऽप्यविशिष्टे तस्मिन्नास्ति। न हि यदेवाविशिष्टं तन्मात्रं विशिष्टं एवमभेदेनापि । भेदाभेदास्तदेवेति चेन्न। अतदपीति प्रसङ्गतादवस्थ्यात्। ततोऽत्यन्तान्यत्वं लक्षणमिति चेन्न। असिद्धादिसङ्कीर्णानैकान्तिकोदाहरणाव्यापनात्। स्वरूपाणाञ्चानन्त्येन तत्प्रतियोगिकान्यत्वावधारणस्याशक्यता तेषामानन्त्यात्। तन्मध्यपतितकतिपयान्यत्वे चान्यत्र कतिपये प्रसङ्गतादवस्थ्यात्। उपलक्षणत्वे चोभयव्यतिरेकस्यान्यत्वप्रतियोगिकोटिप्रवेशेन तत्सङ्गृहीतव्यतिरेकपक्षतापातात्। एवञ्चादृष्टत्वादिना गोत्वादेवम्भूताद्घ्राणादिविषाणित्वानुमानैश्चिसापातात्। हेत्वाभासान्तरमप्येवं किन्न समग्राहीति वासनायां यदेवानयोरितरेभ्यो वैधर्म्यं वाच्यं तस्यैव लक्षणस्य निर्वचनतापत्तेरिति।

१ त्तद्वैचातदपीति का.मु.पु.पा.। २ न्यत्वलक्षणावधारणातिसौ० पु० पा०।

*अथेति* साधारणत्वं सपक्षविपक्षयोः सत्वं तत्रासत्वमसाधारणत्वं, तयोर्व्यतिरेकावभावौ ताभ्यां मिलिताभ्यां यद्विशिष्टं तस्मादन्यत्वं लक्षणमिति योजना। अन्यत्वमित्युक्ते यत्किञ्चिदन्यत्वं सर्वत्रेति तन्निवारणाय व्यतिरेकेति पदम्। तावत्युक्ते घटव्यतिरेकविशिष्टभूतलादन्यत्वं पटेऽपीत्यतिव्याप्तिरेव तन्निवारणायासाधारणेति। असाधारणत्वव्यतिरेकविशिष्टादन्यत्वं साधारणे नास्तीत्यव्याप्तिः तन्निरासाय *असाधारणेति* साधारणत्वासाधारणत्वयोर्व्यतिरेकाभ्यां विशिष्टादन्यत्वमित्युक्ते साधारणव्यतिरेकविशिष्टादन्यत्वमसाधारणे नास्त्यसाधारणव्यतिरेकविशिष्टादन्यत्वं साधारणे नास्तीत्यव्याप्तिपरिहाराय मिलितेत्युक्तम्। मिलितद्वयव्यतिरेकविशिष्टादन्यत्वमुभयत्राप्यस्ति स्वव्यतिरेकस्य स्वारूढत्वायोगान्नैवमिति व्याप्तिः सम्यग्धेतोरसिद्धादेश्च व्यतिरेकद्वयविशिष्टत्वान्नापि सङ्कीर्णेऽव्याप्तिस्तत्र मिलितव्यतिरेकविशिष्टान्यत्वसम्भवादिति भावः। इयं कुटिलिका ऋजुपथप्रस्थितान् प्रति शोभते नास्मान्प्रतीति परिहरति *नैवमिति* व्यतिरेकद्वयं विशेषणमुपलक्षणं वाऽन्यत्वप्रतियोगिन इति विकल्प्य प्रथमनुवदति *यदीति* दूषयति *तर्हीति* तस्य विशिष्टस्य विशेष्यविशेषणमात्रत्वाभावाद्विशेष्ये विशेषणे चेदमस्तीति विशेष्ये सद्धेत्वादौ विशेषणे व्यतिरेकद्वये च ल-

१ असाधारणत्वव्यतिरेकविशिष्टादन्यत्व साधारणे नास्तीत्य व्याप्तिस्तन्निरासाय साधारणेति। सं॰ पु॰ पाठोऽधिकः।

क्षणातिव्याप्तिरित्यर्थः। द्वितीयमुपादत्ते *यदीति*व्यतिरेकद्वयोपलक्षितादन्यत्वमुपलक्ष्यांशे नास्ति केवलस्यैवोपलक्ष्यत्वादिति विशेष्यांशातिव्याप्तिपरिहारमात्रमस्मिन् पक्षे प्रयोजनम्। व्यतिरेकद्वयेन ये सद्धेत्वादय उपलक्ष्यन्ते ते केन चिदनुगतरूपेण किं वा भिन्नभिन्नरूपेण न द्वितीयोऽनन्ततयाऽशक्यत्वादुपेत्यापि दूषणमाह *तदेति* व्यतिरेकद्वयाविशिष्टेऽसिद्धादिरूपेण द्वयोपलक्षितादन्यत्वमस्तीत्यतिव्याप्तिरित्यर्थः। तदेवोपपादयति * न हीति * यद्व्यतिरेकद्वयविशिष्टं तत्केवलमिति न सम्भवति विशेषणविगमेऽपि विशिष्टप्रत्ययापातादुपलक्ष्यं च केवलमित्यर्थः। विशिष्टाविशिष्टयोरत्यन्तभेदवादे भवेदयमुपालम्भो ऽस्माभिः पुनर्भेदाभेदाभ्युपगमान्नातिव्याप्तिरिति शङ्कते * भेदेति * तदविशिष्टं तदेवापि विशिष्टमपीति यावत्। को भावः किमव्यतिरेकद्वयोपलक्षितादन्यत्वमात्रं लक्षणमुतात्यन्तान्यत्वमिति विकल्प्य प्रत्याह * नेति * अभेदवद्भेदस्यापि भावादभेदमाश्रित्यातिव्याप्तिपरिहारे भेदमाश्रित्यातिव्याप्तिप्रसञ्जनस्यापि सम्भवादवक्तव्यं लक्षणमापद्यत इत्यर्थः। द्वितीयमुत्थापयति * तत इति * व्यतिरेकद्वयोपलक्षितादत्यन्तान्यत्वं लक्षणं न च तदसिद्धावस्ति व्यतिरेकद्वयविशिष्टस्य तदुपलक्षितादन्यत्वान्न चैवमनैकान्तेऽपीत्यसम्भवः सर्वसङ्करपदस्यावस्तुत्वाद्विशिष्टाविशिष्टयोरेव भेदस्य विवक्षितत्वादित्यर्थः। अव्याप्त्या दूषयति * नेति * सङ्कीर्णानैकान्तेष्वसिद्धादिभ्योऽ-

न्यत्वं नास्ति प्रकारमात्रभेदादिसव्याप्तिरित्यर्थः। न केवल-मव्याप्तिरसम्भवोऽपीत्याह * स्वेति * भिन्नभिन्नाकारेणोपलक्षितस्वरूपाणामानन्त्ये तत्प्रतियोगिकान्यत्वस्य लक्षणस्य दुरवधारणतयाऽसिद्धेरित्यर्थः। प्रतियोगिनामानन्त्ये तन्निरूप्यान्यत्वानामप्यानन्त्याद्भावभेदस्यापि धर्मिप्रतियोगिभेदाधीनत्वादिति हेतुमाह * तेषामिति * उपलक्षितसर्वप्रतियोगिस्वरूपान्यत्वस्य दुरवधारणत्वेऽपि व्यतिरेकद्वयोपलक्षितकतिपयस्वरूपान्यत्वं शक्यावधारणं तदेव वा ऽत्र लक्षणं विवक्षितमतो नासम्भव इत्याशङ्क्याह * तदिति * उपलक्षितकतिपयासिद्धाद्यन्यत्वं तदुपलक्षितकतिपयासिद्धादिव्यक्तिषु विद्यते इति तत्रैवातिव्याप्तिरित्यर्थः। किं चोपलक्षणस्य काकवदुपलक्ष्याद्बहिर्भावप्रसिद्धेरन्यत्वप्रतियोगिभूता याऽसिद्धादिकोटिस्तत्र व्यतिरेकद्वयस्यानन्तर्भावेन ततोऽन्यत्वसम्भवात्तत्रातिव्यापकं लक्षणमिति भङ्गान्तरं भणति * उपलक्षणत्वे चेति * उभयव्यतिरेकस्योपलक्षणत्वेऽन्यत्वप्रतियोगिकोट्यप्रवेशेन तत्सङ्गृहीतव्यतिरेकपक्षतापातात्-व्यतिरेकान्यत्वं लक्षणीभूतं तत्पक्षतापातात्तदाश्रयत्वादिति यावत्। साधारणत्वासाधारणत्वयोर्व्यतिरेकाभ्यां मिलिताभ्यां विशिष्टादन्यः दनैकान्तिकमित्यत्र व्यतिरेकद्वयस्य विशेषणत्वे विशेष्यांशे विशेषणांशे चोपलक्षणत्वे व्यतिरेकाविशिष्ट उपलक्षणे च तस्मिन्नतिव्याप्तिमुक्त्वा ऽधुना दोषान्तरं भाषते * एवं चेति * गोशब्दो वज्रबाणस्वर्गाद्यनेकार्थेषु वर्तते तत्र येनादृष्टो बाणादिस्तेनादृष्टबाणादिना पुं-

सा वाणादिर्विषाणी गोशब्दवाच्यत्वात्सम्प्रतिपन्नगोवदित्यनुमानौचित्यमपि स्यात्तत्र हेतुरेवंभूतादिति'। गोत्वादित्यस्य न साधारण्यं विपक्षैकदेशेऽश्वादावभावान्नाप्यसाधारण्यं सपक्षेऽपि भावादिति व्यतिरेकद्वयविशिष्टाद्गोत्वात्तदन्यत्वानैकान्तलक्षणरहितात्सर्वसपक्षविपक्षसत्त्वं साधारण्यं तद्व्यतिरेकविशिष्टादन्यत्वं विवक्षितमिति चेन्न। लक्षणवाक्ये सर्वपदाश्रवणात्तदुपादाने च विपक्षैकदेशवृत्तेः सर्वसपक्षविपक्षवृत्तित्वासम्भवादेवं पृथिव्यादिष्वनैकान्त्याद्गोत्वाद्विषाणित्वानुमानमुचितं स्यादित्यनैकान्तभेदे विपक्षैकदेशवृत्तावव्याप्तिरिति यावत्। उपलक्षणं चैतच्छब्दो नित्यः सत्पक्षत्वादित्यादावपि द्रष्टव्यम्। धर्मिग्राहकमानविरोधादनौचित्यं विषाणित्वानुमानस्येत्यत आह * अदृष्टेति * स्वार्थानुमानरूपत्वान्न प्रतिवादिप्रत्यविरोध इत्यर्थः। यद्वा व्यतिरेकद्वयस्यापि तल्लक्षणत्वादनैकान्तत्वमस्तु को दोष इत्यत आह * एवमिति * व्यतिरेकद्वयस्याप्यनैकान्तिकत्वेन प्रतीतं व्यवहृतं च येन तेन तद्व्यावृत्तत्वेनानुमानं वक्तव्यं न च तत् लोके प्रतीतं व्यवहृतं चातोऽप्रसिद्धविशेषणत्वेनानुमानमात्रमनुचितं स्यादथ च तदौचित्ये ऽदृष्टवाणादिना पुंसा गौरियं वाणादिसदृशविषाणवती गोत्वाद्गवान्तरवदित्यनुमानं वाणस्यादृष्टतया प्रसिद्धविशेषणमुचितं स्यादसिद्ध्यादिविरहस्यातिरोहितत्वादित्यतिप्रसङ्ग इत्यर्थः। दूषणान्तरमाह * हेत्विति * स्वव्यतिरेकमेलकविशिष्टादन्यो ऽनैकान्त इत्यनेन

प्रकारेणासिद्धयादिहेत्वाभासान्तराणामप्यनैकान्तिकत्वेन सङ्ग्रहे सम्भवति किमिति तथा न समग्राहीति वासनायां चिन्तायां यदीतरेभ्यो व्यावृत्तं धर्ममनयोः साधारणासाधारणयोः पश्यता तथा नाकारि तर्हि तदेव वैलक्षण्यं लक्षणमास्तां उपजीव्यत्वादितरद् व्यर्थमित्यर्थः।

लक्षणान्तरं शङ्कते ।

६१८ अनैकान्तिकस्य लक्षणान्तरनिरासः।

असिद्धत्वादिप्रकारादन्येन प्रकारेण हेत्वाभासोऽनैकान्तिक इति चेत्। वाच्य स्तर्हि स प्रकारः कस्यान्यथा ततस्ततोऽन्यत्वं ज्ञयम्। किञ्चैवं तर्हि असिद्धत्वादन्यदनैकान्तिकमिनि कृत्वा विरुद्धादीनामनैकान्तिकत्वेनैव सङ्ग्रहे शक्ये विरुद्धादिवद्रूपान्तरासङ्ग्राह्ययोः साधारणासाधारणयोरेव यदनेन प्रकारेण सङ्ग्रहमकार्षी स्तत्र नियतं रुचिरेव भवतो नियन्त्री । यदा च त्वमसिद्धादिव्यतिरिक्ततयाऽनैकान्तिकं लक्षयसि तदा ऽसिद्धादिभेदकं प्रकारमनवगम्य तदन्यत्वमशक्याधिगममिति तदभिधाने प्रसक्ते तदाश्रया ये दोषा दर्शिता स्तैः स्मृतिव्यतिरिक्तत्वोक्तदोषैश्च निराकर्त्तव्योऽसि ।

*असिद्धेति* हेत्वाभासग्रहणं सम्यग्धेतुव्यावृत्त्यर्थं शेष विशदम्। अन्यत्वस्य धर्मिप्रतियोगिज्ञानाधीनज्ञानत्वादन्यत्वधर्मिप्रकारो वक्तव्यः स च वक्तुमशक्य इत्यभिप्रेत्य परिहरति *वाच्य इति* किमि-

त्यसौ प्रकारो वाच्य इत्यत आह * कस्येति * अन्यथा–तत्ज्ञानं विना ततस्ततो-ऽसिद्धादिप्रकारात्कस्य ज्ञेयत्वमित्यन्वयः। अतिप्रसङ्गबाधितं चेदं लक्षणमसम्भवीत्याह * किञ्चेति * असिद्धादन्योऽनैकान्त इति लक्षणेन विरुद्धादीनामप्यनैकान्तिकत्वेन शक्यसङ्ग्रहेण च लाघवे सति साध्यविपरीतव्याप्तत्वादिप्रकारस्य खण्डनाद्विरुद्धादि यथाऽसम्भवद्रूपान्तरं तथा ऽनयोरप्यसम्भवद्रूपान्तरत्वसाम्ये सत्यनेन प्रकारेण लक्षणकरणे नियामकं न पश्याम इत्यर्थः। अनैकान्तस्यैवानेन प्रकारेण लक्षणप्रणयनमुपेत्यापि खण्डनान्तरं वक्तुमनुवदति * यदेति * अनैकान्तादसिद्धादेर्भेदकप्रकारमनवगम्यानैकान्तलक्षणमुच्यते किं वा तदवगम्येति विकल्प्य प्रथमे ऽसम्भवमाह * तदेति * स्वरूपेणास्फुरतः प्रतियोगित्वे स्वात्मनो ऽपि तत्प्रसङ्गात् सति भेदइति विशेषणे च करम्बितनीरक्षीरयोर्व्यभिचारादसिद्धादिस्वरूपानवगमे तदन्यत्वलक्षणासिद्धिरित्याशयः। तस्मात् द्वितीयः परिशिष्यत इत्याह * इति तदिति * स्यादन्योन्याश्रय इति शेषः। अनैकान्ते सिद्धे तदन्यत्वमसिद्धादिप्रकारस्य सिद्ध्येत्सिद्धे च तस्मिन् तदन्यत्वमनैकान्तस्येति खण्डनान्तरमीरयति * तदिति* असिद्ध्यादिप्रकाराश्रया ये दोषास्तत्तत्खण्डनकाले व्याप्तत्वपक्षधर्मत्वप्रमितौ विरुद्धादेः सद्धेतुत्वं तदभावे तत्रैवातिव्याप्तिरित्यादयस्तैर्निराकर्तव्योऽसि,तथा स्मृतिव्यतिरिक्तज्ञानत्वमनुभवत्वमित्यत्र किं सर्वस्मृतिव्यतिरिक्तत्वं उत स्मृतिमात्रव्यतिरिक्तत्वमि-

त्यत्र ये दोषा उक्तास्तत्सदृशैः सर्वासिद्धादिव्यतिरेकस्या सर्वज्ञेन ज्ञातुमशक्यत्वं कतिपयतद्व्यतिरिक्तत्वे कतिपयेषु तत्रैवातिव्यापकं तन्मात्रव्यतिरिक्तत्वमित्यत्र मात्रशब्देन सामान्याभिधाने तत्रैवातिव्यापकं व्यक्त्यभिधाने पूर्वोक्तानिस्तार इत्येतैरपीत्यर्थः ।

अनैकान्तिकलक्षणान्तरमाशङ्क्य निराकरोति ।

६१९ अनैकान्तिकस्य लक्षणान्तरनिरासः ।

साध्येनाव्याप्यत्वे सति तदभावाव्याप्तोऽनैकान्तिक इत्यपि न । साध्याविशिष्टेऽपि गतत्वात् । विशेषणीभूतसाध्याव्याप्यत्वावगमाच्च । प्राथमिकाव्याप्यत्वासिद्धिरेवोपजीव्यादूषणं स्यात् । विशेषणांशस्यैव चासाधकत्वसाधनसामर्थ्याद्व्यर्थविशेष्यताऽपि । वस्तुगतिव्यापकत्वन्मात्रपर्यवसायिनि तदभावत्वन्मात्रपर्यवसायिनि वा तत्कालसन्दिह्यमानान्यतरव्यापकत्वे शब्दोऽनित्यः श्रोत्रविशेषगुणत्वादित्यादावसाधारणे व्यावृत्तत्वाच्च । वस्तुतः साध्याव्याप्ते तत्कालेऽपि च सत्प्रतिपक्षतयाऽनिर्द्धारितसाध्यव्याप्तिके प्रकरणसमे गतत्वाच्च । एतेनानैकान्तिकः सव्यभिचार इति प्रत्युक्तं वेदितव्यम् । सव्यभिचारस्योक्तप्रकाराधिकस्य निर्वक्तुमशक्यत्वादिति ।

* साध्येति * साध्येनाव्याप्तोऽनैकान्त इत्युक्ते विरुद्धे प्रसक्तिनिवारणाय तदभावेत्युक्तम् । तस्य साध्यविपरीतव्याप्तत्वात् । सम्यग्घेतुनिवारणाय साध्येति विशेषणम् ।

नचैवं कालाऽतीतप्रकरणसमयोरतिव्याप्तिस्तयोः सा-
ध्यव्याप्तयोः परमतिबन्धत्वात्रासिद्धव्याप्तत्वासिद्धादे-
रभावव्याप्तत्वात्सङ्कीर्णं चैवं सङ्गृहीतं स्यादित्यर्थः।
अतिव्यापकत्वादिति हेतुं टीकते * साध्येति * प्र-
पञ्चः सत्यः प्रमाणविषयत्वादिति तार्किकैर्यदा मी-
मांसकं प्रति प्रयुज्यते तदा ऽसौ साध्याविशिष्ट-
स्तस्मिन्नेतद्तिव्यापकं साध्यस्यैव हेतुतया तस्य भाव-
तदभावाभ्यामव्याप्तत्वादिति भावः। अपि च साध्या-
व्याप्तत्वं लक्षणं विशेषण मुपलक्षणं वा, द्वितीये त-
स्य काकवद्बहिर्भावात्साध्याभावाव्याप्त इत्येव लक्ष-
णमिति विरुद्धेऽतिव्यापकं, यदा विशेषणं तदा विशे-
षणावगमव्यतिरेकेण विशिष्टायोगात्प्रथमावगतव्या-
प्तत्वासिद्धिरेव दूषणं स्यात्सन्निहितप्रतिपत्तिकत्वा-
दित्याशयवानाह*विशेषणेति * व्यर्थविशेषणासिद्धं
लक्षणमित्याह * विशेषणेति * न केवलमतिव्याप्तिः
अव्याप्तिरपीत्याह * वस्तुगतीति * असाधारणाव्या-
प्तत्वादित्यन्वयः। तस्योदाहरणं * शब्द इति * तस्यैव
विशेषणं * तदिति * तत्काले सन्दिह्यमानमन्य-
तरव्यापकत्वं प्रयोगकाले साध्यतदभावयोरन्यतर-
व्यापकत्वं यस्य तत्तथोक्तं तत्र हेतुव्यापकत्वादिति। सा-
ध्यवत्पक्षमात्रपर्यवसायिनि। तदभाववन्मात्रपर्यवसायि-
नि-साध्याभाववत्पक्षमात्रपर्यवसायिनि वा। तत्र श्रोत्र
गुणत्त्वादिति हेतुः शब्द एव पक्षे वर्तते ततोऽन्यस्याका-
शविशेषगुणत्वाभावादित्यसौ साध्यव्याप्तः पृथिवी न
पाकजरूपाधिकरणं गन्धवत्त्वादित्ययं साध्याभावव-

न्मात्रपर्यवसायीत्यर्थः। अतिव्याप्त्यन्तरमाह * वस्तुत इति * शब्दो ऽनित्यः पक्षसपक्षयोरन्यतरत्वादित्यत्र प्रकरणसमे वस्तुतः साध्यव्याप्तत्वे सत्यपि प्रयोगकाले समबलहेत्वन्तरप्रतिबन्धतया साध्यव्याप्तेरनिर्धारितत्वादुक्तलक्षणं तत्रानिव्यापकमित्यर्थः। सपक्ष एवेत्यारभ्यानैकान्तिलक्षणखण्डनं यदुक्तं तत्सिंहावलोकनन्यायेन प्राङ्निरस्तेऽपि लक्षणेऽतिदिशति *एतेनेति* कथमन्यदीयो दोषोऽन्यत्रानुषजेदित्यत आह सेति * सपक्ष एव विपक्ष एव वर्त्तते न य इत्यादेरन्यस्य व्यभिचारस्य निरूपयितुमसामर्थ्यादित्यर्थः।

अनैकान्तिकखण्डनम्।

---

उत्तरवादप्रस्तावनिकां कुर्वन्व्यर्थविशेषणतामाह।

६२० सत्प्रतपक्षखण्डनारम्भः।

अपि चोक्तलक्षणविशेषणेन प्रमाणव्यवच्छेदकादन्येन किं व्यवच्छेद्यम्? केन चित् सत्प्रतिपक्षः केन चिदन्य इति चेत्।

कः? पुनः सत्प्रतिपक्षः। तथा हि—सत्प्रतिपक्षलक्षणमनुयुक्तो यथाह-समानबलबोधितसाध्यविपर्ययको हेतुत्वेनाभिमतः सत्प्रतिपक्ष इति। तन्न। तथा हि-किमिह बलं विवक्षितम्। सामर्थ्यमिति चेत्। तत्कुत्र कार्य्येऽभिमतं, न तावत्सर्व्वस्मिन्नेव कार्य्ये, सत्प्र-

तिपक्षहेत्वोर्भिन्नविषयबुद्ध्यादिजनकतया सर्व्वकार्य्ये सम-शक्तिकताया असम्भवात् । नापि यत्र कश्चित् कार्य्ये प्रकृतसाध्यं प्रति प्रतीयमानासिद्धत्वादिदोषेणापि प्रमेयत्व-प्रतिपादनादौ समर्थेन प्रतिहेतुना सत्प्रतिपक्षताप्रसक्त्या सर्व्वहेतूनां शक्यप्रकरणसमहेत्वाभासत्वापत्तेः । नापि पूर्व्वहेतुसाध्याभावबोधनरूपे कार्य्ये, उत्तरहेतोरेवमसत्प्रतिपक्षत्वे स्वसाध्यसाधकतापत्तेः । प्रतिहेतोरिति चेन्न । तत्प्रतिहेतोरसामर्थ्यादेव समशक्तिकत्वानुपपत्तेः । इत्थमेव न हेतुसाध्यस्य विपर्य्ययबोधनेऽपि ।

* अपिचेति * असिद्धविरुद्धकालात्ययापदिष्टप्रकरणसमान्यो हेत्वाभासो ऽनैकान्तिक इति लक्षणे हेत्वाभास इति हेत्वाभासविशेषणं प्रमाणव्यवच्छेदकं तदा ऽन्येन किं व्यवच्छेद्यमित्यर्थः । व्यवच्छेद्यं विशदमेवात्र सत्प्रतिपक्षादीति शङ्कते *केन विदिति* अन्यः स्कालात्ययापदिष्टादिरित्यर्थः । असिद्धस्य सम्भरसादिवद्व्यवच्छेद्यत्वात्सत्प्रतिपक्षस्य सिद्धिर्वक्तव्या सा च दुर्वचनीयेत्याशयवानाह * क इति * सन् प्रतिपक्षो विद्यमानो यस्य स सत्प्रतिपक्ष इत्यर्थः । समानबलेन बोधितसाध्याभावो हेतुत्वेनाभिमतः सत्प्रतिपक्ष इति लक्षणाधीनान्वयात्तत्सिद्धिरित्याशङ्क्याह * तथा हीति * अनुयुक्तः-पृष्टः । बोधि-

1 हेतुसाध्यस्य बोधनेऽपीति सो० पु० पा० ।

तसाध्यविपर्ययो नेदं रजतमिति प्रत्ययो भवति ज्ञाप्यस्य साध्यत्वादतउक्तं * हेत्विति * कालात्ययापदिष्टव्युदासाय समानपदम् । अनैकान्तिकासिद्धौ तद्व्यावृत्ततया सत्प्रतिपक्षो लक्ष्यते लक्षिते चसत्प्रतिपक्षे ऽनैकान्त इतीतरेतराश्रयमभिप्रेत्य दूषयति * तन्नेति * दूषणं विशदयितुं बलशब्देन सामर्थ्यं विवक्षितमुत पक्षधर्मत्वादीति विकल्पयति * किमिति * प्रथमं शङ्कते *सेति * सामर्थ्यस्य कुत्र कस्येति विषयप्रतियोगिनियमाद्विषयो वाच्यः स च ज्ञाप्य उत्पाद्यो वा भवति सर्वथाऽपि तत्सामर्थ्यं सर्वस्मिन्नेव स्वकार्येऽभिमतमुत यत्र कुत्र चित्कार्ये किं वा पूर्वहेतुसाध्याभाव बोधते किं वा प्रतिहेतु साध्याभावहेतुबोधनेऽन्यत्र वेति विकल्पाभिप्रायेणाह * तदिति * प्रथमं पराकरोति * नेति * स्वशब्देन प्रतिहेतू द्वावपि विवक्षितौ कुतो नैवमित्यत आह * सदिति * आकाशमनित्यमस्मदादिवाह्येन्द्रियग्राह्यगुणाधिकरणत्वाद्घटवदाकाशं नित्यं सदकारणत्वादात्मवदिति सत्प्रतिपक्षहेतोर्भिन्ने विषये नित्यत्वादौ बुद्धिव्यवहारजनकतया सर्वत्र स्वकार्ये समशक्तिताया असम्भवाल्लक्षणासिद्धिः सामर्थ्यस्य भिन्नकार्यगोचरत्वे समत्वानुपपत्तेरित्यर्थः । द्वितीयमपवदति * नापीति * कुत इत्यत आह * प्रकृतेति * सर्वहेतूनां शक्यं प्रकरणसमहेत्वाभासत्वं येषां ते शक्यप्रकरणसमहेत्वाभासस्तेषां भावस्तदापत्तेरित्यन्वयः । तदुपपादयति * प्रकृतसाध्येति * शब्दो ऽनित्यश्चाक्षुप-

त्वादित्यनेन प्रकृतानित्यत्वसाध्यं प्रति प्रतीयमानासिद्धत्वादिदोषेणापि प्रमेयत्वप्रतिपादनादौ यत्र क्वचित्कार्ये समर्थेन सत्प्रतिपक्षतायाः प्रसक्त्या धूमवत्त्वादिहेतूनामपि प्रकरणसमत्वापत्तिरित्यर्थः । तृतीयं कल्पमपाकरोति *नापीति* प्रतिज्ञातमर्थं हेतुनोपपादयति *उत्तरेति* शब्दो नित्यः पक्षसपक्षयोरन्यतरत्वात्सपक्षवदित्यत्र प्रथमहेतोः साध्याभावबोधनरूपे कार्ये सामर्थ्येऽपितेनोत्तरहेतुना प्रथमहेतोः सत्प्रतिपक्षत्वेऽपि प्रथमहेतोः पुनः प्रथमहेतुसाध्याभावबोधने सामर्थ्यासत्वेन तेनोत्तरहेतौ सत्प्रतिपक्षता न स्यादित्यव्याप्तिरित्यर्थः । तुरीयं कल्पं शङ्कते * प्रतीति * प्रतिहेतोः साध्याभावबोधनरूपे कार्ये सामर्थ्यं विवक्षितं पूर्वहेतुरप्युत्तरस्य प्रतिहेतुर्भवतीति नाव्याप्तिरित्यर्थः । एवं सति लक्षणासिद्धिरिति परिहरति * नेति * तर्हि वादिप्रयुक्तहेतुसाध्ये वा तत्प्रतिहेतोर्भिन्नविषयतया सामर्थ्याभावादेव समशक्तित्वानुपपत्तिर्द्वयोः समर्थयोरेककार्यसामर्थ्यस्यैव समत्वादित्यर्थः । पूर्वहेतुसाध्यप्रतियोगिकाभावविषयत्वेन समशक्तित्वे वस्तुत्वविषयतया सर्वहेतूनां समशक्तित्वापत्तिरित्याशयः । अन्यत्रैवेति परिशिष्टेऽपि पक्षे कथितदोषमतिदिशति * इत्थमिति * पूर्वहेतुसामर्थ्यबोधनेऽपि द्वितीयहेतोः सामर्थ्यादेव समशक्तित्वानुपपत्तिरित्यर्थः ।

एवं मीमांसकाभिप्रायेण बलशब्देन सामर्थ्यमुच्यते इति प्रथमं कल्पं पराकृत्य पक्षधर्मत्वादि बल-

मिति तार्किकाभिप्रायेण द्वितीयकल्पमुद्भावयति।

६२१ तार्किकाभिमतबलशब्दार्थनिरासः।

अथोच्यते स्वकीये स्वकीये प्रकृतसाध्ये यत् सामर्थ्यं पक्षसपक्षसत्त्वविपक्षव्यावृत्तत्वाबाधितविषयत्वलक्षणं तत् सत्प्रतिपक्षहेत्वोस्तुल्यं तदभिप्रायेणेदं समबलाभिधानं तेनेदमुक्तं भवति पक्षसपक्षसत्त्वविपक्षव्यावृत्तत्वाबाधितविषयत्वै स्तुल्येन बोधितसाध्यव्यतिरेकः सत्प्रतिपक्ष इति। नैतदपि युक्तम्। प्रतीयमानभागासिद्धत्वेनापि प्रतिहेतुना सत्प्रतिपक्षत्वप्रसङ्गात्। कियत्यपि पक्षे सत्त्वेन तस्य पक्षसत्त्वभावात्। नचैष्टव्यमेव भागासिद्धेनापि सत्प्रतिपक्षत्वं, प्रतीयमानदोषान्तरेणापि तथा सति सत्प्रतिपक्षत्वस्यैष्टव्यत्वापत्तेः हेत्वाभासान्तरत्वाविशेषात्। न च सर्वपक्ष इति कृते नायं दोष इति वाच्यम्। यत्रैक एव पक्षः प्रतिहेतौ तस्य सत्प्रतिपक्षस्याव्यापनात्। तत्र पक्षस्य सर्वशब्दार्थत्वाभावादेव सर्वपक्षसत्त्वाभावेनोक्तलक्षणानुपपत्तेः। एतेन यावदित्यपि पक्षविशेषणं दोष उक्तप्रायः।

* अर्थेति * नित्यः शब्द आकाशैकाधिकरणत्वात्परमहत्त्ववदनित्यः शब्दः सामान्यवत्त्वे सति अस्मदादिबाह्येन्द्रियग्राह्यत्वाद्घटवदिति सत्प्रतिपक्षहेतोर्निजस्वकीये साध्ये पक्षधर्मत्वसपक्षसत्त्वविपक्ष-

व्यावृत्तत्वाबाधितविषयत्वं नाम रूपचतुष्कं तत्तुल्य मित्यर्थः । लक्षणवाक्ये पक्षशब्दः प्रयुक्त इदानीं पक्षधर्मत्वादि कथ्यते इत्यसम्बद्धमिदमित्यत आह * तदिति * एवं स्वाभिप्रायमुक्त्वा लक्षणवाक्यस्य पर्यवसितमाह * तेनेति * किमित्यत आह *पक्षेति * व्यतिरेको ऽभावः । पक्षसत्त्वमात्रं विवक्षितमुत सर्वपक्षसत्त्वमिति विकल्प्य प्रथमं दूषयति * नेति * कुत इत्यत आह * प्रतीति * परमाण्वाकाशौ नित्यौ नीरूपद्रव्यत्वादात्मवदित्यस्य तावनित्यौ मूर्तमहत्त्वाद्घटवदित्यनेन भागासिद्धेनापि सत्प्रतिपक्षत्वप्रसङ्गादित्यर्थः । भागासिद्धस्य पक्षसत्त्वाभावात्कथमतिव्याप्तिरित्यत आह * क्रियतीति * भागासिद्धेन सत्प्रतिपक्षत्वमिष्यत एवातो नातिव्याप्तिरलक्ष्ये लक्षणगमनस्यैव तथात्वादित्यत आह * प्रतीति * प्रतीयमानविरुद्धत्वादिदोषान्तराणामपि सत्प्रतिपक्षत्वापातादित्यतिप्रसङ्गादित्यर्थः । भागासिद्धेन सत्प्रतिपक्षस्वीकारे हेत्वाभासान्तरेणापि तथात्वस्वीकारः कस्मादित्यत आह * हेत्विति * प्रकरणसमाख्यस्याभासान्तरत्वसाम्यादित्यर्थः । अस्तु तर्हि सर्वपक्षसत्त्वमिति द्वितीयः कल्पस्तत्रोक्तदोषाभावादित्यत आह * न चेति * कुतो न वाच्यमित्यत आह * यत्रेति * आकाशं नित्यं नीरूपद्रव्यत्वादात्मवदाकाशमनित्यं बाह्येन्द्रियग्राह्यविशेषगुणाधिकरणत्वाद्घटवदित्यत्र सत्प्रतिपक्षहेतोः पक्षस्यैकतया ऽव्याप्तिरित्यर्थः । पक्षस्यैक्यमात्रेण विशिष्टलक्षणस्य तदसङ्ग्रहः कस्मादि-

त्यत आह * तत्रेति * तर्हि यत्र यावान् पक्षो ऽस्ति तत्र तावति पक्षे सत्त्वं विवक्षितमतो नोक्तदोष इत्यत आह * एतेनेति * यावच्छब्दस्य परिमाणार्थत्वाद्यत्र परिमाणमेव पक्षीकृत्याकाशपरिमाणं नित्यं सर्वगतद्रव्यपरिमाणत्वादात्मपरिमाणवदाकाशपरिमाणमनित्यं भूताधिकरणमहत्परिमाणत्वात्पृथिवीपरिमाणवदिति प्रयुज्यते तत्र परिमाणस्य परिमाणान्तराभावादव्याप्तिदोष उक्तप्राय इत्यर्थः ।

पक्षधर्मत्वादिरूपचतुष्केण समानहेतुबोधितसाध्यव्यतिरेक इति लक्षणे सर्वेतिविशेषणोपादानेऽव्याप्त्यन्तरमाह ।

६२२ सत्प्रतिपक्षलक्षणेऽव्याप्तिः ।

किञ्चान्वयव्यतिरेकिणः केवलव्यतिरेकिणा, केवलव्यतिरेकिणश्चान्वयव्यतिरेकिणा सत्प्रतिपक्षे लक्षणमिदं नास्ति सपक्षसत्त्वया तुल्यतायास्तत्राभावात् । न च सपक्षसत्त्वया तुल्येनेति लक्षणे तदनुरोधान्न कर्त्तव्यमेव, तथासत्यसाधारणानैकान्तिकतया निश्चितेनापि सत्प्रतिपक्षत्वप्रसङ्गात् । नचान्वयव्यतिरेकिणैवान्वयव्यतिरेकिणः केवलव्यतिरेकिणैव केवलव्यतिरेकिणः सत्प्रतिपक्षता न व्यत्यासेनापीति नियमोऽभ्युपगन्तुं शक्यः, उभयोरप्यनवगम्यमानदोषान्तरत्वदशायामेक-

सम्बधिनो दोषस्यावश्यम्भावितया केतरस्य व्याप्यत्वपक्षधर्म्मत्वावगमो मे भ्रान्तिरिति बुद्धिमादाय प्रतिपत्तु निश्चयोत्पत्तिप्रतिबन्धमाधातुं केवलव्यतिरेकिणि अन्वयव्यतिरेकिणोऽन्वयव्यतिरेकिणि च केवलव्यतिरेकिणः प्रतिहेतोः सामर्थ्यस्य दुरपवादत्वात् । एतदेव च सत्प्रतिपक्षत्वस्य दोषत्वाभ्युपगमे मूलं यन्नाम व्याप्तिपक्षधर्म्मताप्रमितिरस्मिन् सति न भवितुमर्हतीति ।

* किं चेति * आत्मा स्वव्यवहारहेतुप्रकाशोऽदृष्टत्वाद्धटवदिति केवलव्यतिरेकिणाऽऽत्मा प्रत्यक्षः महत्वे सत्यश्रावणविशेषगुणाधिकरणत्वाद्धटवदित्यन्वयव्यतिरेकिणः सत्प्रतिपक्षत्वं, विवादाध्यासितं सर्वं चित्कर्तृकं सावयवत्वादिति केवलव्यतिरेकिणो विगीतमकर्तृकं शरीर्यजन्यत्वादात्मवदित्यन्वयव्यतिरेकिणा सत्प्रतिपक्षत्वं तत्रेदं लक्षणं नास्तीत्यव्याप्तिः । सत्प्रतिपक्षत्व इति भावपरो निर्देशः स चेल्लक्ष्यः किमिति लक्षणाभाव इत्यत आह *सेति* केवलव्यतिरेकिणश्च त्रिरूपतया सपक्षसत्वाभावादित्यर्थः।तर्हि पक्षसत्वविपक्षव्यावृत्त्यबाधितविषयत्वैस्तुल्येन बोधितसाध्यव्यतिरेक इत्येतावल्लक्षणं क्रियते तत्सङ्ग्रहार्थमित्यत आह * न चेति * तत्परित्यागे को दोष इत्यत आह * तथा सतीति * शब्दो नित्यः कार्यत्वाद्धटवदित्यस्य नित्यः शब्दः आकाशविशे-

१ पक्षतरस्येति सो० पु० पा० ।

पगुणत्वादित्यनेन सत्प्रतिपक्षता प्रसज्येत पक्षसत्त्वविपक्षव्यावृत्त्यबाधितविषयत्वैस्तुल्यत्वात्तस्यापीत्यर्थः। अन्वयव्यतिरेकिणः केवलव्यतिरेकिणा केवलव्यतिरेकिणोऽन्वयव्यतिरेकिणा सत्प्रतिपक्षतैव नास्ति किन्तु केवलव्यतिरेकिणैवान्वयव्यतिरेकिणोऽन्वयव्यतिरेकिणैवेति नियमाभ्युपगमात्राव्याप्तिरित्याशङ्क्याह * नचेति * इत्थं नियमाभ्युपगमे को नाम विरोध इत्यत आह * उभयोरिति * अन्वयव्यतिरेकिणि केवलव्यतिरेकिणः प्रतिहेतोर्निश्चयोत्पत्तिप्रतिबन्धमाधातुं केवलव्यतिरेकिणि वाऽन्वयव्यतिरेकिणो निश्चयोत्पत्तिप्रतिबन्धमाधातुं सामर्थ्यस्य दुरुपपादत्वात्-दुरपह्नवत्वादित्यन्वयः। एतदेवोपपादयति एकतरस्यासिद्ध्यादिदोषान्तरवत्त्वावगमे-ऽन्यस्य सद्धेतुत्वनिश्चयसम्भवो-ऽन्यदा तूभयोरप्यनवगम्यमानदोषान्तरत्वदशायां विरुद्धहेतुद्वयोपनीतधर्मोध्यासस्यैकधर्मिण्यसम्भवेनैकहेतुसम्बन्धिनो दोषस्याऽऽवश्यकतया कतरस्य व्याप्तत्वपक्षधर्मत्वावगमो मे भ्रान्तिरिति बुद्धिमाधाय प्रतिपत्तुर्विमर्शयितुरित्यर्थः। इतरेतरनिश्चयोत्पत्तिप्रतिबन्धकत्वमस्तु, माऽस्तु सत्प्रतिपक्षता तथा च कोऽत्र दण्डनिपात इत्यत आह * एतदिति * तदेव विशदयति * यदिति * अन्यत्रापि सत्प्रतिपक्षस्वीकरणमिदमेव यदुत समबलप्रतिहेतौ सति व्याप्त्यादिप्रमितिर्भवितु नार्हतीति ततोऽन्यत्रापि सत्प्रतिपक्षता न स्यादित्यर्थः।

तुल्येनेति विशेषणप्रयुक्तदोषमात्रपरिहारप्रयोज-

नतया पदान्तराधापपूर्वकं लक्षणं शङ्कते ।

६२३ सत्प्रतिपक्षस्य लक्षणान्तरनिरासः ।

अथाभिधत्से पक्षसपक्षसत्त्वविपक्षव्यावृत्त्यबाधितविषयत्वयोगिना बोधितसाध्यविपर्ययः सत्प्रतिपक्ष इति । न । निरस्तप्रायत्वात् । पक्षपदे सर्वशब्दविशेषणप्रक्षेपाप्रक्षेपपक्षोक्तदोषस्य केवलव्यतिरेकयव्यापकत्वस्यापि भावात् । किञ्च सोपाधिमसिद्धभेदं वदतां मते सोपाधितया निश्चीयमानेऽपि सर्वं यथोक्तमिदं लक्षणमस्तीति तेनापि सत्प्रतिपक्षता स्यात् ।

* अथेति * निश्चितासिद्धादिभावेन सत्प्रतिपक्षताप्रसङ्गनिवारणाय पक्षसत्त्वादिविशेषणं द्रष्टव्यम् । इदं च मृतकल्पं कथमुज्जीवितुमर्हतीत्याह * नेति * निरस्तप्रायत्वे हेतुं कथयति * पक्षेति * सर्वेति विशेषणं पक्षस्योपादीयते न वा न चेद्भागासिद्धेनापि सत्प्रतिपक्षता, प्रथमे पक्षैक एव पक्षस्तद्व्यापनमिति दोषस्यान्वयव्यतिरेकिकेवलव्यतिरेकिणोरितरेतरसत्प्रतिपक्षत्वाव्यापकस्य च भावादिति भावः । पार्थिवपरमाणुरूपरसगन्धस्पर्शा अनित्याः पाकजत्वाद्घटरूपादिवदित्यस्य पार्थिवपरमाणुरूपादयो नित्याः परमाणुरूपत्वादाप्यपरमाणुरूपादिवदित्यनेनभावकार्यत्वेनोपाधिना निश्चितव्याप्यत्वासिद्धेनापि सत्प्रतिपक्षता स्यादित्यतिव्याप्तिमाह * किं चेति *

१ पदान्तरामावेति सो० पु० पा० ।

भागासिद्धादिनाऽपि सत्प्रतिपक्षताप्रसङ्गं परिहर्तुं प्रकारान्तरेण लक्षणं शङ्कते ।

६२४ प्रकारान्तरेण लक्षणनिरासः ।

अथ ब्रूषे—असिद्धविरुद्धानैकान्तिकबाधितविषयत्वहीनेन बोधितसाध्यासत्त्वः प्रकरणसम इति । नैतदपि सुस्थम् । आपाततो ऽस्फुरद्दोषेण वस्तुगत्या चासिद्धादिदोषवता सत्प्रतिपक्षतास्वीकारात् तदव्यापकत्वात् । किञ्च विरुद्धार्थगोचरयोः सत्प्रतिपक्षहेत्वोर्मध्येऽवश्यमन्यतरासिद्धादिदोषेण भवितव्यमन्यथा धर्म्मिणोर्विरुद्धधर्माध्यासप्रसङ्गात् । तत्रैकस्य व्यवच्छिद्य दोषानिश्चयात्प्रतिहेतावप्यसिद्धादिदोषाशङ्कायामापतितायामसिद्धादिहीनेनेति लक्षणांशस्यानिश्चयात् लक्षणस्य दुरवधारणत्वम् । न च वाच्यं किमर्थं सत्प्रतिपक्षहेत्वोरन्यतरासिद्धादिकमवश्यमभ्युपेयं सत्प्रतिपक्षलक्षणदोषदुष्टत्वादेव तयो र्न धर्म्मिणो विरुद्धधर्माध्यस्तत्वमापत्स्यत इति, यतोऽवश्यं दुष्टे हेतौ व्याप्तिः पक्षधर्म्मताया वाऽभावेन भवितव्यं तत्सत्ताभ्युपगमे साध्यसत्ताया अभ्युपगमप्रसङ्गात् । बाधादीनामप्युपाधिख्यापनद्वारा व्याप्त्यादिभङ्ग एव पर्यवसानात् । सत्प्रतिपक्षत्वादुन्नीयमानोऽपि व्याप्तिपक्षधर्मताभङ्गो न विशिष्ये-

कस्मिन् हेतौ निर्णेतुं शक्यः अन्यतरस्मिन् व्याप्त्यादिभङ्गेनापि सत्प्रतिपक्षत्वस्योपपत्तेः अतो विशेषनिष्ठतया तदुन्नयने स्थिते यदि साक्षादसावनवधार्यते तदानीमसिद्धिः। अथ लिङ्गतोऽनुमीयते तदाऽनैकान्तिकादेरन्यतमं दूषणं वस्तुगत्याऽस्ति सत्प्रतिपक्षे तत्कथमसिद्ध्याद्यन्यतमं नाभ्युपेयं तत्र, तस्मात्तस्य तस्य दोषस्य कुत्र द्वयोर्मध्येऽस्तित्वमस्तीत्यन्यतरानिर्द्धारणे प्रतिहेतावपि तच्छङ्कायां सत्यामसिद्ध्यादिहीनेनेति लक्षणांशस्य दुरवधारणत्वं दुष्परिहरमेव।

* अथेति * असिद्ध्याद्याभासचतुष्केण सत्प्रतिपक्षतानिवारणाय क्रमेण विशेषणचतुष्कं द्रष्टव्यम्। असिद्धत्वादिदुष्टत्वप्रतीतिरहितेन बोधितसाध्यविशेषणत्वं किं वा वस्तुतोऽप्यसिद्धत्वादिहीनेनेति विकल्प्य द्वितीयं अव्याप्त्या दूषयति * नेति * कुत इत्यत आह * आपातत इति * वर्णत्वमुत्पत्तिमदाश्रयं वर्णाश्रयजातित्वात्सत्तावदित्यादेर्वर्णा नित्याः श्रावणत्वाच्छब्दत्ववदित्यादिना झटित्यप्रतीयमानदोषेण सत्प्रतिपक्षत्वस्वीकाराद्व्याप्तिरित्यर्थः। नापि प्रथमोऽसम्भवादित्यभिप्रेत्याह * किं चेति * वर्णा नित्याः ध्वन्यन्यत्वे सति श्रावणत्वाच्छब्दत्ववद्वर्णा अनित्याः सामान्यवत्त्वे सति श्रावणत्वात् ध्वनिवदित्यनयोः प्रतिहेत्वोर्मध्येऽन्यतरस्यासिद्ध्यादिदोषेणावश्यं भ-

वितव्यमिति निश्चयादप्रतीयमानतथात्वमसिद्धमित्याशयः। उभयोरपि व्याप्तत्वपक्षधर्मत्वाभ्यां प्रमितत्वात्सद्धेतुतैव किं न स्यादित्यत आह *अन्यथेति* उभयोरपि सद्धेतुत्वे नित्यत्वानित्यत्वलक्षणविरुद्धधर्मसम्बन्धाद्धर्मिभेदप्रसङ्ग इत्यर्थः। ननु द्वितीयहेतौ न सत्प्रतिपक्षासिद्ध्यादिदोषस्तस्य प्रथमहेतुनिष्ठतयानिश्चयादतोऽसिद्ध्यादिहीनेनेति लक्षणांशसिद्धिरित्यत आह *तत्रेति* हेतोः प्रतिहेत्वोर्वैकस्य विशेषदोषनिश्चये कारणाभावादेकतरसम्बन्धित्वनिश्चयात्प्रतिहेतावपि तच्छङ्कायामापतितायां सत्यामसिद्ध्यादिहीनेनेति विशेषणासिद्ध्या विशिष्टलक्षणासिद्धिरित्यर्थः। हेतुप्रतिहेत्वोर्मध्येऽन्यतरस्यासिद्ध्यादिकमभ्युपेयमिति यदुक्तं तत्किमर्थमभ्युपगम्यते। धर्मिणो विरुद्धधर्माध्यासप्रसङ्गादिति चेन्न। सत्प्रतिपक्षतालक्षणदोषदुष्टत्वादेव तदप्रसक्तेरित्याशङ्क्याह * न चेति * कुतो न वाच्यमित्यत आह * यत इति * व्याप्तत्वपक्षधर्मत्वाभ्यानुपेतस्यैव दुष्टत्वस्वीकारे किं बाधकमित्यत आह * तदिति * व्याप्त्याद्यभ्युपगमे व्यापकसत्ताऽभ्युपगन्तव्याऽन्यथा व्याप्तेरेवासिद्धेरिति विरुद्धधर्माध्यासप्रसङ्गस्तदवस्थ इत्यर्थः। यथा बाधादीनां व्याप्त्यादिभङ्गनिरपेक्षतया दोषत्वमेवं सत्प्रतिपक्षस्यापि तन्निरपेक्षस्य दोषत्वं किं न स्यादित्यत आह * बाधेति * अतोऽसिद्धव्यतिरिक्तहेत्वाभासस्य व्याप्त्यादिभङ्गलिङ्गत्वनियमात् सत्प्रतिपक्षत्वेनापि व्याप्त्यादिभङ्ग उन्नेय इति यावत्। सत्प्रतिपक्षत्वादुन्नीयमानो व्याप्त्यादि-

भङ्गः प्रथमहेतुनिष्ठतयोक्तीयनेऽन्यथा प्रतिहेतुनिष्ठत्वे सत्प्रतिपक्षत्वस्यैवानुपपत्तेरित्यत आह * सदिति * अर्थापत्तेरन्यथोपपत्तेरिति हेतुमाह *अन्येति* अन्यतरदोषेणापि विरुद्धधर्माध्यासपरिहारादापाततो दोषस्फुरणाच्च सत्प्रतिपक्षत्वोपपत्तिरित्यर्थः । अस्तु विशेषेणैव तदुक्तवनं किमेतावता प्रस्तुते स्यादित्यत आह *अत इति* अविशेषनिष्ठतयेति पदच्छेदः । हेतुप्रतिहेत्वोरन्यतरमात्रनिष्ठतया व्याप्त्यादिभङ्गोन्नयने स्थिते ऽसौ साक्षादुन्नेय उत लिङ्गव्यवधानेन, यथाद्यस्तदा ऽसावसिद्धः स्यादित्याशयः । द्वितीयं प्रत्याह *अथेति* लिङ्गव्यवधानेन व्याप्त्यादिविरहनिश्चयेऽनैकान्त्यादीनामन्यतमदूषणं सत्प्रतिपक्षं स्यादित्यर्थः । अतः सत्प्रतिपक्षे ऽसिद्ध्याद्यभ्युपगमः किमर्थं इति कथमवोच इत्याह * कथमिति* एवं विशेषणांशासिद्ध्या विशिष्टलक्षणासिद्धिमुपपादितामुपसंहरति * तस्मादिति * आदिना असिद्ध्यादिहीनत्वविशेषणस्य निश्चयाभावेऽपि सत्प्रतिपक्षताया दोषत्वं निराकर्तुमशक्यमिति

पुनः शङ्कते ।

६२५ पुनःशङ्का ।

स्यादेतत । अस्तु लक्षणांशस्यासिद्ध्यादिहीनत्वस्यानिश्चयः संशयोऽपि तावदस्ति ततसंशयेन शङ्कितसत्प्रतिपक्षतादोषग्रस्तत्वादेवासाधकत्वं दूष्यानुमानस्य शङ्कितबाधानिवासिद्धिशङ्कया । न च यासिद्ध्यादिश-

ङ्कामुपजीव्य सत्प्रतिपक्षादिशङ्का दोषः स्यात् सैव तदा दोष इति वाच्यम्। असिद्ध्यादिशङ्काया एव तादृशप्रतिहेतुदर्शनमूलकतया तदुपजीवकत्वादिति।

* स्यादेतादिति *, तन्निश्चयाभावे कथं दोषत्वं सत्प्रतिपक्षत्वस्य तत्राह *संशयोऽपीति* दोषहीनस्य निश्चयाभावेन नियतत्वाभावेऽपि सन्दिग्धतया पाक्षिकमस्तित्वमस्त्येवेत्यर्थः। दोषहीनत्वविशेषणस्य सन्दिग्धतया पाक्षिकप्राप्त्या किं स्यादित्यत आह * तदिति * तत्संशयेन पाक्षिकप्राप्त्या दूष्यानुमानस्य प्रथमहेतोरसाधकत्वं भविष्यति। कुत इत्यत उक्तं शङ्कितः सत्प्रतिपक्षतालक्षणो दोषस्तेन ग्रस्तत्वादिति। दोषाशङ्कया हेतोराभासत्वे दृष्टान्तमाह *शङ्कितेति* शङ्कित उपाधिर्लक्षणसंशयाच्छाकाद्याहारपरिणत्यादिर्यस्य तस्मिन्, शङ्क्यमानोपाधिनाऽसिद्धिशङ्कया ग्रस्ततया दूष्यानुमानस्य साध्यासाधकत्ववदित्यर्थः। सत्प्रतिपक्षताऽसिद्ध्यादिशङ्कामुपजीव्य दोषो भवति नान्यथा यतो दुष्टे हेतौ व्याप्तिः पक्षधर्मताया वा ऽभावेन भवितव्यमित्यादौ कथितन्यायेन तथाच सैव दोषो ऽस्तु उपजीव्यतया पुरःस्फूर्तिकत्वादित्यत आह * न चेति * कुतो न वाच्यमित्यत आह *असिद्ध्यादीति* सत्प्रतिपक्षताशङ्कामुपजीव्यासिद्ध्यादिशङ्काया जायमानत्वात्तादृशहेतुदर्शनमूलतया सन्दिग्धासिद्ध्यादिहीनप्रतिहेतुदर्शनासिद्धि सा हेतोरसिद्ध्यादिशङ्का, सत्प्रतिपक्षता

शङ्का स्यात्मनो दोषत्वार्थमसिद्ध्यादिशङ्कामुपजीव-ति, असिद्ध्यादिशङ्का तु स्वसिद्धये सत्प्रतिपक्षता-शङ्कामिति परस्परोपजीवकभावाविरोध इति यावत् ।

अतिप्रसङ्गेन निराकरोति ।

१२६ शङ्कानिरासः ।

मैवम् । यतः शङ्कितोपाधिनाऽसिद्धेनाप्येवं सत्प्रति-पक्षता प्रसज्येत। ननु भवत्वेवमपि तेन किन्नाम भवेत्? तस्यासिद्धतया हीनबलस्य सिद्धाप्रिमता पक्षबाधं विधूय न किञ्चिदन्यत् । बाधादेव तर्हि न तेन सत्प्रति-पक्षतेति चेन्न । सान्दिह्यमानासिद्धतया सत्प्रतिपक्षहे-तोरपि तर्हि कथं परहेत्वसाधकत्वप्रसाधकत्वं भविष्य-ति हेत्वाभासत्वाविशेषात् । हेत्वाभासान्तरं न दोषसं-शयापादकमतो नैवमिति चेन्न । तर्हि यमुपाधिमादा-य न्यूनबलतया बाध्यता तमादायैव तथाविधोपाधे-र्दोषसंशयक्षमत्वादेव । किञ्च क्वचित्सत्प्रतिपक्षत्वनि-श्चयाभावे संशयानुपपत्तिः ।

* मैवमिति * अतिप्रसङ्गमेव हेतुतया स्पष्टयति* यत इति * अनिश्चितदोषहीनत्वेनापि सत्प्रतिपक्षधर्म-त्वे शङ्कितोपाधितया सन्दिग्धासिद्धेनापि सत्प्रतिप-क्षधर्मता स्यादिद न्तदुदाहरणं नित्याः परमाणवो भा-वत्वे सत्यकार्यत्वादात्मवदित्यस्यानित्याः परमाणवः पृथिव्यादिजातीयत्वाद्घटादिवदित्यनेन विपक्षबाधक-

पक्षानुकूलपक्षरहिततया शङ्कितोपाधिनाऽपीत्यर्थः। नाऽयं ममक एवमिष्टत्वादेवेति चोदयति* नन्विति* ननु भवत्त्वेवमपीति केचित्पठन्ति तस्मिन् पाठे शङ्कितोपाधिनाऽसिद्धेनाऽपि सत्प्रतिपक्षता स्यादित्याशङ्क्य सिद्धान्त्येवाह * नन्विति * पुनः पृच्छति * किमिति * तेन सत्प्रतिपक्षत्वन्नभवेदित्यर्थः । प्रथमपाठ एक एवाय ङ्ग्रन्थस्तदा तेनापि सत्प्रतिपक्षत्वे किमनिष्टं स्यादित्याशयः । उत्तरमाह * तस्येति * तस्य प्रतिहेतोरसिद्धत्वेन हीनबलस्य सिध्यादिमताऽऽद्यहेतुना पक्षबाधसाध्यबाधं विहाय नान्यत् किञ्चिद्भवेत् प्रबलेन दुर्बलबाधस्य युक्तत्वादिति कालात्ययापदिष्टे ऽपि प्रकरणसमलक्षणं गतमित्यतिव्याप्तिरित्यर्थः । तर्हि शङ्कितोपाधेरुत्तरहेतोः पूर्वहेतुना बाधितत्वेनाभासत्वात्तेन प्रथमहेतोः सत्प्रतिपक्षता नस्यादिति लब्धावसरः प्रत्यवतिष्ठते * बाधादिति* अन्योन्यं समबलयोः सत्प्रतिपक्षता समबलत्वं चान्योन्यहेतुप्रतिदर्शनात् ज्ञायते बाधे तु नैवमित्याशयः।प्रतिहेतौ दोषस्य सन्दिग्धतया पूर्वहेत्वसाधकत्वबमाधकत्वं न सिद्ध्यति सन्दिग्धासिद्ध्यादितया तस्याभासत्वादिति परिहरति *समिति* हेत्वाभासेनासत्प्रतिपक्षतापादनं न घटते यदि तर्हि बाधुक्तो हेतुरसाधकः सत्प्रतिपक्षत्वादित्यपि सत्प्रतिपक्षवादिना वक्तुमयुक्तमसिद्ध्यादिहीनत्वस्यानिश्चयेन प्रतिहेतोः संदिग्धासिद्धतयाऽऽभासत्वाविशेषादित्याशयः। सोपाधिकं यदसिद्धं तन्न दोषसंशयापादकं स-

त्प्रतिपक्षस्तु तदापादको शङ्कितोपाधित्वेन न्यूनबल-
त्वाभावादतो न सोपाधिकेन सत्प्रतिपक्षतापादनाभा-
वेऽपि सत्प्रतिपक्षहेतोः परहेत्वसाधकत्वं न भवि-
ष्यतीत्यभिसन्धिराशङ्क्ते * हेत्वाभासान्तरमिति *
वैषम्यासिद्ध्या परिहरति * नेति * यदि दोषसंशय
जनकेन सत्प्रतिपक्षत्वमिष्टं तर्हि तथाविधोपाधेः शा-
ङ्कितोपाधेर्दोषसंशयक्षमत्वादेव तेनापि सत्प्रतिपक्षत्वं ।
तदेव कथमित्यत आह * तर्हि यमिति * यथा सत्प्र-
तिपक्षस्थले द्वितीयस्य दुष्टत्वसंशये प्रथमेऽपि दोष-
शङ्का तथा ऽप्राप्युपाधिसन्देहेन द्वितीयस्य सन्दि-
ग्धासिद्ध्यादिदोषतया प्रथमे ऽपि सन्देहो जायतेऽत
उभयथाऽपि दोषसंशयजनकत्वस्य तुल्यत्वान्न वैषम्य-
मित्यर्थः। यदुक्तं शङ्कितसत्प्रतिपक्षत्वं तन्न सम्भवती-
त्याह * किं चेति * उक्तयुक्त्या सर्वत्र सत्प्रतिपक्षो-
दाहरणे सत्प्रतिपक्षत्वसंशयः क्वचित्सिद्धयाभावे
कथं स्यादन्यत्रानिश्चितस्य संशयकोटित्वाभावान्निश्च-
यपूर्वकत्वात्संशयस्येत्याशयः ।

प्रकारान्तरेण लक्षणं शङ्क्ते ।

६२७ सत्प्रतिपक्षलक्षणान्तरनिरासः ।

अथान्यथाकारं लक्षणमभिधत्से असिद्धविरोधव्य-
भिचारकालात्ययापदेशविरहितया प्रतीयमानेन बोधि-
तो यदीयसाध्यस्य विपर्ययः स प्रकरणसम इति । एत
दपि विचारासहम् । केन तथा प्रतीयमानत्वमभिमतं किं
प्रत्यनुमानप्रयोक्त्रा ? अथ प्रथमानुमानवादिना ? द्वाभ्या-

मपि वा? येन केनचिद्वा? । न तावदाद्यः स्वयं दोषं जानतोऽपि दूषणान्तरापरिस्फूर्त्तौ यद्ययं दोषं न प्रतिसन्धास्यति तदाऽभीष्टमेव । अथ प्रतिसन्धास्यति तदानीमन्यथापि मत्स्फुरद्दोषान्तरस्य पराजये अनेन कक्षान्तरारूढायां कथायां शास्त्रान्तरं वा सङ्क्रमितुमवकाशमासादयिष्यामीत्यभिप्रायवतोऽल्पप्रज्ञस्य मयि वदत्यसत्पक्षोऽपि निर्व्वहतीति लोके प्रकर्षदर्शनार्थं कथमपि ग्रन्थकारादिभिरुक्तस्य वा तथाविधप्रतिहेतो र्निर्व्वाहार्थमन्यानुयुक्तस्य प्रौढप्रज्ञस्य स्फुरद्दोषेणापि प्रतिहेतुना सत्प्रतिपक्षीकरणदर्शनात् । तत्र परेण दोषानुद्भावने जयस्यापि भावात् ।

* अथेति * असिद्ध्यादिरहितेन बोधितसाध्यविपर्ययः प्रकरणसम इत्युक्त उक्तानवधारणलक्षणदोषपरिहाराय प्रतीयमानेति विशेषणमिह तु प्रतीयमानत्वविशेषणाधिक्यान्न पूर्वोक्तदोषावकाशस्तथा प्रतीयमानत्वस्य निश्चेतुं शक्यत्वाद्वस्तुतो ऽसिद्ध्यादिमत्वे ऽपि न तथा प्रतीतिरपि तु तद्धीनतयेति तात्पर्यम् । पराकरोति *एतदिति* विचारासहत्वं कथमित्यत आह * केनेति * हृदि कृतान् विकल्पान् करोति *किमित्यादिना* कस्मिन् सति किं स्यादित्यत आह * न तावदिति * अल्पप्रज्ञस्य स्वप्रयोक्तव्यप्रतिहेतावसिद्ध्यादिदोषं जानतोऽपि वादिप्रयुक्तहेतौ

सत्प्रतिपक्षत्वातिरिक्तासिद्ध्यादिदोषान्तराऽपरिवृत्तौ स्फुटदोषेणापि प्रतिहेतुना सत्प्रतिपक्षीकरणदर्शनादित्यन्वयः। व्यक्तदोषेण सत्प्रतिपक्षीकरणे को ऽभिप्रायस्तस्येत्यत आह * यदिति * यस्य वादी प्रतिहेतोर्दोषं न प्रत्यभिजानाति तदा ममैष जेतृत्वमेव ज्ञाततत्त्वस्यैव कथाधिकारादथ प्रतिसन्धास्यति तदानीमनेन– प्रतिहेतूपन्यासेन कथायां कक्षान्तरारूढायां सत्यां शाखान्तरं– पदकान्तरं सङ्क्रामयितुमवकाशमासादयिष्यामीत्यभिप्रायवतः। एवमभिप्राये मूलमाह * अन्यथाऽपीति * अप्रतिपत्तेर्विप्रतिपत्तिः श्रेयसीति न्यायादित्यर्थः। उद्दण्डपण्डितस्यापीत्थम्भूतप्रतिहेतुना सत्प्रतिपक्षीकरणं दृश्यत इत्याह * प्रौढेति * तस्याऽप्यभिप्रायमाह * मयीति * मयि वदत्यसत्पक्षोऽपि निर्वहति किमु सत्पक्ष इति लोके ख्यातिशयप्रकटनार्थम्। तस्यैव पुनराभिप्रायान्तरमाह * कथमपीति * ग्रन्थकारैर्गुरुभिर्वा प्रयुक्तस्य स्फुटदोषस्य प्रतिहेतोः कथं निर्वाह इत्यन्येन–शिष्येण वादिना वा पृष्टस्य तन्निर्वाहार्थं सत्प्रतिपक्षीकरणदर्शनात्तत्राव्याप्तिरित्यर्थः। तत्र विजयफलमपि पाक्षिकमस्त्येवेत्याह * तत्रेति * एकान्तं पराजयात्परं जयसंशय इत्याशयः।

प्रतीयमानत्वमपि किं निश्चीयमानत्वमुत सम्भावनेति विकल्प्य प्रथमं प्रत्याह।

६२८ लक्षणघटकप्रतीयमानत्वविकल्पनिरासः।

किञ्च प्रतीयमानता यदि निश्चीयमानता विवक्षिता

तदानीमसम्भव एव, यतो विरुद्धार्थयोरेकस्यावश्यं दोषः, स च कस्यास्त्विति तदा निर्द्धारयितुमशक्यतया प्रतिहेतावपि तत्संशयात् । अथ सम्भावना प्रतीयमानता, तदोद्भावनसम्भावनां दूषयन्तो यद्वक्ष्यामस्तदेव दूषणमतिदेष्टव्यम् ।

* कि चेति * असिद्ध्यादिसद्भावे सन्देहासत्वात्तद्विरहनिश्चयः किं नेष्यते इत्यत आह *यत इति* स दोषो वादिप्रयुक्तहेतुनिष्ठतया निश्चियते इत्यत आह *स चेति * द्वितीयमनुवदति * अथेति * अपवदति * तत्रेति * व्याप्तिपक्षधर्मताभङ्गाभङ्गदोषप्रकृतहेत्वपेक्षविशेषवत्त्वेनानुद्भाव्यमानतया सम्भाव्यमानेन बोधितो यदीयसाध्यस्य विपर्ययः स प्रकृतःप्रकरणसम इति लक्षणे पश्युद्भावनाकालात्पूर्वकालिकासम्भावना विवक्षिता तदा पश्चादुक्ते ऽपि प्रतिहेतुदोषे पूर्वकालिकानुभावने प्रतीकारो न कश्चिदिति सर्वहेत्वाभासः सत्प्रतिपक्षीकरणं स्या,दथोद्भावनस्य यो ऽवसरो भविष्यति तत्कालिकतया, तदा सत्प्रतिपक्षाद्युत्पादककाले स नास्तीति विशेषणाभावाल्लक्षणाभाव इत्यनुद्भावनायाः सम्भावनानिरासयुक्त्यैव निरस्तं स्यादित्याशयः ।

एवमाद्यं कल्पमपोह्य परिशिष्टानपवदति ।

१२९ द्वितीयतृतीयचतुर्थकल्पनिरासः ।

नापि द्वितीयतृतीयचतुर्थाः, परबुद्धेर्दुरवधारणतया

१ अपि इति का०मु०पु०पा० ।

परस्यासिद्ध्यादिविरहित्त्वबुद्धिरत्रे भविष्यतीत्यग्रेऽत्रभ्रा-
रयितुं प्रमाणाभावेनाशक्यत्वात् कथं सत् प्रतिपक्षतां
प्रतिज्ञाय व्युत्पादयेत्। शङ्कान्तरञ्चात्र निरसिष्यामः।

* नापीति * वादिप्रयुक्तहेतोः सत्प्रतिपक्षतां प्रतिज्ञाय लक्षणप्रदर्शनेन कथं तां व्युत्पादयेत् कथं वा नेत्यत आह * परेति * परस्यात्र प्रतिहेतावसिद्ध्यादिदोषराहित्त्वबुद्धिर्भविष्यतीति निश्चेतुमशक्यत्वादशक्यत्वं वा कथं ? परबुद्धेः प्रमाणाभावेन दुरवधारणत्वेति। प्रतिहेतावुपन्यस्ते परेण दोषानुद्भावनलिङ्गेन पश्चात् ज्ञातुं शक्यत इत्यत आह * अग्र इति * प्रतिहेतूपन्यासकाल एव तथा प्रतीयमानत्वमुपयुक्तं प्रामाणिकव्यवहारस्य निश्चयपूर्वकत्वादिति यावत्। प्रतिहेतोर्निर्दोषतया स्वेन निश्चितत्वात्परस्याप्यत्र दोषाभावबुद्धिर्भविष्यतीति सम्भावनेन दृष्टफलप्रवृत्तिवत्प्रतिहेतूपन्यास इत्यत आह * शङ्केति *

गदितमेव भङ्गं लक्षणान्तरे ऽप्यतिदिशति।

६३० दूषणातिदेशः

एतेनासिद्धिविरोधकालात्ययापदेशव्यभिचारवत्तया व्याप्तिपक्षधर्मताविरहवत्तया वा ऽगृह्यमाणेन बोधितसाध्यविपर्ययः सत्प्रतिपक्ष इति निरस्तम्। केनाऽगृह्यमाणत्वमिति निर्वक्तुमशक्यत्वात्।

* एतेनेति * पूर्वत्रासिद्ध्यादिराहित्तया प्रती-

१ विरहितया बुद्धिरत्र न भविष्यतीति सो० पु० पा०।

यमानत्वमुक्तमिह तु तद्वत्वेनाप्रतीयमानत्वमिति विशेषः। एतेनेति परामृष्टहेतुं स्पष्टयति * केनेति * प्रत्यनुमानप्रयोक्ता द्वाभ्यामपि वा केन चिद्वेति पर्यनुयुक्तेन निरूप्य दर्शयितुमशक्यतया लक्षणासिद्धेः प्रागुन्नीतनीत्येत्यर्थः।

उक्तलक्षणत्रयस्य साधारणं दूषणमाह।

६३१ लक्षणत्रयसाधारणो दोष.।

किञ्च, सर्वेषामेवैषां लक्षणानां धर्म्यादिग्राहकानुमानैर्बाधितेऽपि गतत्वादतिव्यापकत्वम्। एतेन स्वार्थानुमाने तदाभासेऽपि त्रा सत्प्रतिपक्षस्य दोषत्वमपोढम्।

* किं चेति * परमाणुः सावयवः संयोगित्वाद्घटवदित्येतस्मिन्नणुपरिमाणतारतम्यं क्वचिद्विश्रान्तं परिमाणतरतमभावत्वान्महत्परिमाणतारतम्यवदित्यनेन धर्मिग्राहकेण बाधिते ऽपि गतत्वादतिव्यापकत्वं धर्मिग्राहकप्रमाणस्योपजीव्यत्वेन व्याप्तिपक्षधर्मत्त्वस्वीकारात्तद्रहितत्वेन ज्ञायमानत्वस्यासिद्ध्यादिराहिततया समानबलत्वस्य लक्षणत्रयस्य भावादित्यर्थः। आदिपदेन लिङ्गग्राहकसङ्ग्रहः। मनो विभु ज्ञानासमवायिकारणाधिकरणत्वादात्मवदित्युदाहरणे युगपत् ज्ञानानुपपत्त्या क्रमद्रष्टृत्वलक्षणलिङ्गग्राहकबाधिते ऽपीति। यदुक्तं परयुक्तेः परस्यावधारणासम्भवेन सत्प्रतिपक्षत्वं प्रतिज्ञाय व्युत्पादयितुमशक्यमिति किं तत् स्वार्थानु-

१ बाधितेऽपीति सो० पु० पा०।
२ तद्रहितत्वेनज्ञायमानेति सो० पु० पा०।

मान एव सत्प्रतिपक्षस्य दोषत्वात्तत्र च स्वप्रयोज्यप्रतिहेतौ दोषराहित्यस्याप्रत एव प्रत्येतुं शक्यत्वादित्यत आह * एतेनेति *

यावद् धर्मिग्राहकेऽधिकबलवत्त्वं विशेषो गृह्यते सत्प्रतिपक्षे त्वगृह्यमाणविशेषबोधितसाध्यव्यतिरेकित्वं विवक्षितमतो नातिव्याप्तिरिति शङ्कते।

६३२ सत्प्रतिपक्षे विशेषशङ्कानिरासः।

अथोच्यते अगृह्यमाणविशेषेण बोधितसाध्यविपर्ययः प्रकरणसम इति। अस्तु तावत् केनागृह्यमाणत्वमित्यादिविकल्पदोषाभिधानं, यदि यः कश्चिद्विशेषो विशेषशब्देनाभिप्रेत स्तदा तदग्रहणं क्वचिदपि नास्तीति सर्वाव्याप्तिः। अथ हेतुदोषलक्षणो विशेषोऽभिमत स्तदा धर्म्यादिग्राहकानुमानबाधितेऽपि गतत्वादतिव्यापकता, अगृह्यमाणहेतुदोषरूपविशेषेण बोधितसाध्यविपर्ययत्वात्तस्यापि, तत्र हेतुदोषस्याभावादेवागृह्यमाणविशेषत्वात्। न चागृह्यमाणपरमार्थस्थितहेतुदोषरूपविशेषेणेति कृते निस्तार स्तथा सति सत्प्रतिपक्षहेतुकः सत्प्रतिपक्षो न[1] व्याप्यते। परमार्थतस्तिष्ठतीति च दर्शनीयं न च ज्ञेयमिति च महती प्रज्ञा। न चागृह्यमाणहेतुदोषहेतुगुणरूपविशेषेणेति विशेषणं विवक्षिते निस्तारः, व्यतिरेकिण्य-

१ हेतुरित्यधिकं का० मु० पुस्तके।

न्वयव्यतिरेकिणा सत्प्रतिपक्षे हेतुगुणरूपो विशेषः सपक्षसत्त्वलक्षणो गृह्यते इति तदव्यापकत्त्वापत्तेः ।

* अथेति * इदमपि प्रागुक्तदोषलङ्घनाऽजङ्घालमेवेत्याह * अस्त्विति * विशेषोऽपि यः कश्चिद्विवक्षित उत हेतुदोषरूप इति विकल्प्य प्रथममनुवदति * यदीति * उत्तरहेतुत्वादिरूपविशेषस्य ग्रहणाल्लक्षणासिद्धिरिति दूषयति * तदेति * द्वितीयमुपादत्ते * अथेति * प्रागुक्तातिव्याप्त्यैव दूषयति * तदेति * तामेवातिव्याप्तिमुपपादयति * अगृह्यमाणेति * धर्मिग्राहके हेतौ कथं हेतुदोषरूपविशेषस्याग्रहणं स्यादत आह * तत्रेति * परमार्थतो ऽविद्यमानहेतुदोषरूपविशेषो न गृह्यते यस्मिन् तस्मिन् बोधितसाध्यविपर्ययत्वं धर्मिग्राहके त्वविद्यमानस्येति न दोष इत्याशङ्क्याह * न चेति * कुतो न निस्तार इत्यत आह * तथेति * सन्निरवद्यः प्रतिहेतुर्यस्य सत्प्रतिपक्षस्य स सत्प्रतिपक्षहेतुः । आकाशमनित्यं बाह्येन्द्रियग्राह्यविशेषगुणाधिकरणत्वात् घटवदित्ययमाकाशन्नित्यन्निरवयवद्रव्यत्वादात्मवदित्यनेन सत्प्रतिहेतुना सत्प्रतिपक्षो न व्याप्येनेत्यव्याप्तिरित्यर्थः । परमार्थतः सतो ऽग्रहणमङ्गीकृत्याऽव्याप्तिरुक्ता सम्प्रति तदेव न सम्भवतीत्याह * परमार्थेति * लक्षणविशेषणतया दोषस्य परमार्थसत्वं परं प्रति प्रतिपादनीयं स्वयं च ज्ञेयमिति तदज्ञानं न सम्भवतीत्याशयः। महती प्रज्ञेत्युपहासः । अगृह्यमाणहेतुदोषरूपो हेतुगुणरूपो वा विशेषो यस्य तद्बोधितसाध्यविपर्ययत्वं प्रकरणसमत्वं वि-

षाधितमेवं च नातिव्याप्तिर्धर्म्यादिग्राहके दोषरूपवि-शेषाग्रहणे ऽप्यबाधितविषयत्वगुणरूपविशेषग्रहणा-न्नाव्याप्तिः सत्प्रतिहेतुके प्रकरणसमे गुणदोषयोर्द्व-योरप्यग्रहणादित्यत आह * न चेति * कुतो न नि-स्तार इत्यत आह * व्यतिरेकीति * क्षित्यादिकं स-र्ववित्कर्तृकं कार्यत्वादिति व्यतिरेकिणः जगत्कर्ता न सर्वज्ञः कर्तृत्वात् कुलालवदित्यन्वयिना स किञ्चिद्ज्ञः कर्तृत्वात् कुलालवदित्यन्वयव्यतिरेकिणा च गृह्यमा-णसपक्षसत्त्वलक्षणसत्प्रतिपक्षे ऽव्याप्तिरित्यर्थः ।

उक्तातिव्याप्तिपरिहाराय व्यतिरेकिणा विशे-षणान्तरं शङ्कते ।

६३१ विशेषणान्तरशङ्कानिरासः ।

अथाऽगृह्यमाणव्याप्तिपक्षधर्मताभङ्गरूपविशेषणेति क्रियते, तदा प्रष्टव्यं किमपेक्ष्य विशेषत्वमिदमिष्टं, यदि यत्किञ्चिदपेक्ष्य तदा प्रसिद्धासिद्ध्यादिभावं हेत्वा-भासमपेक्ष्य विशेषो गृह्यते सदनुमानात्मके प्रतिहेताविति तत्राव्यापकत्वम् ।

* अथेति * व्याप्तिपक्षधर्मतया भङ्गो ऽसत्त्वमभ-ङ्गश्च सत्त्वं तयोः सत्त्वं तदुभयरूपविशेषो न गृह्यते यस्य तद्बोधितसाध्यविपर्ययत्वं सत्प्रतिपक्षत्वमतो ना-तिव्याप्तिर्धर्म्यादिग्राहके तद्रूपविशेषग्रहणान्नाप्यव्याप्तिः केवलव्यतिरेकिण्यन्वयव्यतिरेकिणा सत्प्रतिपक्षे तत्रा-पि पक्षधर्मत्वादिभङ्गादेरग्रहणस्य तुल्यत्वात्सपक्षस-त्त्वविशेषे ऽपीत्यर्थः । विशेषस्य प्रतियोगिनिरूप्यतया

प्रतियोगिरूपं यत्किञ्चिदुत प्रकृतहेतुरेवेति विकल्पय-
न्नाह * तदेति * अस्तु प्रथम एव विशेषप्रतियो-
ग्युपादाने कारणाभावादिति शङ्कते * यदीति *
दूषयति * तदेति * प्रसिद्धो ऽसिद्ध्यादिभावो यस्य
हेत्वाभासस्य तमपेक्ष्य व्याप्तिपक्षधर्मतयोरभङ्गरूपो
विशेषः सदनुमानात्मके प्रतिहेताविति तदव्यापकत्व-
मित्यर्थः ।

द्वितीयमाशङ्कते ।

६३४ द्वितीयकल्पनिरासः ।

अथ प्रकृतविरोधिनं हेतुमपेक्ष्य, तदा लक्षणवाक्य-
मीदृशं पर्य्यवस्यति, व्याप्तिपक्षधर्म्मताभङ्गाभङ्गरूपः
प्रकृतहेतुतो यस्य विशेषो न गृह्यते तेन बोधितो यदी-
यसाध्यव्यतिरेकः स प्रकरणसम इति । ईदृशमप्येतद्वा-
क्यं व्याकारमर्हति । तथा हि व्याप्तिपक्षधर्म्मतेति मिलि-
तस्य भङ्गाभङ्गपदसम्बन्धे विवक्षिते प्रत्येकोदाहरणाति-
व्याप्तिः तद्भङ्गाभङ्गरूप इत्यस्य च मिलितस्य विशे-
षपदसम्बन्धेऽभिप्रेते सर्वथा सम्भवितया सर्वाव्याप्तिः।

* अथेति * अस्मिन् पक्ष इदं दूषणमिति दर्श-
यितुं लक्षणवाक्यस्य पर्यवसानं दर्शयति * तदेति *
कीदृशमित्यत आह * व्याप्तीति * एवं वाक्यं पर्यव-
सायायित्वा दूषणाभिधानायोपक्रमते * ईदृशमि-

१ उदाहरणेऽव्याप्तेरिति सो० पु० पा० ।

ति * व्याकारं व्याख्यानमित्यर्थः । व्याप्तिपक्षधर्मतयो-र्मिलितयोर्भङ्गाभङ्गपदसम्बन्ध उत प्रत्येकं, यद्याद्यः तदा वस्तुतो व्याप्तिपक्षधर्मतयोरन्यतरभङ्गादौ वा सति तदग्रहणमात्रेणासिद्धभेदेनापि सत्प्रतिपक्षता स्या-दित्येकं पक्षं यद्विरेव दूषयित्वा द्वितीयं प्रत्या-ह * तथा हीति * अनित्यः शब्दः कृतकत्वात् घटवन्नित्यः शब्दः सदकारणत्वादात्मवदित्यादौ यत्र व्याप्तेरेव भङ्गाभङ्गरूपविशेषो न गृह्यते वस्तुतः पक्ष-धर्मतायां सत्यां तत्रापि सत्प्रतिपक्षतेष्टा सा न स्यादे-वमाकाशमनित्यं महाभूतत्वात्पृथिवीवदित्यत्राकाशं नित्यं क्षणिकविशेषगुणाधिकरणत्वादात्मवदित्यत्रापि पक्षधर्मताया एव तौ न गृह्येते व्याप्तिः पुनरस्त्येव तत्रा-पि सत्प्रतिपक्षता न स्यादित्यव्याप्तिरित्यर्थः। न च वा-च्यं. वादिप्रयुक्तहेतौ पक्षधर्मताव्याप्तिभङ्गाभङ्गग्रहणे प्रतिहेतावपि तदुभयसत्त्वे तदुभयाग्रहणं तुल्यमेवेति, यतः कस्य चित्कदा चित्सत्त्येवैकतरस्मिंस्तदसत्त्वभ्रा-न्त्युपपत्तेस्तथापि वस्तुतो दोषाभावेन सत्प्रतिपक्षत्व-सम्भवादिति । भङ्गाभङ्गयोरपि मिलितयोर्विशेषप-दसम्बन्ध उत प्रत्येकं यदि प्रत्येकं तदा भङ्गरूपविशे-षाग्रहणाद्धर्म्यादिग्रहबाधिते सत्प्रतिपक्षता स्यादित्य-तिव्याप्तिरेवमभङ्गरूपविशेषाग्रहणात्सोपाध्यासिद्धेना-पि सत्प्रतिपक्षता स्यादित्येकमुद्ग्रन्थमेव परास्य प्रथमं प्रत्याह * तदिति * भङ्गाभङ्गयोर्भावाभावात्मतया विरुद्धयोरेकत्रासम्भवेन तदुभयाग्रहणासम्भवाल्लक्षणा-सम्भव इति भावः ।

दोषान्तरं वक्तुं भूमिकामारचयति।

६३१ दोषान्तरोपपादनम्।

अपि चैवमस्य वाक्यस्यार्थोवक्तव्यः व्याप्तिभङ्गरूपो व्याप्त्यभङ्गरूपः पक्षधर्मताभङ्गरूपः पक्षधर्मत्वाभङ्गरूपः प्रकृतहेतुतो विशेषो न गृह्यते यस्य तेन बाधितो यदीयसाध्यव्यतिरेकः स प्रकरणसमः, तथा सति परमाणु निरवयवो विश्रान्तपरिमाणतरतमादिभावत्वाद्व्योमवदित्युक्ते परमाणुः सावयवो मूर्त्तत्वात् घटवदिति प्रत्यनुमानेन प्रतिवाद्युक्तेन परमाणुधर्मिग्राहिणोऽप्यणुपरिमाणतरतमादिभावः क्वचिद्विश्रान्तः परिमाणतरतमादिभावत्वात् महत्परिमाणतरतमादिभाववदित्यादेः सदनुमानतयेष्टस्य पक्षधर्मताबलेन तदीयनिरवयवत्वेऽपि प्रमाणतां गतस्य सत्प्रतिपक्षता स्यात् । यश्चास्य सदनुमानतां न मन्यते तं प्रत्येवम्प्रायाणि बहून्युदाहरणानि सन्तीति तेषु प्रसङ्गः । न च सोऽपि तथाऽस्त्येव, तस्य धर्मिसिद्ध्यर्थमुपजीव्यत्वेन बलवत्वात् ।

* अपि चेति * व्याप्तिभङ्गरूपो व्याप्तेरभङ्गरूपो विशेषस्तथा पक्षधर्मतारूपभङ्गस्तदभङ्गरूपश्च विशेषो यस्य प्रकृतहेतुमपेक्ष्य न गृह्यते बाधितसाध्यव्यतिरेकः प्रकरणसम इति वाक्यार्थो वक्तव्य इत्यर्थः । यदर्थं वाक्यार्थ उक्तस्तमतिप्रसङ्गमिदानीं दर्शयति * तथे-

१ मन्यते इति का० मु० पु० पा०।

ति * विश्रान्तः परिमाणतरतमभावो यस्मिन्स त-थोक्तस्तद्भावस्तत्त्वं तस्मादादिपदेन ततो ऽप्यतिशयः स्वीक्रियते द्व्यणुकव्यवच्छेदाय । प्रतिवाद्युक्तेनानुमानेन परमाणुधर्मिग्राहिणो ऽपि तदीयनिरवयवत्वेऽपि प्रमाणतां गतस्य सत्प्रतिपक्षता स्यादिति सम्बन्धः । धर्मिग्राहकानुमानं दर्शयति * अणुपरिमाणेति * अस्तु तथेति न वक्तव्यमित्याह * स्यादिति * कथं तस्य सत्प्रतिपक्षताप्रसङ्ग इत्यत आह * पक्षेति * वाद्युक्तविश्रान्तपरिमाणतरतमादिभावत्वादिति प्रकृतहेतुमपेक्ष्य प्रतिवाद्युक्तमूर्त्तत्वहेतोः कार्यद्रव्यत्वोपाधिनाऽतीतः कालो गृह्यमाणविशेषत्वात्तेन द्वितीयेन परिमाणतरतमभावत्वादुक्तस्य तृतीयस्य धर्मिग्राहिणोऽपि सत्प्रतिपक्षता स्यादुक्तलक्षणसद्भावादित्यतिप्रसङ्ग इत्यर्थः । तर्हि परिमाणतारतम्यविश्रामाधिकरणत्वमेव निरवयवत्वं तदनधिकरणस्य रूपादेरपि निरवयवत्वात्परमाण्वनिष्टेश्च कैश्चिदित्यत आह * पक्षेति * विमतः प्रत्ययो यथार्थः प्रत्ययत्वात्सम्प्रतिपन्नवदित्युक्ते विमता प्रवृत्तिः पुरोवर्त्तिरजतज्ञानपूर्विका रजतेच्छाधीनपुरोवर्त्तिप्रवृत्तित्वात्सम्प्रतिपन्नवदित्यनेन विमतः कालो यथार्थज्ञानव्याप्तो ज्ञानकालत्वात्सम्प्रतिपन्नज्ञानकालवदित्याद्युदाहृत्य तत्र प्रसङ्गो द्रष्टव्य इत्यर्थः । नायं प्रसङ्ग एवमिष्टत्वादित्यत आह * न चेति * कुतो नेत्यत आह * तस्येति * परमाणुधर्मिग्राहिणः सावयवत्वहेतुं प्रत्युपजीव्यत्वेन ततोऽधिकबलत्वान्न तेन सत्प्रतिपक्षता धर्मिसिद्धावेव सावयवत्वधर्मस्य

साधयितुं युक्तत्वादित्यर्थः ।

धर्मिग्राहकानुमानस्य सत्प्रतिपक्षताप्रसक्तिनिवारणाय विशेषणान्तरपुरस्कारेण शङ्कते ।

६३६ विशेषणान्तरशङ्कानिरासः ।

तद्व्यवच्छेदार्थं स प्रकृतः प्रकरणसम इति कर्त्तव्यमिति चेत् तथाप्यनुपपत्तिः, अत्र हि यदि यस्य न गृह्यत इति सम्बन्धस्तेन यतसम्बन्धितया न गृह्यत इत्यर्थो विवक्षित स्तदा ऽव्यापकत्वं दोषस्तथा हि–यत्र द्वयोरपि हेत्वोः परमार्थतः साधारणो व्याप्त्यादिभङ्गः सत्प्रतिपक्षदशायामगृह्यमाणः तत्र नास्त्येतत्लक्षणं न हि तत्र व्याप्त्यादिभङ्गो विशेषोऽपि तु प्रकृतहेतुना सह साधारण एव ।

* तदिति * व्याप्तिभङ्गादिरूपः प्रकृतहेतुतो विशेषो न गृह्यते यस्य तेन बोधितसाध्यव्यतिरेकः प्रथमहेतुः प्रकरणसम इति विशेषणान्न धर्मिग्राहिणस्तथात्वं तस्य प्रथमत्वाभावादिति भावः । असमर्थमिदं विशेषणं तथापि लक्षणस्यानुपपत्तेरिति परिहरति * तथाऽपीति * कथमनुपपत्तिरित्याशङ्क्य विशेषो न गृह्यते यस्येति लक्षणवाक्ये विशेषो यस्य न गृह्यते इत्यन्वयः, किं वा यस्य विशेषो न गृह्यते, इति विकल्प्य प्रथममनुवदति * अत्रेति * दूषणाभि-

१ विशेषो इत्यधिकं का० मु० पुस्तके ।

धानाम् वाक्यस्य पर्यवसितमर्थमाह * तेनेति * यस्येति षष्ठ्यन्तपदस्य न गृह्यते इत्यनेन सम्बन्धाङ्गीकारेण यत्सम्बन्धितया न गृह्यते विशेष इति विवक्षितार्थः स्यादित्यर्थः। अस्तु को दोष इत्यत आह * तदेति * प्रतिज्ञातमव्यापकत्वमुपपादयति * तथा हीति * नित्यः शब्दः ध्वन्याद्यन्यत्वे सति श्रावणत्वाच्छब्दत्ववदनित्यः शब्दः सामान्याद्यन्यत्वे सति श्रावणत्वात् ध्वनिवदित्यादौ यत्र द्वयोरपि हेत्वोः परमार्थतः साधारणो व्याप्त्यादिभङ्गस्तत्रैतल्लक्षणं नास्ति अस्ति च सत्प्रतिपक्षत्वमित्यव्याप्तिः। एवं तर्हि सत्प्रतिपक्षत्वमेव तत्र नास्तीत्यत आह *स्यादिति* अगृह्यमाणत्वदशायां सत्प्रतिपक्षत्वमिति यावत्। कुतो लक्षणाभाव इत्यत आह *न हीति* व्याप्त्यादिभङ्गो ह्यगृह्यमाणोऽपि न विशेष इत्यर्थः। किं रूपस्तर्हि व्याप्त्यादिभङ्ग इत्यत आह * अपित्विति * साध्यद्वयसाधकतया प्रसिद्धसाधनद्वयेऽपि विद्यमानत्वात्प्रकृतहेतुना सह प्रतिहेतोः साधारण एवेत्यर्थः।

उक्ताव्याप्तिपरिहारं शङ्कते।

६३७ अतिव्याप्तिपरिहारशङ्कानिरासः।

नन्वत्यन्तासतो व्याप्त्यादिभङ्गरूपस्य विशेषस्यापि तावत्तदाग्रहणमस्ति तदादायैव लक्षणं तद्यापि भविष्यति?, तर्हि यत्र वादी स्वहेतुसाधारणं व्याप्तिभङ्गादिदोषं जानन् प्रतिहेतुनिष्ठतया परस्योद्भावयति, परश्च परिह-

र्त्तुं न शक्नोति तत्राप्येवं सत्प्रतिपक्षता ऽक्षतैव स्यात् यत उक्तरूपविशेषवत्तया तेनासौ न गृहीतः उक्तरूपस्य समानतयैव तेन गृहीतत्वात् ।

*नन्विति* यद्यप्यस्य व्याप्त्यादिभङ्गस्य हेतुद्वयविशिष्टतया साधारण्यात् विशेषता नास्ति तथाऽपि विशेषाग्रहणमस्त्येव विद्यमानव्याप्त्यादिभङ्गस्य साधारणत्वेनाविशेषत्वादन्यस्य चा ऽसत्यत्वादत्यन्तासतो ग्रहणायोगादग्रहणमस्तीत्याशयः । तेन किं स्यादित्यत आह * तदिति * तदग्रहणमादाय लक्षणं तदुदीरितोदाहरणव्यापि भविष्यति क्वचित्सतस्तस्याग्रहणं क्वचिदसतः यदि यस्य विशेष इति सम्बन्धस्तदा सत्सम्बन्धितया न चैवमित्याशयः । तर्हि यत्र सत्प्रतिपक्षता नास्ति तत्रापि लक्षणप्रसङ्ग इत्यतिव्याप्त्या दूषयति * तर्हीति * अनित्यः शब्दः कार्यत्वादित्यादौ यत्र विषये वादिप्रतिवादिभ्यां हेतुप्रतिहेतुप्रयोगे प्रतिवादी स्वहेतुसाधारणं व्याप्त्यादिभङ्गं प्रतिहेतौ जानन्नपि प्रतिहेतुनिष्ठतया परंसोद्भावयति तत्राप्येवं सति सत्प्रतिपक्षता स्यादित्यतिव्याप्तिः । व्याप्तिभङ्गस्य हेतुद्वयसाधारणत्वे कथं परं प्रत्येव तदुद्भावनमित्यत आह * परश्चेति * परश्च कृतकत्वस्यानित्यत्वेन व्याप्तत्वान्नित्यत्वेन व्याप्तिभङ्गं परिहर्तुं न शक्नोति तेन तदपरिहरणे विजयसम्भवात्तदुद्भावनमित्यर्थः । कुतः सत्प्रतिपक्षतेत्यत आह * यत इति * व्याप्त्यादिभङ्गरूपाविशेषवत्तया तेन

वादिनाऽसौ प्रतिहेतुर्न गृहीतो ऽतो ऽगृह्यमाणविशेष-प्रतिहेतुबोधितसाध्यव्यतिरेकत्वमस्त्येवेत्यर्थः । तदेव कुत इत्यत आह * उक्तेति *

यद्यपि वादिना ऽसौ प्रतिहेतुर्विशेषवत्तया न गृहीतोऽथापि प्रतिहेतुवादिना मदीयहेतोरेवायं दोष इति विशेषवत्तया गृहीतस्तेन तत्रातिव्याप्तिः प्रतिहेतुवाद्यभिप्रायेण विशेषाग्रहणस्याभावादिति शङ्कते ।

६३८ पुनः शङ्कान्तरनिरासः ।

तथापि प्रतिहेतुवादिना तावद्विशेषवत्तयैव गृहीतस्तस्य तत्साधारणभावास्फुरणात् भ्रान्त्यभ्रान्तिसाधारणस्य चात्र ग्रहणमात्रस्य विवक्षितत्वादिति चेन्न । प्रतिहेतुवाद्यभिप्रायेणागृह्यमाणतापक्षस्य प्रागेव निरस्तत्वात् । किञ्च प्रतिहेतुवाद्यपि यदि साधारणतां तस्य दोषस्य तदैव पश्येत्तदा का गतिः ? । यद्यसौ वादिहेतावपि दोषं पश्येत् तदा तमुद्भावयेत्तथा सति च तत्रैव कथासङ्क्रमः स्यात् सत्प्रतिपक्षमुपेक्ष्येति चेन्न । यदि पश्यन्नपि प्रतिवादी तत्र दोषमेवं मन्वयेत् । यदीदानीं सत्प्रतिपक्षतां प्रतिज्ञातां विहाय दोषान्तरमुद्भावयामि तदापि प्रतिज्ञातत्यागात्मम भङ्गः । अथ नोद्भावयामि तथापि प्रतिज्ञातदोषानि

१ प्रतिज्ञात्यागो नाम भङ्गोऽधिक इति का० मु० पु० पा० ।

व्याहान्मम पराजयः तदेवं वृथा दोषान्तरव्युत्पादना यास्त इति परामृश्य तूष्णीमास्ते तदा का गतिः ?।

* तथाऽपीति * कुत इत्यत आह * तस्येति * साधारणस्य व्याप्त्यादिभङ्गस्य विशेषतया ग्रहणं भ्रान्तिरेव न तु प्रमा तत्प्रमाया विवक्षितत्वान्नातिव्याप्तिपरिहार इत्याशङ्क्याह *भ्रान्तीति* भ्रान्त्यभ्रान्तिसाधारणं विशेषग्रहणं लक्षणविशेषणमतो नातिव्याप्तिरित्यर्थः। स्फुरद्दोषेणापि प्रतिहेतुना सत्प्रतिपक्षीकरणस्य प्रागेव दर्शितत्वात् प्रतिवाद्यभिप्रायेणापि लक्षणाव्याप्त्या दत्तोत्तरमिदमिति दूषयति *नेति* प्रकृतहेतुतो विशेषो यस्य न गृह्यते प्रतिवादिना तद्बोधितसाध्यव्यतिरेकः सत्प्रतिपक्ष इत्युक्तं स्यादेवं पूर्वोक्तातिव्याप्तिस्तदवस्थेत्याह * किं चेति * प्रतिहेतुवादी स्वहेतुगतदोषदर्शनकाले तस्य हेतुद्वयसाधारणतां यदि पश्येत्तदा प्रतिवादिना विशेषस्यागृह्यमाणत्वपक्षेऽपि स्यादतिव्याप्तिरित्यर्थः। अस्त्येव गतिरिति परः शङ्कते *यदीति* यदि साधारणतां प्रतिवादी वादिहेतावपि दोषं पश्येत्तदा तमुद्भावयेत्तथाऽपि को दोष इत्यत आह * तथा सतीति * तत्रैव कथासङ्क्रमः स्यात्प्रतिज्ञातं सत्प्रतिपक्षदोषमुपेक्ष्येति उद्भावनाभावादेव न तद्दोषं पश्यन्नीत्यध्यवसीयत इत्यर्थः। सत्प्रतिपक्षतात्यागेनासिद्ध्यादिदोषोद्भावनं न सम्भवतीति परिहरति * नेति * यदि पश्यन्नपि प्रतिवादी तत्र वादिहेतौ दोषं नोद्भावयति किं तु तूष्णीमास्ते तदा का गतिः

कुत एवमित्याशङ्क्याहैवं चिन्तयेदित्यादि परामृश्येत्यन्तेन। यदि सा न प्रतिज्ञाता तदा न प्रतिज्ञात्याग इति प्रतिज्ञातामित्युक्तम्। अनुद्भावनेऽपि दर्शयति: * अथेति * यदि नोद्भाव्यते तदा प्रतिज्ञातसत्प्रतिपक्षतानिर्वाहः प्रतिहेतोर्दुष्टत्वात्तु उभयत्रापि दोषदर्शनात्तूष्णीमासीनेनापि विशेषस्याग्रहणात्सत्प्रतिपक्षतायाः प्रतिज्ञाताया अनिर्वाहादतिव्याप्तिः स्यादेवेत्यर्थः।

यस्येति षष्ठ्यन्तपदस्य विशेषपदेन सम्बन्धाद्यस्य विशेषो न गृह्यत इति द्वितीयकल्प एवास्तु निरवद्यत्वादिति शङ्कते।

६३९ यच्छब्दस्यविशेषपदेन सम्बन्धेपिदोषः।

अथ यस्य विशेष इत्युक्तलक्षणवाक्ये पदसम्बन्धस्तत्राभिमतः ? तदा उक्त स्तावद्दोषो, दोषान्तरं च स्यात्। व्याप्त्यभङ्गादेर्विरुद्धार्थहेत्वोः साधारणस्यासम्भवाद्विशेषपदेनाव्यवच्छेदकेन सह विशेषणविशेष्यभावानुपपत्तेः।

* अथेति * उक्तस्तावत्परिहार इत्याह * तदेति * प्रथमपक्षोक्तदोष एवाऽत्राप्येको दोषः यत्र द्वयोरपि हेत्वोः परमार्थतो व्याप्त्यादिभङ्गः साधारणस्तत्राऽव्याप्तिस्तत्र प्रतिहेतुसम्बन्धिनो दोषस्य विशेषाभावात्तत्सम्बन्धितया च दोषो वाच्य इति। न केवलमेतावद्दोषान्तरमपीत्याह * दोषान्तरमिति * किं तद्दोषान्तरमित्याकाङ्क्षायां विशेषपदस्य सा-

धारण्यं व्यावर्त्यं वाच्यं तदभावाद्व्यर्थविशेषणते-त्याह * व्याप्तीति * व्याप्तिभङ्गादिर्विशेषपदेन सह विशेषणविशेष्यभावानुपपत्तेः। अनुपपत्तौ हेतुर्विरुद्धे-त्यादि। वस्तुतो नित्यत्वानित्यत्वादिविरुद्धधर्माध्या-सप्रसङ्गपरिहारायान्यतरसाधने व्याप्त्यादिभङ्गो वा-च्यस्तथा च भङ्गाभङ्गयोः साधारण्यं एवेति न व्या-वर्त्तकं विशेषपदमतो व्यर्थमित्यर्थः।

अगृह्यमाणेनेत्यस्मिन् स्थानेऽनुद्भाव्यमानेनेति वि-शेषणं माक्षिप्य तदेव लक्षणं शङ्कते।

६७० विशेषणान्तरप्रक्षेपशङ्कानिरासः।

अथोच्यते व्याप्तिपक्षधर्म्मताभङ्गाभङ्गरूपप्रकृतहे-त्वपेक्षविशेषवत्तयाऽनुद्भाव्यमानेन बाधितो यदीय-साध्यस्य विपर्य्ययः स प्रकृतः सत्प्रतिपक्ष इति। त-दपि नोपपन्नम्। यदि परस्त्वदीयोऽथ प्रतिहेतुरित्थं भग्न-व्याप्तिक इत्येवाभिधत्ते न तु मद्धेतुतोऽयं विशेष इत्यपि ब्रूते आभासान्तरत्वव्युत्पादनादेव प्रतिहेतोः सत्प्रतिपक्षताभङ्गात्तदापीत्थं सत्प्रतिपक्षता न निवर्त्ते-त, तथा सति च प्रतीयमानासिद्ध्यादिनापि सत्प्र-तिपक्षीकरणमिति साधु व्युत्पादितं सर्वानुमानानुकू-लं स्यात्।

* अथेति * अनुद्भाव्यमानेनेति विशेषणेन तत्रा-प्येव सत्प्रतिपक्षतैव स्यादिति यत्रातिव्याप्तिरुक्ता

तन्निरस्यते तत्र यदि प्रतिहेतुं तादृग्विशेषणतयोद्भावयतीत्युक्तत्वादिति हृदयम्। पूर्वोक्ताऽतिव्याप्तिमेव दूषयति * तदपीति * तदेवोपपादयति * यदीति * नित्यः शब्दः श्रावणत्वादित्याद्युक्ते सोऽनित्यः कृतकत्वादिति प्रतिहेतौ वादी कृतकस्यापि प्रध्वंसस्य नित्यत्वाद्गगनव्याप्तिको ऽयं तद्धेतुरित्येवं ब्रूते न पुनः प्रथमहेतुप्रतियोगिकविशेषणतया तत्रापि विशेषणतयाऽनुद्भाव्यमानेन बाधितसाध्यव्यतिरेकत्वमस्तीति लक्षणातिव्याप्तिरस्तीत्यर्थः। कुतो विशेषणतया नोद्भावयति तथात्वोद्भावनमन्तरेण सत्प्रतिपक्षत्वानिरासादित्यत आह * आभासेति * फलितमाह * तदेति * इत्थं सति सत्प्रतिपक्षता तत्रापि स्यादेव सत्प्रतिपक्षतालक्षणलक्षितत्वात्। तत्रापि तथात्वमस्त्येवेत्यत आह * तथा चेति * प्रतीयमानोऽसिद्ध्यादिर्यस्य तेनापि सत्प्रतिपक्षीकरणमिति सुष्ठूपपादितम्। असिद्ध्यादिना तथात्वस्वीकारे वा काऽनुपपत्तिरित्यत आह *सर्वेति* धूमानुमानादिभङ्गप्रसङ्ग इत्यर्थः।

अनुद्भावनमपि कदाऽपेक्षितं प्रतिहेतूपन्यासकाले किं वा पश्चाद्वादिवचनावसर इति विकल्पयति।

६४१ अनुद्भावनं विकल्प्य लक्षणदूषणम्।

किञ्च कस्मिन् काले तथाऽनुद्भाव्यमानत्वमपेक्षितं, यदि यदा प्रतिहेतूद्भावनेन परहेतुं दूषयति प्रतिवादी तस्मिन् कालेऽनुद्भावनं, तदा पश्चादुक्तेऽपि प्रतिहेतुदोषे पूर्वकालिकानुद्भावने प्रतीकारो न कश्चिदिति

सर्व्वहेत्वाभासैः सत्प्रतिपक्षीकरणमदुष्टमिति गतमनुमानकथया। अथ प्रतिवादिनाऽभिहिते यदा पुनर्वादिवचनावसर स्तदाऽनुद्भावनमिष्टं, तर्हि तत्कथमग्रे प्रत्यनुमानवादिनाऽवधारणीयमयमत्र विशेषतो दोषं नोद्भावयिष्यतीति।

*किञ्चेति* प्रतिहेतुसम्बन्धदोषानुद्भावनं तदुपन्यासकालीनमपेक्षितमिति प्रथमं शङ्कते * यदीति * पूर्वोक्तातिप्रसङ्गानिस्तार एवेति दूषयति * तदेति * प्रतिवादिना प्रतिहेतावुपन्यस्ते वादिनो वचनावसरस्तदैव दोषस्तेनोद्भाव्यते तदोद्भाविते ऽपि पूर्वकालीनानुद्भावनं लक्षणविशेषणं तथैवाऽऽस्ते इति कृत्वा प्रतीयमानासिद्ध्यादिनाऽपि सत्प्रतिपक्षीकरणप्रसङ्गात्सर्वानुमानभङ्गप्रसङ्गस्तदवस्थ एवेत्यर्थः। द्वितीयकल्पं शङ्कते *अथेति* असम्भवेनैतद्दूषयति *तर्हीति* मद्धेतावयं वादी दोषान्नोद्भावयतीति विनिश्चित्याग्रत एव सत्प्रतिपक्षतां प्रतिपादयितुं लक्षणतो नेष्टे प्रतिवादी परांशयस्य पराप्रत्यक्षत्वादित्याशयः।

वादिना दोषानुद्भावनस्य प्रतिवादिना निश्चेतुमशक्यत्वात्सत्प्रतिपक्षतां न ब्रूयादित्युक्तं तत्र दोषानुद्भावनस्य शक्याधधारणत्वं शङ्कते।

६४२ दोषानुद्भावनावधारणशङ्कानिरासः।

दोषशून्यत्वात् स्वकीयस्य प्रतिहेतोः समर्थत्त-

दवधारयितुं शक्नोतीति चेन्न। उक्तमत्र प्रतीतदोषेणाऽपि सत्प्रतिपक्षताकरणं सम्भवति तत्र परेण दोषेऽनुद्भाविते विजयश्च भवतीति। किञ्च विशेषदोषशून्यत्वमपि स्वकीयहेतोः कथमयमवधारयेत् विरुद्धार्थयो स्तावद्धेत्वोरेकस्यावश्यं दोषेण भाव्यं तत्र यथा तेन स्वहेतौ दोषो न दृश्यते तथा परहेतावपि। तद्दर्शने तमेवोद्भावयेत्। को हि सचेता निश्चितं दोषमुपेक्ष्य सदोषस्य निर्दोषसामान्येन प्रत्यवतिष्ठेत। तस्मात् सदोषेऽपि दोषमपश्यन्नयं न स्वेनादर्शनं दोषाभावे प्रमाणयितुमर्हतीति।

*दोषेति* नायं हेतुर्दोषोद्भावनयोग्यो निर्दोषत्वात्सत्प्रतिपन्नवदित्यनुमानतो निश्चिनोति प्रतिवादीत्यर्थः। भागासिद्ध्या दूषयति * नेति * प्रौढमन्नस्य लोके ऽणुप्रकर्षप्रकटनाय प्रतीतदोषेणापि हेतुना सत्प्रतिपक्षीकरणसम्भवान्निर्दुष्टहेतुनैव सत्प्रतिपक्षतानियमाभावान्न दोषशून्यत्वेनानुद्भावनं निश्चिनुम इत्यर्थः। अप्रतिपत्तेरन्यथा प्रतिपत्तिः श्रेयसीति न्यायात् विजयफलस्य पाक्षिकस्य भावाचाल्पप्रज्ञस्यापि प्रतीतदोषेण सत्प्रतिपक्षताकरणं सम्भवतीत्याह * तत्रेति * दोषशून्यत्वहेतोर्भागासिद्धिमुक्त्वाऽसिद्धिमाह * किञ्चेति * स्वकीयहेतावसि-

१ विशेषे इति सो० पु० पा०।

द्ध्यादिदोषानुपलम्भात्तथात्वमवधारयेदित्याशङ्क्यानुपलम्भमात्रं संशयहेतुर्न निश्चयकारणमिति प्रतिपादनायान्यतरदोषावश्यकतामाह * विरुद्धेति * द्वयोरपि हेत्वोर्निर्दोषत्व एकस्मिन् धर्मिणि विरुद्धधर्मद्वयासम्प्रसङ्गाद्भवितव्यमन्यतरदोषेणेत्यर्थः। यद्येवं किमत इत्यत आह * तत्रेति * प्रतिवादिना यथा स्वहेतौ दोषो न दृश्यते तथा परहेतावपीत्यनुपलम्भमात्रं न दोषशून्यत्वनिश्चायकमित्यर्थः। परहेतौ दोषानुपलम्भोऽसत्वनिश्चये हेतुरित्यत आह * तदिति * दोषान्तरानुद्भावनलिङ्गान्न दोषान्तरमसौ पश्यतीत्यर्थः। तदनुद्भावनं तददर्शने कथं लिङ्गमित्यत आह * को हीति * यथा परहेतौ दोषादर्शनं तत्र तदसत्वानिश्चायकं तथा स्वहेतावप्यविशेषादित्युपसंहरति * तस्मादिति *

उक्ताऽसम्भवपरिहाराय विशेषणान्तरं शङ्कते।

६७३ विशेषणान्तरेणाऽसम्भवशङ्कायाः परिहारः।

अथोच्यते व्याप्तिपक्षधर्मताभङ्गाभङ्गरूपप्रकृतहेत्वपेक्षविशेषवत्त्वेनानुद्भाव्यतया सम्भाव्यमानेन बोधितो यदीयसाध्यस्य विपर्ययः स प्रकृतः प्रकरणसम इति। नैतदपि सुस्थम्। यद्युद्भावनकालात् पूर्वकालिकी सम्भावना विवक्षिता तदा तात्कालिकानुद्भावनपक्षोक्त एव दोषोऽतिदेष्टव्यः। अथोद्भावनस्य यो ऽवसरो भविष्यति तत्कालिकतया, तदा सत्प्रतिप-

क्षतान्युत्पादनकाले सा नास्तीति विशेषणाभावाल्लक्षणाभावः।

* अथेति * अनुद्भाव्यमानत्वावधारणासम्भवेऽपि स्वहेतावापाततो दोषशून्यत्वावगमादनुद्भाव्यमानत्वसम्भावनाऽस्ति तेनानुद्भाव्यमानतया सम्भाव्यमानेन हेतुना बोधितसाध्यव्यतिरेकः प्रकृतः प्रकरणसम इत्यर्थः। विकल्पासहत्वेनैतद्दूषयति * नेति * वादिनो यो दोषोद्भावनकालस्तस्मात्पूर्वकालिकी सम्भावना विवक्षिता, किं स्वित्तत्कालीना, यदि वा कालमात्रसम्बन्धिनीति, विकल्प्य प्रथममनुवदति * यदीति * प्रागुक्तातिव्याप्तिरिहानुसन्धेयेति परिहरति * तदेति * पूर्वकालिकानुद्भावनासम्भावनाऽनुद्भाव्यमानदोषहेतावप्यस्तीति तेनापि सत्प्रतिपक्षता स्यादित्यर्थः। अस्तु तर्हि द्वितीयो निरवद्यत्वादिति शङ्कते * अथेति * तत्कालिकतयाऽनुद्भाव्यमानत्वविशेषणाभावाद्विशिष्टलक्षणस्य तत्कालिके सत्प्रतिपक्षे ऽव्याप्तिरित्यर्थः।

कालमात्रसम्बन्धिनी सम्भावना विवक्षितेति तृतीयकल्पं शङ्कते।

६४४ कालमात्रसम्बन्धिसम्भावनानिरासः।

अथोच्यते यावत्सम्भावनाऽनुवर्त्तते तावत्सत्प्रतिपक्षता, किं सम्भावनायाः कालनियमगवेषणेन। मैवम्। एवं हि प्रतिहेतोर्दोषेऽनुद्भाविते प्रत्युत निर्दोषतयैव स्वीकृते दोषोद्भावनसम्भावनाया निवृत्तेः स

त्प्रतिपक्षता निवर्त्तते । तथाचेत्थङ्कारमेव वादी सत्प्रतिपक्षतां परिहरेदिति साधु स्यात् । प्रतिहेतोः प्रतिक्षेपमकृत्वा स्वीकृत्यैव तत् सत्प्रतिपक्षता प्रतिक्षेप्तव्येति । न च स्वीकारादेव प्रतिहेतोः पराजयः स्यात्, सत्प्रतिपक्षतापरिहारोपायतया स्वीकारस्य करणात्, स्वीकारे सति सम्भावनानिवृत्त्या तल्लक्षणकस्य सत्प्रतिपक्षस्यापि निवृत्तेः । तस्मात् स्वीकारोऽप्ययं परस्यानिष्टार्थे सिद्धसाधने परकीयसाध्यस्वीकारवद्गुणाय, स्वीकर्त्तुर्न दोषायेति ।

* अथेति * प्रतिहेतौ दोषे निश्चिते सत्प्रतिपक्षता निवर्तते इति नायं नियमः किं तु तन्निष्ठतया दोषं नोद्भावयिष्यतीति यावत्सम्भावनाऽनुवृत्तिस्तावत्सत्प्रतिपक्षताऽनुवर्तते इति नोक्तदोष इत्यर्थः । अतः पूर्वोक्तविकल्पदूषणमनवकाशदुःस्थमित्याह * किमिति * अतिप्रसङ्गेनैतद्दूषयति * मैवमिति * अनित्यः शब्दः कार्यत्वाद्घटवदित्यत्र नित्यः स दुःखासमानाधिकरणविभुविशेषगुणत्वादीश्वरप्रमावदिति प्रतिहेतावुक्ते दोषानुद्भाने प्रतीपवृत्त्या निर्दुष्टतया स्वीकारे च दोषानुद्भावनसम्भावना निवर्तते सम्भावनायाः संशयविशेषत्वादन्यतरकोटिनिश्चये निवृत्तिरिति सत्प्रतिपक्षतानिवृत्तिरित्यर्थः । तथाऽपि किमनिष्टमित्यत आह * तथा चेति * यतः प्रतिहेतोर्नि-

१ तथा स्वीकार इति का० मु० पु० पा० ।

दुष्टतया स्वीकारेण सत्प्रतिपक्षत्वं निवर्त्तते तत्र स-
र्वत्रैतल्लक्षणं न स्यादित्यभिप्रायः। वादिना प्रतिहेतु-
रूरीकृतश्चेत्तत एव तस्य पराजयप्रसङ्गात्कथं सम्भव
इत्याशङ्क्याह * न चेति * वादिसाध्यविपरीतव्या-
प्तप्रतिहेतुरदोषतया स्वीकृतश्चेत्कथं न पराजय इत्यत
आह * स्वादिति * स्वीकारो वा कथं सत्प्रतिपक्षप-
रिहारोपाय इत्यत आह * स्वीकार इति * यस्मात्
स्वीकार एकतरकोटिनिश्चायकतया सम्भावनानिव-
र्त्तकस्तस्मादित्युपसंहरति * तस्मादिति * परोप-
न्यस्ताऽङ्गीकरणं प्रयोक्तुरेवानिष्टाय पर्यवस्यतीत्यत्र
दृष्टान्तमाह * सिद्धेति * सिद्धसाधनानुमाने प्रयु-
ज्यमानहेतुविषयस्वीकारः स्वीकर्तुरेव जयमावक्ष्य-
ति न पराजयमेवं सत्प्रतिपक्षेऽपि परकीयहेतुस्वी-
कारः स्वीकर्तुर्जयार्थमेव न पराजयार्थमित्यर्थः।

समानबलबोधितसाध्यव्यतिरेकको हेतुत्वाभि-
मतः सत्प्रतिपक्ष इति लक्षणेऽव्याप्त्यादयो दोषा
उक्ताः पुनरपि दोषान्तरं वक्तुमनुवदति।

६४५ लक्षणमनूद्य दोषकथनम्।

यदि च सत्प्रतिपक्षो वादिनोः समानप्रतिपक्षदर्श-
नजनितात्स्वहेतावाभासत्वसंशयात्, तदा क्वचिदपि ना
स्ति सत्प्रतिपक्षता, स्वहेतुपक्षपातेन परहेतावेव दोषः
कश्चिदस्ति मया तु न गृह्यत इति ताभ्यां मन्यमान-
त्वात्। यदाह "निश्चितौ हि वादं कुरुत" इति। अ

थ्यौचित्यादावर्जिता संशयेन सत्प्रतिपक्षता स्यात् तदा सर्वत्रैव वादे सर्वानुमानानां सत्प्रतिपक्षता दुर्निवारा। तद्यथा-शब्दानित्यत्वानुमानेन, बुद्धिमद्भिः शतशः शब्दनित्यत्ववादिजयात्, शब्दानित्यत्वानुमानेन च प्राज्ञैः शतशः शब्दानित्यत्ववादिजयात्। द्वयोः पक्षयोरनुमानेषु कतरद्वस्तुतः सदनुमानमित्यर्हेतौ दोषसंशयस्य दुर्निवारत्वादिति।

* यदिति * वादिप्रतिवादिनोः समबलप्रतिपक्षदर्शनेन स्वहेतावाभासतासन्देहो जायते तत एव सत्प्रतिपक्षत्वमित्याशयः। लक्ष्यासंस्पृष्टमेव लक्षणमुक्तमिति प्रज्ञाकौशलमात्मनः प्रकटीकृतं स्यादित्यभिसन्धाय परिहरति * तदेति * कुत इत्यत आह * स्वेति * स्वहेतुपक्षपातेन स्वहेतौ निर्दोषत्वनिश्चयेनाऽऽभासत्वसंशयाभावात्सत्प्रतिपक्षत्वासिद्धिरित्यर्थः। स्वहेतौ निर्दोषत्वनिश्चय इत्यत्राभियुक्तवचनमुदाहरति * यदिति * ततश्च वादिना स्वहेतावदुष्टत्वनिर्णये सति परहेतोर्दुष्टत्वेनैव निर्णयो विरुद्धहेतोरेकस्यावश्यमाभासीभवितव्यत्वादतश्च समानबलबोधितेत्यादिलक्षणं न क्वचिदपीत्यर्थः। स्वरसतः सन्देहाभावेऽप्यौचित्यादाहार्यसन्देहादेव लक्षणमुपपन्नमिति शङ्कते * अथेति * वादिनोः स्वहेतोरदोषत्वनिश्चयेऽपि परस्पर-

१ दावर्जितसंशयेनेति का० मु० पु० पा०।

विरुद्धहेतुदर्शनादन्योन्यस्मिन् हेतौ दोषसन्देहौचित्यमस्ति तत आवर्जता-ऽऽगच्छता संशयेन द्वयोरपि सत्प्रतिपक्षत्वं भविष्यतीत्याशयः। कथामात्रे प्रयुज्यमानानुमानमात्रे लक्षणमतिव्यापकमिति परिहरति * तदेति * एकस्य सत्प्रतिपक्षतामात्रेण कथं सर्वानुमानानां सत्प्रतिपक्षत्वप्रसङ्ग इत्याशङ्क्य विरुद्धहेतुदर्शननिमित्तसन्देहौचित्यस्य समानत्वादिति दर्शयति * तद्यथेति * अर्हतो-योग्यस्य ।

इति सत्प्रतिपक्षखण्डनम् ।

---

एवं सत्प्रतिपक्षं निरस्य कालात्ययापदिष्टस्य पृथगनिराकार्यतामाह ।

६४६ कालात्ययापदिष्टखण्डनारम्भः ।

प्रकारभेदाभावाच्च न कालात्ययापदिष्टः पृथक् । तद्यथा-बाधितविषयः कालात्ययापदिष्ट इत्यलक्षणम् ।

* प्रकारेति * सत्प्रतिपक्षप्रकारात्कालात्ययापदिष्टस्याप्रकारान्तरत्वात्तन्निरासः पृथगनर्थक इत्युक्तं कथं तस्या ऽप्रकारान्तरत्वं यावता पृथग्लक्षणलक्षितः स इत्यत आह * तदिति * बाधितः साध्यो विषयो यस्य स तथोक्तः प्रमाणान्तरविरुद्धे प्रतिज्ञातार्थे वर्त्तमानो हेतुः कालात्ययापदिष्ट इत्यस्यापि लक्षणवाक्यस्य नार्थतो भेदः ।

अलक्षणत्वमेवोपपादयितुं बलवता बोधितसाध्यविपर्ययत्वं बाधितविषयत्वं विवक्षितं, युताधिकव-

लेन, किं स्विदनन्यथासिद्धेनेति, विकल्पाभिसन्धिराह।

६४७ त्रिधाविकल्प्याऽऽद्यद्वयनिरासः ।

तथाहि—बाधितविषयत्त्वं किं विवक्षितं, न ताव द् बलवता बोधितो विषयविपर्य्ययो . यस्य तत्त्वम् ? यथाश्रुतस्य सत्प्रतिपक्षेऽपि गतत्वात् । तत्र प्रत्यनुमानस्य प्रथमानुमानविषयविपर्य्ययबोधकस्य पक्षधर्म्मतादिबलसम्भवात् । अथ बलवतेत्यधिकबलेनेति विवक्षितं तदापि केवलव्यतिरेकिणोऽन्वयव्यतिरेकिणा सत्प्रतिपक्षे गतत्वादतिव्यापकं, तत्रान्वयव्यतिरेकिणः प्रतिहेतोः सपक्षसत्त्वलक्षणबलाधिक्यसम्भवात् ।

*तथा-हीति* आद्यमादावपवदति *नेति* विपर्ययः साध्यस्याभावो यस्य तत्त्वं बोधितसाध्यविपर्ययत्वं बाधितविपयत्वमित्यनुपङ्गः। सत्प्रतिपक्षे लक्षणस्यातिव्यापकत्वादिति हेतुं टीकते * यथेति * तदेव कथमित्यत आह * तत्रेति * नित्यमाकाशमस्पर्शिद्रव्यत्वादात्मवदिति प्रथमानुमानसाध्यनित्यत्वाभावो बोधितो येन तस्य प्रत्यनुमानस्याकाशमनित्यं बाह्येन्द्रियग्राह्यविशेषगुणाधिकरणत्वादित्यस्य पक्षद्रव्यादिबलसत्त्वादित्यर्थः । द्वितीयं कल्पमवलम्वते * अथेति * एवमप्यतिव्याप्तिरेवेत्याह * तदाऽपीति * अस्य चोदाहरणं प्रागेव दर्शितम्। केवलव्यतिरेक्यपेक्षयाऽन्वयव्यतिरेकिणः कथं बलाधिक्यमित्यत आह *तत्रेति* पञ्चरूपत्वादन्वयव्यतिरेकिणश्चतूरूपकेवल-

व्यतिरेकिणोऽधिकबलत्वं, रूपस्यैव हेतुबलत्वादित्यर्थः।
खण्डनान्तरमाह ।

६४८ द्वितीयविकल्पस्य खण्डनान्तरम् ।

किञ्चैवं प्रत्यक्षेणानुमानाभासबाधो न स्यात् प्रत्यक्षस्येन्द्रियार्थसन्निकर्षोत्पन्नाभ्रान्तज्ञानकरणत्वमात्रं बलमनुमानस्य तु पक्षधर्म्मत्वादि भूयिष्ठं बलमिति ।

* किं चेति * अग्निरनुष्ण इत्यादि प्रत्यक्षविरुद्धकालात्ययापदिष्टे ऽव्याप्तिरित्यर्थः । अव्याप्तिमेवोपपादयति * प्रत्यक्षेत्यादिना * उत्पन्नस्याभ्रान्तज्ञानकारणत्वमात्रमदुष्टकरणजन्यत्वमात्रं बल,मनुमानस्य तु पक्षधर्मत्वादि बलं बहुलमित्यधिकबलेति विशेषणाभाव इत्यर्थः ।

अन्त्यं कल्पमुत्थापयति ।

६४९ तृतीयकल्पनिरासः ।

अथ मन्यसे ऽनन्यथासिद्धत्वं बलं विवक्षितमिदमुच्यते तेनानन्यथासिद्धेन बाधितो यदीयसाध्यस्य व्यतिरेकस्तत्त्वं बाधितविषयत्वमिति । मैवम् । तथाऽपि वस्तुतोऽनन्यथासिद्धेन सत्प्रतिपक्षेऽपि गतत्वम् ।

* अथेति * प्रामाण्यप्रकारादन्यप्रकारेण सिद्धिर्नास्ति यस्य तदनन्यथासिद्धं तच्च बलं विवक्षितं तेन शङ्कितोपाधित्वेनान्यथासिद्धानुमानाभासबाधकत्वं

१ गतत्वादतिव्यापकत्वमिति का० मु० पु० पा० ।

प्रत्यक्षस्य भवेदित्यर्थः। लक्षणवाक्यस्य पर्यवसितमर्थं दर्शयति * तेनेति * परिहरति * मैवमिति * अनित्यमाकाशं महाभूतत्वात्पृथिवीवदित्यत्र नित्यमाकाशं निरवयवद्रव्यत्वादात्मवदित्यनेनानुपलभ्यमानविशेषदशायां सत्प्रतिपक्षेऽवयवविभागं विना द्रव्यनाशानुपलब्धेरुपाधिशङ्कासम्भवेनानन्यथासिद्धेन बोधितसाध्यव्यतिरेकस्य लक्षणस्य गतत्वमित्यतिव्याप्तिरित्यर्थः।

अनन्यथासिद्धबोधितसाध्यव्यतिरेकत्वं तत्त्वमितिव्याकारे चोक्तिगौरवं दर्शयति।

६५० तृतीये गौरवप्रदर्शनम्।

किञ्चान्यथेत्यन्येन प्रकारेणेत्युच्यते अनन्यथेति चानन्येन प्रकारेण यस्मादनन्यत्वं तेनैवेत्यर्थः सम्पद्यते तथा च वक्तव्यं किं तदन्यताप्रतियोगीति ?। प्रामाण्यं तदिति चेत् अहो दुर्वैदग्धी भवतः, प्रामाण्येनेति वक्तव्ये प्रामाण्याद्योऽन्यः स यो न भवति तेन प्रकारेण यः सिद्धः प्रतीत उत्पन्नो वा तेनेति ब्रुवाणस्य।

* किं चेति * प्रकारवाचिताद्धितप्रत्ययान्तत्वादन्यशब्दस्येत्यर्थः। अन्यथाशब्दस्यैवमर्थत्वेऽपि प्रकृते किं स्यादित्यत आह *अनन्यथेति* उच्यते इत्यनुषङ्गः।

१ प्रकारान्तरेणेति का० मु० पा०।
२ दन्यत्वमिति का० मु० पु० पा०।

शक्तितः प्रतीयमानमर्थमुक्त्वा विवक्षितमाह * यस्मादिति * तथाऽपि को दोष इत्यत आह * तथा चेति * अन्यत्वस्य प्रतियोगिघटितरूपत्वात्प्रतियोगि वक्तव्यमित्यर्थः । प्रामाण्यस्यैव बाधकत्वोपयोगित्वात्तदेव प्रतियोगि इत्याह * प्रामाण्यमिति * सो ऽयं वकबन्ध इवेति परिहरति * अहो इति * दुर्वैदग्धी दुर्विदग्धता । गौरवाभावात्कथमत्र वकबन्धनन्याय इत्यत आह * प्रामाण्येनेति * प्रामाण्येन प्रकारेण यः सिद्धस्तेन बोधितसाध्यविपर्ययः कालात्ययापदिष्ट इति वक्तव्ये प्रामाण्यादन्येन प्रकारेण यः सिद्धो न भवति तेनेति पदं प्रयुञ्जताऽस्मन—

"इष्टस्यार्थस्य संसिद्धौ को विद्वान् यत्नमाचरे"दिति न्यायविषयत्वं दर्शितमित्यर्थः । सिद्धिशब्दस्य ज्ञप्त्युत्पत्त्योः पर्यायत्वात्प्रतीत उत्पन्नो वेत्युक्तम् ।

तर्हि अनन्यथासिद्धेनेति पदं विहाय प्रमाणेन बोधितो यदीयसाध्यविपर्ययः स कालात्ययापदिष्ट इति लक्षणं ब्रूमस्तत्र को दोष इत्यत आह ।

६५१ प्रमाणेनेतिपदघटितलक्षणे दोषः ।

तथापि प्रमाणेन बोधितविपर्ययो विषयो यस्य स कालात्ययापदिष्ट इति । न । इदं रजतमिति शुक्तिविषयीकुर्वति प्रत्यक्षाभासे नेदं रजतमिति प्रमाणेन बाध्यमानेऽपि हेत्वाभासविशेषलक्षणमिदं गच्छदतिव्यापकतामापद्येत । एवं बाध्यविषयिण्यामिच्छायामपि गच्छेत् । प्र-

माणेन बोधितो यदीयविषयस्यान्यथाभावः स हेतुः कालात्ययापदिष्ट इति चेन्न। यदि मुख्यार्थो हेतुशब्दः तदा हेत्वाभासत्वव्याघातः अथामुख्यार्थ स्तदा कोऽस्यार्थः यत्रैष व्यवस्थाप्यते इति सोऽभिधातव्यः। प्रमाणेन बोधितो यदीयविषयस्य व्यतिरेकः स हेत्वाभासः कालात्ययापदिष्ट इति चेन्न। यद्यग्रे हेत्वाभासत्वानिश्चयः तदा लक्षणस्य दुरवधारणत्वम्। अथ कालात्ययापदिष्टत्वे निरूपित एव हेत्वाभासत्वनिर्णय स्तदा तत एव दुष्टत्वसिद्धः कृतं पश्चात्प्रतीतिकस्य कालात्ययापदेशस्योपन्यासेनेति। तदिदं त्वन्मते लक्षणमस्तु मा वा भूत् सामुद्रिकप्रामाण्येन पुनर्महदेतदलक्षणं कालात्ययापदेशस्य, येनास्य नाम हेत्वाभासभेदपदेऽपभ्रंशः प्रासाधि।

*तथाऽपीति* बोधितो विपर्ययो यस्येति विषयविशेषणमेतत्। इदं हेत्वाभासविशेषलक्षणं प्रत्यक्षाभासेऽपि गच्छदतिव्यापकमापद्यत इति सम्बन्धः। तदुपपादनमिदं रजतमित्यादि। अतिव्याप्त्यन्तरमाह* एवमिति *, परदारेषु सुभ्रूत्वाद्यध्यासमूलायामिच्छायां परस्त्रियं न गच्छेदित्यादिशास्त्रप्रमाणेन बाधितायां गच्छेदित्यतिव्याप्तिरित्यर्थः। हेतुत्वे सति प्रमाणेन बोधितसाध्याभावः कालात्ययापदिष्ट इति विशेषणान्न प्रत्यक्षाभासादावतिव्याप्तिरिति शङ्कते *प्रमाणेनेति* लक्षणविशेषणहेतुशब्दः किं मुख्यार्थ उतोपचरितार्थ

इति विकल्प्याऽऽद्यं दूषयति * नेति * व्याप्तत्वपक्षधर्मत्वाभ्यां प्रमुदितो मुख्यो हेतुस्तदितरश्चाभासस्तथा च तयोरेकस्मिन् कालात्ययापदिष्टत्व एकप्रसङ्गे व्याघातप्रसङ्गात्। द्वितीयमुत्थापयति * अथेति * अमुख्यस्यापि हेतुशब्दार्थस्य लक्षणाविशेषणत्वाद्विशेषणाधिगतिपूर्वकत्वाद्विशिष्टाधिगमस्य लक्षणावगमाय पूर्वं स वक्तव्य इत्याह * तदेति * सो ऽभिधातव्यः यदभ्यधायि। तत्राह पूर्ववादी * प्रमाणेनेति * लक्षणविशेषणं हेत्वाभासत्वं कालात्ययापदिष्टत्वनिश्चयात्प्रागेव निश्चितं न वा न चेत्तत्राह * न यदीति * विशेषणानवधारणाद्विशिष्टलक्षणासिद्धिरित्यर्थः। कल्पान्तरमनुभाषते * अथेति * प्रथमावस्थावगन्तव्यहेत्वाभासत्वात् परहेतौ साध्यासाधकतासिद्धेर्व्यर्थः कालात्ययापदेशोपन्यास इति परिहरति * तदेति * सोपहासं लक्षणाभासोऽयमित्युपसंहरति * तदिति * सामुद्रिकं कुमारप्रणीतं स्त्रीपुरुषादिलक्षणशास्त्रम्। कथमित्यत आह * येनेति * पुरुषलक्षणालक्षणप्रतिपादकशास्त्रे पुरुषाणामायुरादिरूपपदभङ्गप्रसाधकं कररेखाद्यलक्षणमिदमपि च हेत्वाभासत्वनिश्चयादेवासाधकत्वोपपत्तेर्हेत्वाभासविशेषकालात्ययापदिष्टपदविषयत्व-भ्रंशसाधकमेतल्लक्षणस्वीकारे हेत्वाभासत्वस्य विशेषणस्य ज्ञानाज्ञानयोरुक्तन्यायेन तदुद्भावनासम्भवादतस्तन्मते तावदिदमलक्षणमित्यर्थः।

लक्षणविशेषणतया ऽवगम्यमानं हेत्वाभासत्वं न दोषत्वेनानुसन्धीयते ऽतो न कालात्ययापदेशवैयर्थ्य-

मिति शङ्कते ।

३५२ हेत्वाभासपदस्य सदृशार्थकत्वेऽपि प्रागुक्तदोषः ।

अथ ब्रूषे हेत्वाभासत्वं हेतुवदाभासमानत्वं हेतुसदृशतया प्रतीयमानत्वं न तु हेतुदोषवत्त्वमिति । मैवम् । हेतुना तुल्यता ह्यहेतुत्वावगमं विना न शक्यप्रतिपत्तिः सादृश्यस्य भिन्नाधिष्ठानस्य तथैव प्रतीतेः । अन्यथा हेतोरपि हेत्वाभासत्वापातात् । ततश्च हेतुरूपवैकल्यस्यावश्यं प्रत्येतव्यत्वेन प्रागुक्तदोषानिवृत्तिः ।

* अथेति * हेतुवदित्यस्य स्पष्टीकरणं * हेत्वित्यादि * हेतुसादृश्यप्रतिपत्त्यर्थमेव हेतुरूपवैकल्यं प्रथमतोऽवगन्तव्यमिति प्रागुक्तदोषतादवस्थ्यमिति परिहरति * मैवमिति * कुत इत्यत आह * सादृश्येति * चन्द्रवन्मुखमित्यादौ सादृश्यस्य स्वाधिष्ठानभेदप्रतीतिपूर्वकत्वेनैव प्रतीतेरित्यर्थः । विपक्षदण्डेनोक्तं द्रढयति * अन्यथेति * एतावता कथं प्रागुक्तदोषानुपङ्ग इत्यत आह * ततश्चेति *

तर्हि हेत्वाभासत्वविशेषणं परित्यज्य साध्यपदस्थाने पक्षपदं प्रक्षिप्य लक्षणमाचक्ष्महे इति शङ्कते ।

१५३ पक्षपदघटितेऽपि लक्षणे दोषः ।

प्रमाणेन बाध्यमानो यदीयपक्षव्यतिरेकः स कालात्ययापदिष्ट इति चेन्न । आश्रयासिद्ध्यापत्तात । आ-

१ दृष्टेमान्यस्य इति सो० पु० पा० ।

श्रयासिद्धव्यतिरिक्त इति विशेषणीयमिति चेन्न। विशेषणासिद्ध्याऽऽश्रयासिद्धेन सह सङ्कीर्णकालात्ययापदिष्टोदाहरणमत्रं न व्याप्येत।

* प्रमाणेनेति * सिषाधयिषितधर्मवतः पक्षत्वे तद्विशेषणसाध्याभावग्राहकस्य तद्विशिष्टपक्षाभावाग्राहकत्वान्नासम्भवो नापि प्रत्यक्षाभासेऽतिव्याप्तिस्तत्र पक्षव्यतिरेकबोधाभावादिति भावः। अतिव्याप्त्या दूषयति *नेति* गगनारविन्दं सुरभि अरविन्दत्वात् कासारारविन्दवदित्यादिराश्रयासिद्धस्तत्र हेतोराश्रयपक्षाभावस्य प्रमाणबोधितत्वादतिव्याप्तिरित्यर्थः। अतिव्याप्तिपरिहाराय विशेषणमादेयमित्याह * आश्रयेति * अव्याप्त्या दूषयति * नेति * अनित्याः प्रधानपुरुषेश्वराः पदार्थत्वादित्यपमनित्यत्वलक्षणविशेषणस्य पुरुषेश्वरत्वनित्यत्वग्राहकप्रमाणविरोधादसिद्ध्या विशेष्यप्रधानग्राहकप्रमाणासत्त्वेनाश्रयासिद्धेन सह सङ्कीर्णकालात्ययापदिष्टदृष्टान्तो न व्याप्येत इत्यर्थः।

प्रमाणेन बोधितसाध्यव्यतिरेक इति प्रागुपन्यस्तलक्षण एव न प्रत्यक्षाभासेऽतिव्याप्तिः प्रत्यक्षाविषयस्यासाध्यत्वादिति शङ्कते।

६५४ पूर्वोक्तलक्षणेऽतिव्याप्तिपरिहारशङ्कानिरासः।

प्रमाणेन बोध्यमानो यदीयसाध्यस्य व्यतिरेकः स कालात्ययापदिष्ट इति चेन्न। प्रत्यक्षाभासव्यापनात्।

तत्रापि हि साध्यस्य ज्ञाप्यरूपस्य व्यतिरेको बोध्यत एव प्रमाणेन । प्रमाणेन बोध्यमानो यदीयसाध्यस्य व्यापकस्य व्यतिरेकः स कालात्ययापदिष्ट इति चेन्न । प्रमाणेन बोध्यमानाभावस्य प्रकृतहेतुव्यापकत्वासम्भवात् । प्रमाणेन बोध्यमानो यदीयसाध्यस्य प्रतिज्ञातस्याभावः स कालात्ययापदिष्ट इति चेन्न । स्वार्थानुमाने कालात्ययापदिष्टस्यैवमव्यापनात् । तत्र शब्दरूपस्य प्रतिज्ञातस्याभावात् । शब्दस्य परार्थत्वात् । प्रमाणेन बोध्यमानो यदीयसाध्यस्य पक्षनिविष्टस्य व्यतिरेकः स कालात्ययापदिष्ट इति चेन्न । तथाभूतस्य पक्षाभासत्वाभ्युपगमेन मुख्यपक्षार्थत्वासम्भवात् । पक्षाभासनिविष्टत्वे सतीति तु क्रियमाणे पूर्वं पक्षाभासत्वप्रतीत्यप्रतीतिपक्षयोः पृथक् हेत्वाभासत्वप्रतीत्यप्रतीतिपक्षोक्तदोषवद्दोषो द्रष्टव्यः ।

* प्रमाणेनेति * साध्यपदेन ज्ञाप्यमुच्यत उत व्यापकमिति विकल्प्य प्रथमं प्रत्याह * नेति * तदेव स्पष्टयति * तत्रेति * द्वितीयं शङ्कते * प्रमाणेनेति * व्यापकशब्देन व्याप्तिकर्तृकत्वं विवक्षितमुत तथा प्रतिज्ञातत्वमुत पक्षनिविष्टत्वमिति विकल्प्य प्रथमं दूषयति * नेति * प्रमाणेन बोध्यमानो ऽभावो यस्य

। १ वक्तव्य. इति सो० पु० पा० ।

तस्येति विग्रहः । अग्निरनुष्णः कृतकत्वादित्यत्र प्रमाणेन बोध्यमानाभावस्यानुष्णत्वस्य कृतकत्वेहेतुव्यापकत्वमेव नास्तीति लक्षणासम्भव इत्यर्थः । द्वितीयं शङ्कते * प्रमाणेनेति * प्रतिपिपादयिषया पक्षवचनरूपप्रतिज्ञा यद्यपि स्वार्थानुमाने नास्ति तथाऽपि तत्राऽस्ति पक्षस्तद्विशेषणतया तन्निविष्टस्य साध्यस्याभावो विशेषणतया विवक्षितो नातोऽव्याप्तिरित्यर्थः । पक्षशब्दो मुख्यार्थोऽमुख्यार्थो वेति विकल्प्य प्रथमं निराकरोति * नेति * सन्दिग्धसाध्यस्य पक्षत्वेन निश्चितसाध्याभावस्य तथाभूतस्य मुख्यपक्षत्वासम्भवाल्लक्षणासम्भव इत्यर्थः । द्वितीयं पक्षं प्रतिक्षिपति *पक्षेति*

. पक्षे निविष्टस्य तदाभासनिविष्टस्येति वा न ब्रूमः किन्तु पक्षत्वाभिमतस्यांशस्याभावो बोध्यते प्रमाणेन यत्र स इत्यत आह ।

६५५ पक्षत्वाभिमतत्त्वेत्यस्य त्रेधा विकल्प्य दोषः ।

पक्षत्वाभिमतांशभूतस्येति च क्रियमाणे प्रष्टव्यं किं पक्षत्वाभिमतत्वं किमु पक्षतयाऽभ्युपगम्यमानत्वम् ? । अथ तत्तया प्रमितत्वम् ? । उत प्रत्यक्षतया प्रतीतत्वम् ? । नाद्यः दूषकं प्रति तदसम्भवात् तेन बाध्यसाध्यस्य पक्षाभासतयैव प्रत्युताङ्गीकारात् । अनुमानवाद्यपेक्षयाऽपि नियमाभावः सदनुमानापरिस्फुर्त्तौ मन्दप्रज्ञेन प्रज्ञाभिमानभृता च मयि वदति स्फुटदोषमविको दूषयितुं शक्त इत्यभिप्रायेण यदृच्छया ज्ञातदोष

स्यापि प्रयोगस्य सम्भवात् तत्रानुमानत्वादिना पक्षत्वाङ्गीकाराभावेन तथाभूतबाधितानुमानाव्यापकमिदं लक्षणं स्यात् । न च पक्षतयोपन्यस्यमानत्वमङ्गीकारार्थ इति युक्तं,तथा सति स्वार्थानुमाने कालात्ययापदेशाव्याप्तिः ।

* पक्षेति * किं प्रष्टव्यमित्यत आह * किमिति * पक्षतया स्वीकार,स्तथात्वेन प्रमा, उत तथा स्वप्रतीतिमात्रमेवाभिमतशब्दार्थ इति विकल्पानामर्थः । आद्यं दूषयति *नेति* अभ्युपगम्यमानत्वं प्रतिवादिना वादिना वेति विकल्प्य प्रथमेऽसम्भवमाह * दूषकमिति * असम्भवे हेतुं दर्शयति *तेनेति* बाध्यः साध्यो यस्मिँस्तस्येत्यर्थः । द्वितीयमपवदति *अनुमेति* नियमाभावोऽव्याप्तिरित्यर्थः । तामेवाव्याप्तिमुपपादयति * सादिति * ग्रन्थः स्पष्टार्थः। यत्र प्रत्यक्षादिविरुद्धतया ज्ञातदोषमप्यनुमानं वादी प्रयुङ्क्ते तत्र पक्षत्वाङ्गीकारविशेषणाभावादव्यापकमिदं लक्षणमित्याह * तत्रेति * यत्र वादी ज्ञातदोषं प्रयुङ्क्ते तत्र पक्षतयोपन्यासोऽस्ति स एवाङ्गीकारार्थ इति कथमनियम इत्यत आह * न चेति * कुत इत्यत आह * तथेति * तत्रोपन्यासाभावादुपन्यस्यमानत्वाभावः उपन्यासस्य च शब्दरूपत्वात्तस्य च परार्थत्वादित्यर्थः ।

पक्षत्वेन प्रमितत्वमभिमतत्वमिति द्वितीयं दूषयति।

६५६ पक्षत्वेन प्रमितत्वपक्षनिरासः ।

नापि द्वितीयः पक्षत्त्वेन प्रमिते विषये कालात्ययाप-

देशानवकाशात् ।

* नापीति * कथमित्यत आह * पक्षेति * साध्यधर्मविशिष्टस्य पक्षस्य प्रमितत्वे तद्विशेषणसाध्यस्यापि वस्तुत्वेन बाधायोगाल्लक्षणायोग इत्यर्थः ।

अन्निमकल्पं निरस्यति ।

६५७ तथात्वेन प्रतीतिमात्रमिति तृतीयकल्पनिरासः ।

नापि तृतीयः तदा ह्येवं लक्षणमिदं सम्पद्यते प्रमाणेन बोधितो यदीयसाध्यस्य पक्षप्रतीतिविषयांशस्य व्यतिरेकः स कालात्ययापदिष्ट इति । अस्य च वाक्यार्थस्य न कदाचिदपि सम्भवं पश्यामः यदा तावत्प्रमाणेन साध्यस्य व्यतिरेकबोध स्तदा पक्षप्रतीतिर्नास्ति विशेषदर्शने भ्रमस्यानवकाशात् ततश्च तदा पक्षप्रतीत्यभावेन तद्विषयत्वाभावात् तद्विषयांशस्येति विशेषणामात्राधीनो विशिष्टस्य लक्षणात्मनोऽभावः । यदापि च प्रमाणेन साध्यव्यतिरेकबोधनं नास्ति तदा तस्यैव लक्षणभागस्याभावाल्लक्षणाभाव इति नित्यमसत्त्वव्यवस्थितेन लक्षणेन लक्ष्यं व्यवस्थापयन् श्लाघनीयप्रज्ञो भवान् । न च वैशेषिकप्रक्रियामाश्रित्य विनश्यदवस्थापि पक्षप्रतीति स्तत्काले सम्भावनीया, तदीयसाध्यव्यतिरेकावगमनिवर्तनीया हि सा, तत्साध्यव्यतिरेकावगमश्च पूर्वतरमेव भूत इत्यवश्यमभ्युपगम्यमन्यथा प्रमाणेन

बोध्यमानत्वं कथं साध्यव्यतिरेकस्य तदाऽवगम्येत।

* नापीति * दूषणं दर्शयितुं लक्षणवाक्यस्य पर्यवसितमर्थं दर्शयति *तदा हीति* प्रमाऽप्रमासाधारणज्ञानं प्रतीतिस्तद्गोचरापन्नस्य पक्षस्यांशभूतसाध्याभावः प्रमाणेन प्रबोधितो यस्य स कालात्ययापदिष्ट इति यावत्। पर्यवसितलक्षणस्वरूपमुक्त्वा तस्यासम्भवित्वमाह * अस्येति * पक्षप्रतीतिसाध्याभावबोधयोः किमेककालत्वं विवक्षित,मुत भिन्नकालत्वमिति विकल्प्य प्रथमं प्रत्याह * यदेति * कुत इत्यत आह * विशेषेति * प्रमाविषयत्वपक्षप्रतिक्षेपादप्रमाप्रतीतिर्वक्तव्या तस्याश्च विशेषाग्रहमूलत्वात्साध्याभावरूपविशेषदर्शने नावकाश इत्याशयः।तदा तत्प्रतीत्यसम्भवे ऽपि विशिष्टलक्षणस्य ततोऽन्यत्वात्तदभावः किंनिबन्धन इत्यत आह * ततश्चेति * विशेषणातिरिक्तं विशिष्टं ये नोपयन्ति तेषां विशेषणाभावे विशिष्टाभावः स्पष्ट एव, ये तु तदतिरिक्तमुपगच्छन्ति तेषामपि विशेषणाधीनत्वाद्विशिष्टस्य प्रयोजकविशेषणाभावे तत्प्रयोज्यविशिष्टाभावो दण्डाभावे दण्डिभाववदिति भावः। अस्तु तर्हि साध्याभावबोधपक्षप्रतीत्योरसमसमयत्वं, तथा च पक्षप्रतीतिविशेषणलाभात्तद्विशिष्टं लक्षणमपि सेत्स्यतीति द्वितीयं कल्पं शङ्कते * यदेति * एकं सन्धित्सतोऽपरं ते प्रच्यवत इति परिहरति * तदेति * पक्षप्रतीतिलक्षणविशेषणाभावप्रयुक्तदोषाभावे ऽपि प्र-

माधेन बोधितसाध्यव्यतिरेकत्वमिति लक्षणांशस्या-
भावात्तदधीनो लक्षणात्मनोऽभावो दुष्परिहरः। एवं
कल्पत्रयेऽपि ,लक्षणासम्भवमभिधाय सोपहासमुप-
संहरति *इति नित्यमिति* प्रमाणेन साध्याभावबो-
धकाले तद्बोधकाले च नित्यमसत्त्वव्यवस्थितेने-
त्यर्थः । वैशेषिकमतेन साध्याभावबोधपक्षप्रतीत्यो-
रेककालत्वमाशङ्काह * न चेति * वित्तीनां बध्यघा-
तकभावो विरोध इति वैशेषिकप्रक्रिया तेन विनश्य-
दवस्था पक्षप्रतीतिः साध्याभावप्रमितिकाले विद्यते
तामादाय लक्षणं सिद्ध्यतीति शङ्काभिप्रायः। कुत
इत्यत आह * तदिति * तत्साध्यव्यतिरेकरूपविशे-
पदर्शननिवर्त्या पक्षप्रतीतिर्भ्रान्तिरित्यर्थः। अस्तु तथा-
ऽपि किमित्यत आह *तदिति* प्रमाणेन बोध्यमानत्व-
विशिष्टत्वेन ज्ञानं साध्याभावस्य बोध्यमानत्वमत-
श्चास्यापि विशिष्टज्ञानत्वात्तस्य च विशेषणविशेष्य-
ज्ञानपूर्वकत्वात्प्रथमतः पक्षसाध्याभावज्ञानमनन्तरञ्च
प्रमाणेन बोध्यमानत्वज्ञानं तदनन्तरञ्च विशिष्टज्ञा-
नं तदनन्तरं धर्मिज्ञानं पश्चाच्च प्रमाणेन बोध्यमा-
नत्वविशिष्टसाध्याभावविशिष्टपक्षज्ञानमित्यत्यन्तव्य-
वहितत्वात्पक्षप्रतीतिलक्षणज्ञानयोर्विनश्यदविनश्य-
दवस्थयोरपि न साहित्यमित्यर्थः। विपर्यये दण्ड-
माह * अन्यथेति * पक्षप्रतीतेः प्रागेव साध्यव्यतिरे-
कप्रतीत्यनभ्युपगमे प्रमाणेन बोध्यमानत्वं साध्यव्य-
तिरेकस्यावङ्गन्तुं न पार्यते विशिष्टस्य विशेषणादि-
ज्ञानपूर्वकत्वादित्यर्थः।

प्रचमतीतिविषयत्वस्य विशेषणत्वे लक्षणावगतिसाहित्याभावो दोषो, न तथा, किं नाम? उपलक्षणमतो धर्म्यवगत्यभावे ऽपि तदुपलक्षितलक्षणावगतिसम्भव इत्याशङ्क्याह।

६५८ प्रतीतिविषयत्वस्योपलक्षणत्वेऽपि दोषः।

न च वाच्यं प्रतीतिविषयत्वमिदं विशेषणं न भवति, किन्तूपलक्षणं, उपलक्षणेन चासताऽपि व्यवच्छिन्नप्रतीतिरुपजन्यते यथा काकवन्तो देवदत्तगृहा इत्युपलक्षणीभूतया काकवत्तया देवदत्तगृहस्य व्यवहारकाल इति। यत स्तत्रोपलक्ष्यदेवदत्तगृहस्य स्वाभाविको विशेषोऽस्ति व्यवहारकाले, तेन काकवत्ताऽभावेऽपि तमादाय व्यवहारनियमप्रवृत्तिः न तु तत्राऽप्यसत उपलक्षणस्य कारणत्वम्। अत्र तु व्यक्तीनामुपलक्ष्यत्वे लक्षणस्याननुगतत्वम्। अनुगतश्च किञ्चिदुपलक्ष्यं न लक्षयामहे। अत उक्तमेव वाक्यार्थमादाय प्रवर्त्तमाने लक्षणात्मके साधने विशेषणासिद्धिर्दुर्निवारा।

* न चेति * उपलक्षणविशेषणयोर्व्यावर्तकत्वसाम्यादुपलक्षणमपि सदेव व्यवच्छेदकमित्यत आह * उपेति * असदुपलक्षणं व्यवच्छेदकमित्यत्रोदाहरणमाह * यथेति * काकवन्तो देवदत्तगृहा इत्यत्र यज्ञदत्तगृहादिभ्यो देवदत्तगृहस्य व्यवच्छिन्नव्यवहार इति न च वाच्यमिति सम्बन्धः। कुतो न वाच्यमित्यत

आह * यत इति * उपलक्षणाभावेऽपि लक्षितस्य स्ट्टारुमयत्वादिः स्वाभाविको विशेषो ऽस्ति । तावता किमित्यत आह * तेनेति * कुतो ऽयं निर्णयस्तत्र स्वाभाविकविषय एव विशेषहेतुर्नासदुपलक्षणमिति तत्राह * न त्विति * असतः प्राक्सत्त्वलक्षणकारणत्वाभावादित्यर्थः । तथात्रापि प्रतीतिविषयत्वोपलक्षित एव पक्षो विशिष्टलक्षणव्यवहारं जनयेदित्यत आह * अत्रेति * पर्वतादिपक्षव्यक्तीनामुपलक्ष्यत्वेन लक्षणप्रवेशे तद्व्यावृत्त्या लक्षणाननुगतिरित्यर्थः । अस्तु तर्हि केन चिदनुगतरूपेण क्रोडीकृतानामुपलक्ष्यत्वं तत्राह * अनुगतमिति * लक्षणं ऽन्यमिरेकमनुमानं तत्र लक्षणात्मके साधने पक्षप्रतीतिविषयांशस्येति विशेषणासिद्धिरित्यर्थः ।

उक्तन्यायमन्यत्राऽप्यतिदिशति ।

६५२. हेतुत्वाभिमतत्वपक्षस्यापि निरासः ।

एतेन पूर्वशङ्कितस्य हेतुरित्यस्य प्रत्यक्षाभासव्यवच्छेदार्थमुपात्तस्य स्थाने हेतुत्वाभिमत इत्येतादृशस्य करणं दूषितप्रायम् ।

*एतेनेति* प्रमाणेन बोधितो यदीयसाध्याभावः स कालात्ययापदिष्ट इत्युक्तस्य प्रत्यक्षाभासे ऽतिव्याप्तिरुक्ता तद्व्यवच्छेदार्थं हेतुरित्युपात्तं तस्य च हेतुशब्दस्य मुख्यामुख्यार्थत्वविकल्पेन निरासोऽपि कृतस्तत्परिहाराय हेतुपदस्थाने हेतुत्वाभिमतेति विशेषणं यदि कश्चिन्निदधीत तदप्यभिमत्यर्थोक्तविक-

लपदूषणेन निरस्तमित्यर्थः ।

लक्षणान्तरं शङ्कते ।

६६० बाधितस्य लक्षणान्तरनिरासः ।

अथ नूपे प्रमाणेन बोधितो यदीयसाध्यस्याभावः स प्रत्यक्षाभासातिरिक्तः कालात्ययापदिष्ट इति । नैतदपि सुस्थम् । शब्दोपमानाभाससाधारण्यात् ।

* अथेति * अत्र हेतुपदाभावात्प्रत्यक्षाभासव्यतिरिक्तत्वविशेषणाच्च न पूर्वोक्तावद्यमित्याशयः। अतिव्याप्त्यैव दूषयति * नेति * कराग्रे करिवृन्दं रमत इत्यादिशब्दाभासे गोसादृश्यमेव गवयपदप्रवृत्तिनिमित्तमित्यवधारणफलोपमानाभासे चातिव्यापकमित्यर्थः ।

शङ्कते ।

६६१ तद्व्यतिरिक्तत्वस्य त्रेधा विकल्प्यनिरासः ।

तद्व्यतिरिक्त इत्यपि विशेषणीयमिति चेत् । एतदपि विचार्य्यताम् । किं प्रत्यक्षाभासादिव्यतिरिक्तत्वं प्रत्यक्षाभासादिभ्यो वैधर्म्यं किञ्चित् ? उत स्वरूपभेदः ? अथवाऽन्योन्याभावः ? । न तावदाद्यः तद्भेदकस्य धर्म्मस्य निर्व्वक्तुमशक्यत्वात् । नापि द्वितीयः स्वरूपस्य परस्परव्यावृत्तनया लक्षणानौपयिकत्वात् । नापि तृतीयः व्यतिरिक्तत्वस्यान्योन्याभावात्मनः प्रत्यक्षाभासादावपि भावेन तद्व्यवच्छेदानुपपत्तेः ।

*तदिति* प्रमाणेन बोधितसाध्याभावः प्रत्यक्षशाब्दोपमानाभासव्यतिरिक्त इति विशेषणीयमित्यर्थः । अविचारितरमणीयमेवैतदिति परिहरति *एतदिति* अक्षरं स्पष्टम् । आद्यमपवदति *नतात्रेति* कालात्ययापदिष्टस्य प्रत्यक्षाभासादिभ्यो वैधर्म्यमप्यनिरूपितं निरूपितत्वे वा तदेव लक्षणमास्तां सन्निहितप्रतिपत्तिकत्वादित्यर्थः । द्वितीयं दूषयति * नापीति * परस्परमन्यत्वेनैकैकस्य लक्षणप्रवेशो ऽव्याप्तिर्मिलितानामसम्भव इत्यर्थः । अनौपयिकत्वादसाधनमिति यावत् । अन्तिमं दूषयति * नापीति * व्यतिरिक्तत्वं ह्यन्योन्याभावस्तच्च प्रत्यक्षाभासादावप्यस्तीति तद्व्यावृत्त्यनुपपत्तेरित्यर्थः ।

एक एव त्रैलोक्ये ऽन्योन्याभाव इत्यङ्गीकृत्योक्तातिव्याप्तिं परिहर्तुं शङ्कते ।

६६२ अन्योन्याभावस्यैकत्वेनातिव्याप्तिशङ्काया परिहार ।

ननु न व्यतिरिक्तत्वमात्रमन्योन्याभावस्वरूपं विशेषणमस्माभिरुपात्तं, किन्नाम? प्रत्यक्षाभासादिभ्यो व्यतिरिक्तत्वं, न च प्रत्यक्षाभासादयः स्वात्मभ्य एव भिन्ना स्तत्कथमुक्तस्य प्रसङ्गस्यावकाशः । अवगतमिदं त्वद्विवक्षितं, एतदेव विचार्य्यते किं प्रत्यक्षाभासादिभिर्विशेषितोऽसावन्योन्याभाव स्त्वयोच्यते ? उत तैरुपलक्षितः यं प्रत्यक्षाभासादिष्वप्रसक्तं मन्यसे ? । आद्यस्तावन्न सम्भवति न हि प्रतियोगिरूपविशेषणसहि-

तोऽभावः कश्चिदप्यस्ति ततस्तादृशस्य विवक्षितत्वे सर्व्वाव्याप्तिः । द्वितीये तु प्रत्यक्षाभासादिभिरुपलक्षणे यदुपलक्ष्यमन्योन्याभावस्य स्वरूपमेकं तत्प्रत्यक्षाभासादिषु बाधितानुमानेषु च साधारणमिति कथं नोक्तदोषप्रसङ्गः ।

* नन्वियति * किं तर्हि विशेषणत्वेनोपात्तमित्यत आह*किमिति* प्रत्यक्षाभासादिप्रतियोगिकव्यतिरिक्तत्वविशेषणेन वा को लाभस्तत्राह *न चेति * फलितमाह *तदिति * अप्रतिपत्तिर्नाम निग्रह इत्यर्थः । अप्रतिपत्तिं परिहरति *अवगतमिति* तर्हि लक्षणं सुस्थमिति चेन्न। विचारासहत्वादित्याह *एतदिति* विचारमेव दर्शयति *किमित्यादि*,कस्मिन् सति किं स्यादित्यत आह *आद्य इति* असम्भवमुपपादयति *नहीति* भूतलनिष्ठो घटाभावो न स्वप्रतियोगिघटविशिष्टो वर्त्ततेऽभावत्वाविशेषादन्योन्याभावो न स्वप्रतियोगिविशेषणो धर्मिणि वर्तितुमुत्सहते दृष्टिविरोधाचेत्यर्थः।तथाऽपि किमनिष्टमित्यत आह *तत इति* सर्वाऽव्याप्तिरसम्भवः।(यथा प्रत्यक्षव्यतिरिक्तत्वमनुमानेऽस्ति तथा प्रत्यक्षाभासादिविशिष्टव्यतिरिक्तत्वं कालात्ययापदिष्टे किं न स्यादित्यत आह * कथमिति * विशेषस्थितेः व्यावृत्ततया स्वीयानुमाने विशेषात्मभावस्य विशेषात्मना यो भवति तस्य व्यावृत्तरूपस्य प्रत्यक्षस्य कथं व्यवस्थानं न कथमपीति योजना,। इदमाकूतं यदि प्रत्यक्षविशिष्टव्यतिरिक्तत्वमनुमाने वर्तते तदा

१ () एतदन्तर्गतो भागोऽसंलग्न इवभाति ।

प्रत्यक्षमपि व्यतिरिक्तत्वविशेषणतया तत्र वर्त्तेत न चैतद्घटते ऽतो दृष्टान्तदार्ष्टान्तिकयोर्दोषग्रस्तत्वमिति । यद्वा प्रत्यक्षाभासविशिष्टस्य व्यतिरिक्तत्वस्य कालात्ययापदिष्टवृत्त्याभासविशेषणतया प्रत्यक्षस्यापि तत्र वृत्तिः स्यात्सा कथं स्यादित्यर्थः । ) प्रत्यक्षाभासादय उपलक्षणमन्योन्याभावस्येति द्वितीयं निरस्यति * द्वितीयेति * अभावस्य स्वरूपेण भेदानभ्युपगमाज्जात्याद्यसम्भवाच्च प्रतियोगिद्वारको भेदो वक्तव्यः स न सम्भवति प्रतियोगिनामुपलक्षणत्वेन बहिर्भावादतश्चान्योन्याभाव एक एवेति प्रत्यक्षाभासादिषूक्तातिव्याप्तिस्तदवस्थेत्यर्थः ।

यदुक्तं प्रतियोगिविशिष्टाभावस्य धर्मिवृत्तौ प्रतियोगिनोऽप्यभावसहवृत्तिता स्यादिति तत्परिहारं शङ्कते ।

६६३ पुनः शङ्कान्तरनिरासः ।

अन्यदस्तु सदात्मकं विशेषणं प्रतियोगी स्वभावस्यास्त्वेव तज्ज्ञानस्य विशेष्ये. व्यावृत्तबुद्ध्याधानाविरोधात् विशेषणस्म्भवतीति चेत् । अयुक्तमेतत् । विशिष्टं तावदभावस्य स्वरूपमिहोपात्तं तच्च विशेष्यमात्रशरीरं न भवितुमर्हति तथा सति विशेष्यस्वरूपमेवोच्यतां वृथा विशेषणपदोपन्यासः तदनुपन्यासे चान्योन्याभावत्वमात्रमुपन्यस्तं भवेत् तच्च प्रत्यक्षाभासादे र्व्यवच्छेदस्यापि सङ्ग्राहकं ततश्च विशेष्यादन्योन्याभावा-

दधिकं किञ्चिद्वक्तव्यं तद्विशिष्टमुपन्यस्यताम् । स च यदि प्रतियोगी तदीयोऽभिधीयते तर्हि तस्याभावात्तदानीं विशिष्टाभावः प्रसक्तः । विशेष्यमात्रं परिशिष्टं तच्च केवलमतिप्रसक्तं तस्माद्विशिष्टव्यवहारप्रवर्त्तनकाले विशेष्यातिरिक्तं किञ्चिदनभ्युपेत्य विशिष्टसत्ता व्यवहर्त्तुमशक्या, अतः प्रतियोगी नाभावस्य विशेषणं भवितुमर्हति उपलक्षणन्तु स्यात् तत्र चोक्तमेव । नचान्योन्याभाव एकोन भवति भिन्नप्रतियोगिकौ द्वावभावौ तौ तथा च प्रतियोगिलक्षितं तत्स्वरूपमन्यदेवेति सिद्धान्ताविरोधि ।न च युक्तम्, उभयं ह्यन्योन्याभावस्यैकात्मतया प्रतियोगि एकात्मतायाश्च भेदविरोध एव । ततश्च येन च रूपेण प्रतियोगित्वं तेन रूपेण भेदानवकशात् भिन्नप्रतियोगिकता कुतोऽन्योन्याभावस्य। येन च रूपेण भिन्नता तेनान्योन्याभावं प्रति प्रतियोगिता नास्ति वस्तुनोः ।

* अन्यादिति * गुणकर्म्मादि भावरूपविशेषणमन्यदुच्यते विशेषणत्वात्प्रतियोगिनो ऽपि सत एवाभावविशेषणत्वमित्यत आह * प्रतीति * असत्वे विशेषणत्वमेव तस्य कथमित्यत आह * तदिति * व्याप्तिजनकत्वं प्रकृते विशेषणत्वं प्रतियोगिनश्च ज्ञानावच्छेदद्वाराऽभावव्याप्तिप्रमितिजनकत्व-

मस्त्येव प्रतियोगिज्ञानेनाभावव्यावर्त्तनादित्यर्थः । यद्यप्ययं ग्रन्थो युक्तः प्रथमकल्पदूषणावसाने तथाऽपि सम्प्रदायतो ग्रन्थार्थोऽवगन्तव्य इत्यत्र विरचित इति द्रष्टव्यम् । भवेदप्येवं यद्यन्योन्याभावभेदः स्यात्तद्भेदे तु सैव व्यक्तिरेकैव कथितेतिस एव प्रसङ्ग इत्यभिसन्धाय दूषयति *अयुक्तमिति* तदुपपादनाय स्वरूपमिहोपात्तमभावस्य दर्शयति * विशिष्टमिति * ततः किमित्यत आह * तचेति * विशेष्यव्यतिरेकेण विशिष्टस्वरूपानिरूपणात्तन्मात्रमेवत दित्याशङ्क्याह * तथा सतीति * प्रत्यक्षाभासाद्यन्योन्याभाव इत्यत्राभावपदार्थातिरिक्ताभावाद्विशेषणं प्रत्यक्षाभासादिपदं व्यर्थमित्यर्थः । वैयर्थ्याद्विशेषणोपन्यास एव न क्रियते तर्हीत्यत आह * तदिति * अन्योन्याभावमात्रोपन्यासे वा को दोष इत्यत आह * तचेति * तन्मात्रं प्रत्यक्षाभासादावस्तीति तद्विशिष्टं लक्षणं तत्रातिव्यापकं स्यादित्यर्थः । विशिष्टाभावस्वरूपं विशेष्यशरीरमात्रं न भवितुमर्हतीति यत्प्रतिज्ञातं तात्सिद्धमुपसंहरति *ततश्चेति* ततो वा किमित्यत आह * स चेति * अभावकाले प्रतियोगिनोऽभावात्तद्विशिष्टोऽभावो लयमित्यादिति लक्षणाऽसम्भव इत्यर्थः । किन्तर्हि तत्र परिशिष्यत इत्यत आह *विशेष्येति* तर्हि तदेव लक्षणमास्तां सिद्धस्यैव लक्षणत्वादित्यत आह *तचेति* विचारफलमुपसंहरति *तस्मादिति* अतो द्वितीयः पक्षः परिशिष्यत इत्याह *अत इति * सोऽपि न घटत इत्याह * तत्रे-

ति* अन्योन्याभावस्यैकत्वे स्यादिदं त्वदुक्तं तन्न किन्तु प्रत्यक्षाभासादिप्रतियोगिकोऽन्योन्यश्च कालात्ययापदिष्टप्रतियोगिक इति कृत्वा प्रत्यक्षाभासादिलक्षितान्योन्याभावस्य प्रतियोगिरूपमाह *उभयमिति* प्रतियोगिरूपविशेषोपन्यासेन किमत्र दूषणमुक्तमित्यत आह * एकेति * एकत्वस्याभेदैकार्थसमवायिनो भेदविरोध इत्यर्थः । ततो वा किमित्यत आह * तत्रेति * तथापि प्रत्यचाश्चाभासकालात्ययापदिष्टौ द्वावेव, नतु कुतो भिन्नप्रतियोगित्वाभाव इत्यत आह * येनेति *

असत्प्रतियोगित्वप्रसङ्गभयात्तादात्म्यप्रतियोगित्वमेवान्योन्याभावस्य नोपपद्यते घटपटयोस्तादात्म्यस्यासिद्धेरिति चोदयति ।

९६५ धर्मिप्रतियोगिनोः प्रकृते वैलक्षण्यानिरूपणम् ।

ननु वस्तुतस्तयोरेकत्वाभावात्कथमेकतया प्रतियोगित्वमन्योन्याभावं प्रति घटेत वस्तुनः[1] । यथा वस्तुतो भूतलसंसर्गाभावेऽपि घटस्य भूतलसंसृष्टतया संसर्गाभावं प्रति, तत्र यथाऽन्यद् भूतलसंसृष्टतया[2] दृष्टं तथाऽत्रापि तावेव सप्रकारभेदौ तदात्मानौ दृष्टौ, सोऽयं त्वद्दर्शनाभिप्रायो नास्माकं निर्वाहाई इत्यास्तां विस्तरः ।

* नन्विति * नेह भूतले घट इत्यादिनिषेधस्य

१ वस्तुनो इति का० मु० पु० पा० ।
२ संसृष्टतया इति सो० पुस्तके नास्ति ।

या गतिः सा तत्रापि भवतीति परिहरति *यथेति* प्रतियोगित्वमिति प्रश्नवाक्यादनुषज्यते। तत्र किं तद्देशकालासंसृष्टो घटः प्रतियोगी किं चैतद्देशकालीन इहारोप्यमाणः प्रतियोगी, न तावदाद्यस्तत्र स घटो नासीदिति प्रतिषेधापत्तेर्नापि द्वितीयो ऽत्यन्ताऽसत्प्रतियोगिकतापत्तेः सत्त्वे वा निषेधस्यैवायोगादिति तृतीयस्तत्राह * तत्रेति * इहारोप्यमाणः प्रतियोगीति शेषः। तर्ह्यत्रापि घटतादात्म्यं घटे दृष्टं पटे आरोप्य निषिध्यते तादात्म्यं च पटे दृष्टं घटे निषिध्यत इति समः समाधिरित्याह * तथेति * अन्योन्यस्मिन्निषिध्यत इति शेषः। घटतादात्म्यशब्देन घटस्यैवाभिधानात्पटतादात्म्यशब्देनापि तस्यैवाभिधानात्तयोश्च भिन्नत्वात्कथमेकप्रतियोगिकत्वमित्यत आह * सोऽयमिति * अन्योन्याभावस्य तादात्म्यप्रतियोगित्वं त्वयोरीकृतं तच्चेज्ज्यते चेदपसिद्धान्तो नोचेदसत्प्रतियोगित्वमिति निर्वहणीयो नास्माभिरित्यर्थः।

धर्मिप्रतियोगिभावावच्छिन्नतयैवान्योन्याभावोपलम्भात्तदुपलम्भात्प्रागेव प्रतियोग्यधिकरणयोरसाङ्कर्यं वैलक्षण्यं वक्तव्यं तत् घटादौ सम्भवेदपीत्याह।

६६४ तादात्म्यप्रतियोगिकत्वं भेदस्य नेति शङ्कायां निरासः।

अपिच घटपटयोः स्वरूपभेदेन वैधर्म्यभेदेन चोभयकोटीकृतयोरन्योन्याभावनिरूपणं भवति। अत्र तं प्रत्यक्षाऽभासादेः प्रत्यक्षाभासत्वादिना एककोटिताऽस्तु नाम, यत्तु प्रत्यक्षाभासत्वादिभ्यो व्यतिरिक्त-

ति* अन्योन्याभावस्यैकत्वे स्यादिदं त्वदुक्तं तन्न किन्तु प्रत्यक्षाभासादिप्रतियोगिकोऽन्योन्यश्च कालात्ययापदिष्टप्रतियोगिक इति कृत्वा प्रत्यक्षाभासादिलक्षितान्योन्याभावस्य प्रतियोगिरूपमाह *उभयमिति* प्रतियोगिरूपविशेषोपन्यासेन किमत्र दूषणमुक्तमित्यत आह * एकेति * एकत्वस्याभेदैकार्थसमवायिनो भेदविरोध इत्यर्थः । ततो वा किमित्यत आह * तत्रेति * तथापि प्रत्यक्षाभासकालात्ययापदिष्टौ द्वावेव, तत् कुतो भिन्नप्रतियोगित्वाभाव इत्यत आह * येनेति *

असत्प्रतियोगित्वप्रसङ्गभयात्तादात्म्यप्रतियोगित्वमेवान्योन्याभावस्य नोपपद्यते घटपटयोस्तादात्म्यस्यासिद्धेरिति चोदयति ।

९६५ धर्मिप्रतियोगिनोः प्रकृते वैलक्षण्यनिरूपणम् ।

ननु वस्तुतस्तयोरेकत्वाभावात्कथमेकतया प्रतियोगित्वमन्योन्याभावं प्रति घटेत वस्तुनः[1] । यथा वस्तुतो भूतलसंसर्गाभावेऽपि घटस्य भूतलसंसृष्टतया संसर्गाभावं प्रति, तत्र यथाऽन्यद् भूतलसंसृष्टतया[2] दृष्टं तथाऽत्रापि तावेव सप्रकारभेदौ तदात्मानौ दृष्टौ, सोऽयं त्वद्दर्शनाभिप्रायो नास्माकं निर्वाहाहं इत्यास्तां विस्तरः ।

* नन्विति * नेह भूतले घट इत्यादिनिषेधस्य

---

१ वस्तुनो इति का० मु० पु० पा० ।

२ संसृष्टतया इति सो० पुस्तके नास्ति ।

या गतिः सा तत्रापि भवतीति परिहरति *यथेति* प्रतियोगित्वमिति प्रश्नवाक्यादनुषज्यते। तत्र किं तद्देशकालासंसृष्टो घटः प्रतियोगी किं वैतद्देशकालीन इहारोप्यमाणः प्रतियोगी, न तावदाद्यस्तत्र स घटो नासीदिति प्रतिषेधापत्तेर्नापि द्वितीयो ऽत्यन्ताऽसत्प्रतियोगिकतापत्तेः सत्वे वा निषेधस्यैवायोगाद्यदि तृतीयस्तत्राह * तथेति * इहारोप्यमाणः प्रतियोगीति शेषः।तथात्रापि घटतादात्म्यं घटे दृष्टं पट आरोप्य निषिध्यते तादात्म्यं च पटे दृष्टं घटे निषिध्यत इति समः समाधिरित्याह * तथेति * अन्योन्यस्मिन्निषिध्यत इति शेषः। घटतादात्म्यशब्देन घटस्यैवाभिधानात्पटतादात्म्यशब्देनापि तस्यैवाभिधानात्तयोश्च भिन्नत्वात्कथमेकप्रतियोगिकत्वमित्यत आह * सोऽयमिति * अन्योन्याभावस्य तादात्म्यप्रतियोगित्वं त्वयोरीकृतं तत्त्यज्यते चेदपसिद्धान्तो नोचेदसत्प्रतियोगित्वमिति निर्वहणीयो नास्माभिरित्यर्थः।

धर्मिप्रतियोगिभावावच्छिन्नतयैवान्योन्याभावोपलम्भात्तदुपलम्भात्प्रागेव प्रतियोग्यधिकरणयोरसाङ्कर्यं वैलक्षण्यं वक्तव्यं तत् घटादौ सम्भवेदपीत्याह।

६६४ तादात्म्यप्रतियोगिकत्वं भेदस्य नेति शङ्कायां निरासः।

अपिच घटपटयोः स्वरूपभेदेन वैधर्म्यभेदेन चोभयकोटीकृतयोरन्योन्याभावनिरूपणं भवति । अत्र तु प्रत्यक्षाऽभासादेः प्रत्यक्षाभासत्वादिना एककोटिताऽस्तु नाम, यत्तु प्रत्यक्षाभासत्वादिभ्यो व्यतिरिक्त-

* अपि चेति * अन्योन्याभावभेदेनोभयकोटी-
तान्योन्याभावनिरूपण आत्माश्रयादिप्रसङ्गात्स्व-
रूपभेदेत्याद्युदितम्। स्वरूपभेदादिनोभयकोटीकृतयो-
रन्योन्याभावनिरूपणनियमश्चेदत्रापि तथैवाऽस्त्वित्यत
आह * अत्र त्विति * प्रत्यक्षाभासान्वितायनुगत-
मेकं नास्ति तथाऽप्यङ्गीकारः। तर्हि प्रत्यक्षाभासादित्वेन
एकेककोटिं कृत्वा रूपान्तरेण कालात्ययापदिष्टं परां
कोटिं कृत्वा तयोरितरेतराभावनिरूपणं सुकरमित्यत
आह * यत्त्विति * अनुगतमेकं रूपं सङ्ग्राहकं नोपल-
भ्यत इत्यर्थः। मासीदनुगतं रूपं प्रतिव्यक्ति व्यावृत्त-
रूपेणैव तदुपपत्स्यतेति तत्राह * नेति * एककोटी-
करणमिति शेषः। कुत इत्यत आह *तेषामिति* प्र-
माणबोधितसाध्यव्यतिरेकित्वं यन्नाम विशेष्यं प्रत्य-
क्षाभासादिव्यतिरिक्तत्वविशेषणेन विशेषणीयं त-
द्रूपकोडीकृततया तन्निरूपणमस्तीत्यत आह * ना-
पीति * तत्रैव तिष्ठदेव सङ्ग्राहकं वक्तव्यमिदं तु नैव-
मित्याह * तस्येति * प्रमाणेन बोधितसाध्यव्यतिरे-
कत्वस्य विशेष्यरूपस्य प्रत्यक्षाभासादिसाधारणतया
कोटिद्वैविध्यभङ्गप्रसञ्जकतयेतरेतराभावनिरूपणविरो-
धितया स्वरूपभेदादिनोभयकोटीकृतयोरेवेतरेतरा-
भावनिरूपणमिति यदीरितं प्राक्तत् सिद्धमित्युपसंह-
रति * तस्मादिति * स्वरूपभेदस्यानुगमेन निर-
स्तत्वाद्धर्मभेदपक्षपरिशेष इत्याशयः। अस्तु तर्हि स
एव व्यवस्थापक इत्यत आह *न चेति* प्रमाणाविरुद्ध-